प्रयोगो भार्गवः, पावकोऽग्निर्बार्हस्पत्यो वा, गृहपति-यविष्ठौ सहसः पुत्रावन्यतरो वा । अग्निः । गायत्री । ( ऋ० ८ । १०२ । २२ )

अग्निमिन्धानो मनसा धियं सचेत मर्त्यः । अग्निमीधे विवस्वभिः ॥१९॥

वत्सः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ६ । ३० )

आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥२०॥

प्रयोगो भार्गवः, पावकोऽग्निर्बार्हस्पत्यो वा, गृहपति-यविष्ठौ सहसः पुत्रावन्यतरो वा । अग्निः । गायत्री ( ऋ० ८ । १०२ । ७ )

अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥२१॥

अग्निमिन्धानो मनसा धियꣳसचेत मर्त्यः । अग्निमिन्धेविवस्वभिः ॥१९॥

आदित्प्रत्नस्य रेतसो ज्योतिः पश्यन्ति वासरम् । परो यदिध्यते दिवि ॥२०॥

अग्निं वो वृधन्तमध्वराणां पुरूतमम् । अच्छा नप्त्रे सहस्वते ॥२१॥

॥ असंगम् । ( आसंगः ) ॥ अत्रिर्गायत्र्यग्निः ॥

(१९) अग्निमिन्धानोमनसौ । हौहोवाहाइ ॥ धियꣳसचेतमौ । होऽ३हाऽ३ ॥
होऽ२३४र्तियाः॥ अग्नायेऽ३म् । आऽ२इंधाऽ२३४औहोवा॥ विवस्वभीऽ२३४५ः॥ (छू।३३)
( दी० ८ । प० ८ । मा० ६ ) १४

॥ निधनकामम् । प्रजापतिर्गायत्र्यग्निः ॥

(२०) आदित्प्रत्नाऽ५स्यरेतसाः॥ ज्योतिःपश्यंतिवासाऽ२राम् ॥
परोयाऽ२दिध्यताइ॥ दिवि । होइ । होइ । औहोऔहोवाऽ२३४५हाउ ॥ वा ॥ (छू । ३४)
( दी० ८ । प० ८ । मा० ६ ) १५

पञ्चदश । द्वितीयः खण्डः । इति ग्रामगेयगाने प्रथमस्यार्द्धः प्रपाठकः ॥

॥ सैंधुक्षितानि त्रीणि । त्रयाणां सिंधुक्षिद्गायत्र्यग्निः । स्वारं सैन्धुक्षितम् ॥

(२१।१) आग्निंवोवृधान्ताम्॥ आध्वराणाम् । पुरूतामौ । होवाऽ३हाइ ॥
आछाऽ२नाप्त्रेऽ२३॥ सहोऽ२३४वा । स्वाऽ५तोऽ६हाइ ॥  ( फी । ३५ )
( दी० ५ । प० ७ । मा० ४ ) १

(२१।२) अग्निंवाऽ६ए ॥ वृधन्ताम् । अध्वराणांपुरूतममच्छाऽ२होऽ१इ॥ नाऽ२३प्त्रे ।
सहास्वाऽ२३४५ताऽ६५६इ॥ ईऽ२३४वा ॥ ( दी० ३ । प० ६ । मा० ४ ) २ ( टी । ३६ )

॥ ऐडं सैंधुक्षितम् ॥

(२१।३) अग्निंवः । ओहाइ॥ वृधाऽ२३न्ताम् । अध्वराणांपुरूऽ१ताऽ३माम् ॥
अच्छानप्त्रोऽ२३४हाइ॥ साहाऽ३हा । स्वता । औऽ३होवा । होऽ५इ॥ डा ॥ ( णू । ३७ )
( दी० ३ । प० १० । मा० ६ ) ३

[साम-तन्त्र-सूत्राणि] [३३] १४ दि १.२.१०; ह चु हि ४.१.५. उदु [ ले ] सिषु ] ४.१.९; लोः ११.६.९; मेऽण् १२.४.५; (२८.३४) साम्नोः प्रत्येकं सामतन्त्रसूत्राणि न सन्ति । [३५] १ विश्वे दिकेऽन्त्येषु २.५.६; सहो ४.१.७; होंवि ६.४.५; सन्ध्यात् ११.५.७; [३६] २ आदिः १.१.६; वृद्धं नौ ४.९.७; सि ६.१०.१०; मे पदम् ८.८.२
[३७] ३ ( पृथक् सूत्राणि न सन्ति )

भरद्वाजो बार्हस्पत्यः । अग्निः । गायत्री ( ऋ० ६।१६।२८ )

अग्निस्तिग्मेन शोचिषा यासद्विश्वं न्य१त्रिणम् । अग्निर्नो वनते रयिम् ॥२२॥

वामदेवो गौतमः । अग्निः । गायत्री ( ऋ० ४।९।१ )

अग्ने मृळ महाँ असि य ईमा देवयुं जनम् । इयेथ बर्हिरासदम् ॥२३॥

अग्निस्तिग्मेन शोचिषा य२ सद्विश्वं न्यऽ३त्रिणम् । अग्निर्नो व२सते रयिम् । ॥२२॥

अग्ने मृड महाँ अस्यय आ देवयुं जनम् । इयेथ बर्हिरासदम् ॥२३॥

---

॥ ह्रसी द्वे। द्वयोरग्निर्गायत्री अग्निः ॥

(२२।१)आग्नाओऽ२३४वा॥ तिग्मेनऽ३शो । चाइषाओऽ२३४वा ॥ या२साओऽ२३४वा ॥

वाइश्वान्निया । त्राइणाओऽ२३४वा॥ अग्निर्नोऽ२व२सतेरयीऽ१म् ॥ ( ठै । ३८ )

( दी० ३ । प० ७ । मा० ८ ) ४

(२२।२) ओहा । ओग्नीः॥ ताऽ२३४इग्मे । नाशोचाऽ२३४इषाः। य२साऽ२द्वाऽ२३४इश्वाम् ॥

नियत्राऽ२३४इणाम्॥ अग्निर्नोऽ२ । व२साऽ२ताऽ२३४ओहोवा । राऽ२३यीम्॥ (ढो।३९)

( दी० ३ । प० ९ । मा० ९ )५

॥ इहवद्वामदेव्यम् । वामदेवो गायत्र्यग्निः ॥

(२२।३) अग्निनस्तिग्मेनशोचिषा । इहा॥ यऽ२सद्विश्वंन्यत्रिणाऽ२म् । इहा ॥

अग्निनोंव२सताऽ२इ । इहाऽ३॥ राऽ२३४योऽ६हाइ ॥ ( थि । ४० )

( दी० ४ । प० ७ । मा० ३ ) ६

॥ यामम् । यमो गायत्र्यग्निः ॥

(२३।१)अग्नाइमृडाऽ२ऽ । महा२आऽ२३४सी ॥ अयआदाऽ२इ । वयुञ्जाऽ२३४नाम् ॥

इयेथवाऽ२३ ॥ हिराऽ३साऽ५दाऽ६५६म् ॥ ( चू । ४१ )

( दी० २ । प० ६ । मा० ६ ) ७

॥ उत्तरयामम् । यमो गायत्र्यग्निः ॥

(२३।२)अग्नेमृडमहाऽ०असि । ओहाऽ३ओहा॥ अयआदेवयु०जनम् ।

ओहाऽ३ओहा॥ इयेथाऽ२३ब । हिराऽ३साऽ५दाऽ६५६म् ॥ ( चू । ४२ )

( दी० ७ । प० ६ । मा० ६ ) ८

---

[ साम-तन्त्र-सूत्राणि ] [३८] ४ नौ जेः- २.६.६; उदात्तम् २ ९ १०; सन्ध्ये १०.४.६, इनु ज्यादिषु ११.४.७; [३९] ५ व्यामि ११.१.८; [४१] ७ विष्णोरुद्युक् ३.९.७; ( ६.८. साम्नोः पृथक् सूत्राणि न सन्ति )

वसिष्ठो मैत्रावरुणिः । अग्निः । गायत्री ( ऋ० ७।१५।१३)

अग्ने रक्षा णो अंहसः प्रति ष्म देव रीषतः । तपिष्ठैरजरो दह ॥२४॥

भरद्वाजो बार्हस्पत्यः । अग्निः । गायत्री । ( ऋ० ६।१६।४३ )

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्ति मन्यवे ॥२५॥

वसिष्ठो मैत्रावरुणिः । अग्निः । गायत्री ( ऋ० ७।१५।७ )

नि त्वा नक्ष्य विश्पते द्युमन्तं देव धीमहि । सुवीरमग्न आहुत ॥२६॥

विरूप आङ्गिरसः । अग्निः । गायत्री ( ऋ ८।४४।१६ )

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपां रेतांसि जिन्वति ॥२७॥

अग्ने रक्षा णो अꣳहसः प्रति स्म देव रिषतः । तपिष्ठैरजरो दह ॥२४॥

अग्ने युक्ष्वा हि ये तवाश्वासो देव साधवः । अरं वहन्त्याशवः ॥२५॥

नित्वा नक्ष्य विश्पते द्युमन्तं धीमहे वयम् । सुवीरमग्न आहुत ॥२६॥

अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ॥२७॥

---

॥ राक्षोघ्नम् । अग्निर्गायत्र्यग्निः ॥

(२४।१) अग्नेराऽ३क्षाणो अꣳहसाः॥ प्रतिस्मदेवरिषाऽ२३ताः॥ तपाइष्ठाऽ२३इरा ॥
जरोदाऽ२३हाऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( पू । ४३ )

( दी० ५ । प० ६ । मा० ६ ) ९

॥ राक्षोघ्नम् । अग्निर्गायत्र्यग्निः ॥

(२५।१) अग्नेयूऽ३इक्ष्वाहियेतवा॥ अश्वासोदेवसाधाऽ२३वाः ॥ अरंवाऽ२३हा ॥
तियाशाऽ२३वाऽ३४३ः । ओऽ२३४५इ॥ डा ॥ ( दी० ८ । प० ६ । मा० ३ ) १० (दि । ४४)

॥ वैश्वमनसम् । विश्वमना गायत्र्यग्निः ॥

(२६।१) नित्वा । होऽ३इ । न । क्षिया॥ वाइश्पताइ । द्युमन्तम् । धाइ ।
माहेवाऽ२३४याम् ॥ सुवोहाइ॥ रामग्नाओऽ२३४वा । होऽ५तोऽ६हाइ ॥ ( टो।४५ )

( दी० ३ । प० ११ । मा० ९ ) ११

॥ आर्षेयम् । अग्निर्गायत्री अग्निः ॥

(२७।१) अग्निर्मूर्द्धादीऽ२वःककूत् ॥ पातीऽ२ःपार्थीऽ२ । वियाअयाम्॥ आपाऽ२रेराइताऽ२ ॥
सिजिन्वाऽ२३ताऽ३४३इ । ओऽ२३४५ इ ॥ डा ॥ ( दु । ४६)

( दी० ३ । प० ७ । मा० ६ ) १२

---

[ साम-तन्त्र-सूत्राणि ] [४३] ९ इ ७.४.१; [४५] ११ ऊष्मादिभ्यः १.८.८; ग्यचु गुरौ ५.५.३; । लघु ८.३.२; ग्न मे ८.३.३; [४६] १२ अन्तस्थायाम् ८.२-८; ( ४४।१० दशमस्य पृथक्सूत्राणि न सन्ति )

शुनशेप आजीगर्तिः । अग्निः । गायत्री ( ऋ० १ । २७ । ४ )

इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसम् । अग्ने देवेषु प्र वोचः ॥२८॥

गोपवनआत्रेयः । अग्निः । अनुष्टुम्मुखः प्रगाथः = ( अनुष्टुप्+गायत्र्यौ ) ( ऋ० ८ । ७४ । ११ )

यं त्वा गोपवनो गिरा चनिष्ठदग्ने अङ्गिरः । स पावक श्रुधी हवम् ॥२९॥

वामदेवो गौतमः । अग्निः । गायत्री ( ऋ० ४ । १५ । ३ )

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥३०॥

प्रस्कण्वः काण्वः । सूर्यः । गायत्री ( ऋ० १ । ५० । १ )

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥३१॥

इममू षु त्वमस्माक२ँसनिङ् गायत्रं नव्या२ँसम् । अग्ने देवेषु प्र वोचः ॥२८॥

तं त्वा गोपवनो गिरा जनिष्ठदग्ने अङ्गिरः । स पावक श्रुधी हवम् ॥२९॥

परि वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे ॥३०॥

उदु त्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्यम् ॥३१॥

---

॥ सोमसाम । सोमो गायत्र्यग्निः ॥

(२८।१) इममूषु॥ त्वमास्माऽ२३४काम् । सानीऽ२ँहोइ ॥ गायाऽ२हो । त्रन्नव्याऽ२३ँसाम्॥ आग्नेऽ२होइ । दाइवाऽ२हो॥ षुप्रावोऽ२३चाऽ३४ः३ ओऽ२३४५इ ॥डा॥ ( ङे।४७)

( दी १ । प० १० । मा० ७ ) १३

॥ गौपवनम् । गोपवनो गायत्र्यग्निः ॥

(२९।१) तंत्वागोपा॥ वानोऽ२गाऽ२३४इरा । जनाइष्ठदा । ग्नयाऽ२०गाऽ२३४इराः ॥ सपौवाओऽ२३४वा । कौवाओ२३४वा॥ श्रुधीऽ५हवाम् । होऽ५इ॥ डा ॥ ( झै । ४८)

( दी० २ । प० ९ । मा० ८ ) १४

॥ सौर्यम् । सूर्यवर्च्चा वा वसुरोचिर्वा गायत्र्यग्निः ॥

(३०।१) पर्यौ । होइवाजा ॥ पताइःका१वीऽ२ः । आग्निर्हव्या॥ नायक्रमीऽ२त् । दधाऽ२३त् । राऽ२त्नाऽ२३४औहोवा॥ निदाशुषेऽ २३४५ ॥ ( बू । ४९ )

( दी० ५ । प० ८ । मा० ६ ) १५

॥ सौर्यम् । सूर्यो गायत्री सूर्यः ॥

(३१।१) उदुत्यम् । ओहाइ॥ जा । तवेऽ२दाऽ२३४साम् । देवंवहा । तीकेताऽ२३४वाः ॥ दाऽ२३४शेहाइ॥ वाइश्वायस्व । र्याम् । औऽ२३होवा॥ होऽ५इ ॥डा॥ ( थै।५० )

( दी० ४ । प० १२ । मा० ८ ) १६

---

[ साम-तन्त्र-सूत्राणि ] [४७] १३ अछ्यायामे ५.६.९; उत्तमिन्यसु ६.११.१; दात् ६.११.२; नीचे ६.११.६; दाल्घु ७.४.४; [४८] १४ प्रह्वृचि१.१०.२; आ ५.३.८; तृतीयपरे ५.५.२; ग्नि७.३.६; वौ ११.९.४; वा ओवायाम्१२.४.१०; [४९] १५ ह सणि ५.१०.५; व्यस्थे १२.८.८; [५०] १६ जारा १.२.५; उच्चं गेरपर्शात् १.९.८; उत ४.९.९. तडिनि ९.२.८; त्यग्नि ११.१.१;

मेधातिथिः काण्वः । अग्निः । गायत्री । ( ऋ १।१२।७)

कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ॥३२॥

त्रिशिरास्त्वाष्ट्रः सिन्धुद्वीप आम्बरीषो वा । आपः । गायत्री ( ऋ० १०।९।४)

शं नो देवीरभिष्टय आपो भवन्तु पीतये । शं योरभि स्रवन्तु नः ॥३३॥

उशना काव्यः । अग्निः । गायत्री । ( ऋ० ८।८४।७)

कस्य नूनं परीणसो धियो जिन्वसि दंपते । गोषाता यस्य ते गिरः ॥३४॥

कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनम् ॥३२॥

शं नो देवीरभिष्टये शं नो भवन्तु पीतये । शं योरभिस्रवन्तु नः ॥३३॥

कस्य नूनं परीणसि धियो जिन्वसि सत्पते । गोषाता यस्य ते गिरः ॥३४॥

॥ कावम् । कवि ( वसुरोचि )* गायत्र्यग्निः ॥

(३२।१) कविमग्नीम् ॥ उपा२३ । स्तू२हा२३४औहोवा । सत्यधर्माणमध्वरे ॥ देवाम् ॥ अमीवचाता२३ना२३४३म् । ओ२३४५इ ॥डा॥ ( दी० ७। प० ८। मा० ५) १७ (जु।५१)

॥ काशीतम् कापीतं वा सुमन्दं वा ।* पारावतो ( पारावतिर्वा )* गायत्र्यग्निः ॥

(३३।१) शन्नोदेवीः ॥ अभिष्टा२३या२३४इ ॥ शन्नोभवा ॥ तुपीता२३या२३४ इ ॥ शंयोरभी ॥ स्रव । तू२ । ना२३४ । औहोवा ॥ ऊ२३४पा ॥ ( ष्वि । ५२ ) ( दी० ७। प० १०। मा० ३) १८

शंयुर्बार्हस्पत्यः। अग्निः। बृहती। ( ऋ० ६।४

यज्ञायज्ञा वो अग्नये गिरागिरा च दक्षसे। प्रप्र वयममृतं जातवेद

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे।
प्रप्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम्

---

॥ उपहवौ द्वौ। द्वयोर्भरद्वाजो बृहत्यग्निः

(३५।१) यज्ञायज्ञा ॥ वोअग्नयाऽ३इ। गिराऽ२गिराऽ३४ । ह
प्रप्राऽ२वयममृतंजा। तावेऽ१दासाऽ२म्॥ प्रियम्मित्राम्
औहोहोऽ२३४५इ ॥ डा ॥

( ३५।२) यज्ञायज्ञा। होइ। वोऽ३ग्नयए्ऽ३४। हिया॥ गिरागिरा
प्रप्रावयाम्। अमृतंजाऽ३। तवेऽ२दाऽ२३४साम् ॥ प्रि
एहिया। औहोऽ२३४५इ ॥ डा ॥

भर्गः प्रागाथः । अग्निः । बृहती । ( ऋ० ८।६०।९ )

पाहि नो अग्न एकया पाह्यु१त द्वितीयया । पाहि गीर्भिस्तिसृभिरूर्जां पते पाहि चतसृभिर्वसो ॥३६॥

शंयुर्बार्हस्पत्यः । अग्निः । बृहती । ( ऋ० ६।४८।७ )

बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवन्नः शुक्र दीदिहि द्युमत् पावक दीदिहि ॥३७॥

पाहि नो अग्न एकया पाह्यु३त द्वितीयया ।
पाहि गीर्भिस्तिसृभिरूर्जांपते पाहि चतसृभिर्वसो ॥३६॥

बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा ।
भरद्वाजे समिधानो यविष्ठ्य रेवत् पावक दीदिहि ॥३७॥

---

॥ कार्त्तयशम् । कृतयशा बृहत्यग्निः ॥

(३६।१) पाहिनोऽ३अग्नएकया॥ पाह्युित । द्वितायाऽ१याऽ२ ॥ पाहिगीर्भिस्तिसृभिः ।
ऊर्जाम्पाऽ१ताऽ२इ॥ पाहिचतौऽ३ । होऽ३वा॥ सृभिर्वोऽ२३साऽ३४३उ। ओऽ२३४५इ॥डा॥
( दी० ४ । प० १० । मा० ६ )२६ ( नू । ६० )

॥ नार्मेधम् । नृमेधा, (भरद्वाजः) बृहत्यग्निः ॥

(३६।२) पाहिनोअग्नएकयाऽ६ए॥ पा । होइ । उ । ता । द्वितायाऽ३या। पाहोऽ२इगाऽ२३४इर्भी॥
ताइसृभिः॥ ऊर्जाम्पाता । औहौहोऽ२३४वा । पाऽ२३४हिहाइ ॥ चतासृभा ।
औहौहोऽ२३४वा । वाऽ२३४साउ । एहियाऽ६हा । होऽ५इ ॥ डा ॥ ( खा । ६१ )
( दी० ११ । प० १७ । मा० १२ )२७

॥ कार्त्तवेशम् । कृतवेशो, (भरद्वाजः) बृहत्यग्निः ॥

(३६।३) पाहिनोअग्नए । कयाऽ३ । पाऽ२३४ । हियुतद्विती । यायां । पाहिगीर्भिस्तिसृभिरूर्जाम्।
पाऽ३ताइ॥ पाहोइचाऽ३ताऽ३४ । हाओवा॥ सृभिर्वसो । उपाऽ२३४५ ॥ ( कू । ६२ )
( दी० ११ । प० ११ । मा० ६ )२८

॥ पृश्नि । भरद्वाजो बृहत्यग्निः ॥

(३७।१) बृहाद्भीऽ२३रग्नेअर्चिभिर्हाउ ॥ शुक्राइणदेवशोचिषा । भराद्वाऽ१जेऽ२३ ।
होवाऽ३हाइ । समिधानः । याविष्ठियाऽ२३ । होवाऽ३हाइ ॥ रेवात्पाऽ१वाऽ२३ ।
होवाऽ३हाइ॥ कादीदिहि । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( जै । ६३ )
( दी०७ । प० १३ । मा० ८ )२९

---

[ साम-तन्त्र-सूत्राणि ] [६०] २६ दा न्ये ९.५.५;　[६१] २७ पात् १२.२.५;　[६२] २८ नीचं-मन्द्रं नीचे ३.५.३; नद्यादिर्जात् ९.४.८;　[६३] २९ दे सूरे वाघद्वयादितः १.७.१; सि मासे २.३.१; घम २.७.५; ईशे ४.४.७; वाचि ११.९.३;

वसिष्ठो मैत्रावरुणिः । अग्निः । बृहती । ( ऋ० ७।१६।७ )

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः । यन्तारो ये मघवानो जनानामूर्वान्दयन्त गोनाम् ॥३८॥

भर्गः प्रागाथः । अग्निः । बृहती । ( ऋ० ८।६०।१९ )

अग्ने जरितर्विश्पतिस्तेपानो देव रक्षसः । अप्रोषिवान् गृहपतिर्महाँ असि दिवस्पायुर्दुरोणयुः ॥३९॥

त्वे अग्ने स्वाहुत प्रियासः सन्तु सूरयः ।
यन्तारो ये मघवानो जनानामूर्वं दयन्त गोनाम् ॥ ३८ ॥
अग्ने जरितर्विश्पतिस्तपानो देव रक्षसः ।
अप्रोषिवान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः ॥३९॥

---

॥ पृश्नि । भरद्वाजो बृहत्यग्निः ॥

(३७।२) बृहद्भिरग्नेअर्चिभीऽ६रे ॥ शुक्राइणदेवशोचिषा । भराद्वाऽ१जेऽ२३ । ओऽ३वा । समिधानः । याविष्ठियाऽ२३ । ओऽ३वा ॥ रेवात्पाऽ१वाऽ२३ । ओऽ३वा ॥ कादीदिहि । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( दी० ७ । प० १३ । मा० ८ ) ३० ( जी । ६४ )

॥ उरोराङ्गिरस्य साम । उरुर्बृहत्यग्निः ॥

(३८।१) त्वेआऽ२३ग्नेस्वाहुतहाउ ॥ प्रियासस्सन्तुसूरयः । यन्तारोऽ१याऽ२३४इ । मघवानोजना । नाऽ३म् ॥ ऊर्वंदयाऽ२३हा ॥ तगोनाऽ२म् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥ ( मे । ६५ )
( दी० १० । प० १० । मा० ७ )३१

॥ पौरुमद्रे द्वे । द्वयोः गोतमो बृहत्यग्निः ॥ ( द्वे )

(३९।१) अग्नेजरितर्विश्पतिः । ओहोवा । एहिया । हाउ॥ तपानादेऽ२वरक्षसः । अप्रोषाऽ१इवाऽन् । गार्हपताऽ३इ । माहा२आऽ२३४सी ॥ दिवाः । पायोवाओऽ२३४वा॥ हाऽ३हाइ । दुरोऽ५णयूः । होऽ५इ ॥डा॥ ( घा । ६६ )
( दी०६ । प० १४ । मा० १२ )३२

(३९।२) अग्नेजरितर्विं । श्पतीऽ३ः । ताऽ२३४ । पानादेवर । क्षसाः ॥ तपानोदेवरक्षसो । अप्रोषीऽ३वान् । गृहपताइ । माहा२आऽ२३४सी ॥ ओऽ४हा॥ हहाइ॥ दिवस्पायूऽ२३४५ः॥ ओऽ४हा । हहाइ । दुरोणयूऽ२३४५ः॥ ओऽ४हा । हहाऽ३४३इ । ओऽ२३४५इ॥डा॥
( दी० ९ । प० १९ । मा० ११ )३३ ( घ । ६७ )

---

[ साम-तन्त्र-सूत्राणि ] [६४] ३० बृहने बि ४.६.७. [६५] ३१ त्वे ८.७.२; व्यय १०.७.७; [६६]३२ अनुनवृद्धयोर्नावि ६.१.९; [६७]३३ किनि हावति २.१०.८; ह ५.५.७; पिनोऽवृद्धे ५.९.२;

प्रस्कण्वः काण्वः । अग्निः । बृहती । (ऋ० १।४४।१)

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य । आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥४०॥

शंयुर्बार्हस्पत्यः ( तृणपाणिः ) । अग्निः । बृहती । ( ऋ० ६।४८।९ )

त्वं नश्चित्र ऊत्या वसो राधांसि चोदय । अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः॥४१॥

अग्ने विवस्वदुषसश्चित्र१ राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥४०॥
त्वं नश्चित्र ऊत्या वसो राधा१सि चोदय ।
अस्य रायस्त्वमग्ने रथीरसि विदा गाधं तुचे तु नः ॥४१॥

॥ माण्डवे द्वे । जमदग्निः, द्वयोर्मण्डुर्बृहत्यग्निः ॥

(४०।१) अग्नेविवाहाउ॥ स्वाऽ३दूषाऽ३स्रः । चाइत्राऽ३१हाइ । राधोऽ३हाऽ३इ । अमाऽ२ताऽ२३४या । आदाऽ१शुषेऽ२ । जातवेदः । वहातूऽ१वाऽ२म् ॥ अद्याहोइ । दाऽ२३इवा१ ॥ उषः । बूऽ२धाऽ२३४औहोवा ॥ हुवेवसूऽ२३४५ ॥ ( ज । ६८ )

( दी० ७ । प० १३ । मा० ११ ) ३४

॥ विदावसुनिधनम् । माण्डवम् ॥

(४०।२) अग्नेविवस्वदुषासाः ॥ चित्र१राधोअमाऽ२र्तिय । आदाऽ१शुषेऽ२ । जातवेदः । वहातूऽ१वाऽ२म् ॥ अद्यादाऽ२३इवा१ ॥ उषः । बूऽ२धाऽ२३४औहोवा । विदावसूऽ२३४५॥

( दी० ९ । प० ९ । मा० ७ ) ३५ ( घे । ६९ )

॥ गाधम् । भरद्वाजो बृहत्यग्निः ॥

(४१।१) त्वन्नाऽ२३श्चित्रऊत्या ॥ वसोराधा । सिचोदाऽ१याऽ२३ । आस्याराऽ२३४याः । त्वमग्ने । रथाइरासाऽ३इ ॥ वीदागाऽ२३४धाम् । तुचाऽ२३हाइ । तुना । औऽ३होवा । होऽ५इ ॥ डा ॥ ( छे । ७० )

( दी० २ । प० १२ । मा० ७ ) ३६

॥ इति ग्रामगेयमाने प्रथमः प्रपाठकः ॥१॥

[साम-तन्त्र-सूत्राणि][६८]३४ द्वितायाः ४.१०.४. वादिभ्याम् ९.५.९; अनु ८.८.३; [६९]३५ अ मिनिर २.४; तालव्यादेर्म ३.२.१; [७०] ३६ ध्वन्धः ६.१.६; त्यवि ९.३.७; स्यनु नपु १०.७.८; ओऽडि ११.३.४;

भर्गः प्रागाथः । अग्निः । बृहती । ( ऋ ८।६०।५ )

त्वमित्सप्रथा अस्यग्ने त्रातऋतस्कविः । त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥४२॥

भर्गः प्रागाथः । अग्निः । बृहती । ( ऋ० ८।६०।११ )

आ नो अग्ने वयोवृधं रयिं पावक शंस्यम् । रास्वा च न उपमाते पुरुस्पृहं सुनीती सुयशस्तरम् ॥४३॥

त्वमित् सप्रथा अस्यग्ने त्रातऋतः कविः ।
त्वां विप्रासः समिधान दीदिव आ विवासन्ति वेधसः ॥ ४२ ॥
आ नो अग्ने वयोवृध२ँरयिं पावक श२ँस्यम् ।
रास्वा च न उपमाते पुरुस्पृह२ँसुनीती सुयशस्तरम् ॥ ४३ ॥

---

॥ उभयत स्तोभम् गौतमम् । गोतमो बृहत्यग्निः ॥

(४२।१) हाउत्वमित्सप्रथाअसिहाउ ॥ आग्नेत्रातः । ऋताःकवाऽ२३४इः । हाहोइ ।
त्वांविप्रासःसमिधा । नादीदिवाऽ३४ः । हाहोइ ॥ आविवासाऽ३४ । हाहोऽ३ ॥
तिवोऽ२३४वा । धाऽ५सोऽ६हाइ ॥ ( कौ । ७१ )

( दी० ११ । प० ११ । मा० १० ) १

॥ गौतमम् । गोतमो बृहत्यग्निः ॥

(४२।२ ) त्वंत्वाऽ६मे॥ इत्सप्राऽ३थायासाइ । आऽ२३४सी । आग्नेत्रातः । ऋताःकवाऽ२इः ।
काऽ२३४वीः । त्वांविप्रासःसमिधा । नादीदिवो । दाऽ२३४वाः ॥ आविवासाऽ२३हा ॥
तिवेधाऽ२३साऽ३४३ः । ओऽ२३४५इ ॥ डा ॥ ( डो । ७२ )

( दी० ८ । प० १३ । मा० ९ ) १

॥ आयुः साम । अग्निर्बृहत्यग्निः ॥

(४३।१) आनोअग्नेवयोवृधम् । एऽ३४ । रयाऽ३४५इम् ॥ पावाऽ३काश२ँसाऽ२३याम् ।
रास्वाचनउपमाते । पूरुस्पृहाऽ२म् ॥ सुनाइताइसूऽ२हाइ ॥ यशस्तराम् ।
औऽ२३होवा । होऽ५इ ॥ डा ॥ ( ता । ७३ )

( दी० ९ । प० ११ । मा० १२ ) ३

---

[ साम-तन्त्र-सूत्राणि ] [७१] १ (पृथक् सूत्राणि न सन्ति ) [७२] २ वि ६.३.१; प्रथाः १२.१.३;
[७३] ३ सुन्यारेवंच ७.५ ६;

सोभरिः काण्वः । अग्निः । बृहती । ( ऋ० ८।१०३।६ )

यो विश्वा दयते वसु होता मन्द्रो जनानाम् । मघोर्न पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्यग्नये॥४४

वसिष्ठो मैत्रावरुणिः । अग्निः । बृहती । ( ऋ० ७।१६।१ )

एना वो अग्निं नमसोर्जो नपातमा हुवे । प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥४५॥

यो विश्वा दयते वसु होता मन्द्रो जनानाम् ।
मघोनं पात्रा प्रथमान्यस्मै प्र स्तोमा यन्त्वग्नये ॥४४॥
एना वो अग्निं नमसोर्जो नपातमा हुवे ।
प्रियं चेतिष्ठमरतिं स्वध्वरं विश्वस्य दूतममृतम् ॥४५॥

॥ हरसी द्वे । द्वयोरग्निर्बृहत्यग्निः ॥

(४४।१) योविश्वाऽ३दायतेवसू॥ होताऽ२मान्द्रोऽ२ । जनानाम् । माघोऽ२नापाऽ२ । त्राप्रथमान्यस्मै॥ प्रास्तोऽ२मायाऽ२३ ॥ तुवोऽ२३४वा । ग्नाऽ५योऽ६हाइ॥ (जा।७४)
( दी० ७ । प० ८ । मा० २ ) ४

(४४।२) योविश्वादयतेवसुहाउ ॥ होताऽ२मान्द्रोऽ२।जनानाम् । ओवा । ओवा। माघोऽ२नापाऽ२। त्राप्रथमान्यस्मै । ओवा। ओवा॥प्रास्तोऽ२मायाऽ२३ ॥ तुवोऽ२३४वा । ग्नाऽ५योऽ६हाइ॥
( दी० ८ । प० १२ । मा० ३ ) ५ ( ठि । ७५ )

॥ दैर्घश्रवसे द्वे । द्वयोर्दीर्घश्रवा बृहत्यग्निः ॥

(४४।३) योविश्वादयतवस्वोहाओहाऽ६ए॥ होताऽ२मंद्रोजनाऽ२नाम् । ओऽ३हा । ओऽ३हाऽ३एऽ३४॥ मघोऽ३४नपा ॥ त्राप्रथ । मानायस्माइ । ओऽ३हा । ओऽ३हाऽ३एऽ३४ । प्रस्तोऽ२४मायाऽ३॥ तुवोऽ२३४वा । ग्नाऽ५योऽ६हाइ ॥ (ठे । ७६)
( दी० १२ । प० १२ । मा० ७ ) ६

(४४।४) योविश्वादयतेवसूऽ६ए ॥ होतामंद्रोजनानाम्॥ माघोऽ१र्नापौ । वाऽ३रे ॥ त्राप्रथमान्यस्मै ॥ प्रास्तोऽ१मायौ । वाऽ३रे॥ त्वग्नये । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० १२ । प० ११ । मा० ३ ) ७ ( चि । ७७ )

॥ द्वाविंशतिः चतुर्थः खण्डः ॥४॥ दशति ॥

॥ आग्नेये द्वे । द्वयोरग्निर्बृहत्यग्निः ॥

(४५।१) एनावोअग्निंनामसा॥ ऊर्जोनपा । तामाऽ१हुवेऽ२ । प्रायंचेतिष्ठमरतिम् । सुवाध्वाऽ१राऽ२म्॥ विश्वास्याऽ१दूऽ२॥ताममृतम् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ६ । प० १० । मा० ५ ) ८ ( डु । ७८ )

[ साम-तन्त्र-सूत्राणि ][७४] ४ अवृद्धादार्चिकस्य ९.४.७;[७५] ५ (पृथक् सूत्राणि न सन्तिः) [७६] ६ तृतीये ३.८.२; मघोक्षरे नावि ४.३.१०; योवत्यामु ९.६.८; गिनि स्य पद् १०.४.७; [७७] ७ नवि ६.६.५; [७८] ८ चद१०.६.४;

भर्गः प्रागाथः । अग्निः । बृहती । ( ऋ० ८।६०।१५ )

शेषे वनेषु मात्रोः सं त्वा मर्तास इन्धते । अतन्द्रो हव्या वहसि हविष्कृत आदिद्देवेषु राजसि ॥४६॥

सोभरिः काण्वः । अग्निः । बृहती । ( ऋ० ८।१०३।१ )

अदर्शि गातुवित्तमो यस्मिन्व्रतान्यादधुः । उपो षु जातमार्यस्य वर्धनमग्निं नक्षन्त नो गिरः ॥४७॥

शेषे वनेषु मातृषु सं त्वा मर्तास इन्धते ।
अतन्द्रो हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि ॥४६॥
अदर्शि गातुवित्तमो यस्मिन्(स्थि)व्रतान्यादधुः ।
उपो षु जातमार्यस्य वर्धनमाग्निन्नक्षन्तु नो गिरः ॥४७॥

---

(४५।२) एनावोअग्निन्नमसाहाउ ॥ ऊर्जोनपा । तामाऽ१हुवेऽ२३ । हाउ । प्रायंचेतिष्ठमरतिम् ।
सुवाध्वाऽ१राऽ२३म् । हाउ ॥ विश्वास्याऽ१दूऽ२३।हाउ ॥ताममृतम् । इडाऽ२३भाऽ३४३।
ओऽ२३४५इ । डा । ( दी० ७ । प० १२ । मा० ९ ) ९ ( जो । ७९ )

॥ मनाज्ये द्वे । द्वयोर्गोतमो बृहत्यग्निः ॥

(४५।३) एनावोअग्निमेऽ५नमसा ॥ ऊर्जोनपातमाहुवे । प्राऽ२३याम् । चाइतिष्ठम् ।
आरातिम् । सुवाध्वाऽ१राऽ२म् ॥ विश्वास्याऽ१दूऽ२ ॥ ताममृतम् ।
इडाऽ२३भाऽ३४३।ओऽ२३४ऽइ ॥डा ॥ ( दी० ८ । प० ११ । मा० ८ ) १०( टै । ८० )

(४५।४) एनावोअग्निन्नमसो । जोनपोवा ॥ तामाहुवे । प्राऽ२३याम् । चाइतिष्ठम ।
राऽ२३तीम् । स्वध्वरम् ॥ विश्वस्याऽ२३दू ॥ ताममृतम् । इडाऽ२३भाऽ३४३ ।
ओऽ२३४५इ॥डा॥ ( दी० ७ । प० १२ । मा० ७ )११( छे । ८१ )

॥ दैवराजम् । देवराड्, (गौतमः,) बृहत्यग्निः ॥

(४६।१) शेषेवनाऽ५इषुमातृषू ॥ सांत्वामर्तासः । इन्धाऽ२३ताइ । आतंद्रोहव्यंवह । साइ ।
हवीऽ२ष्काऽ२३४र्त्ताः । आदिद्दवाइ । पुराजाऽ२३साऽ३४३इ । ओऽ२३४५इ ॥डा ॥
( दी० ८ । प० १० । मा० ८ । )१२( णै । ८२ )

॥ गाथिनम् । कौशिको गाथिर्बृहत्यग्निः ॥

(४७।१) अदर्शिगातुवित्तमाऽ६ए ॥ यास्मिन्न्(स्थि)व्रतानियादधुः । ऊपोषुजाऽ३ । हाऽ३हाइ ।
तमारियस्यवर्द्धनम् ॥ अग्नाइन्नक्षाऽ३ । हाऽ३हा ॥ तुनोगिरः । इडाऽ२३भाऽ३४३ ।
ओऽ२३४५इ । डा । ( दी० ६ । प० ११ । मा ८ ) १३ ( कै । ८३ )

---

[साम-तन्त्र-सूत्राणि] [७९]९ स्थायां बार्हतमु ५.१०.३; हाउतुडि न भयुक् ११.१०.८; [८०]१०मागादि५.१०.१;
[८१]११ नीचादवृद्धे १.७.१०; धात् ९.३.१; गि गहि ९.८.६; [८२] १२ तानैधनोक् २.७.१; आदित् १०.१.५;
[८३] १३ वरे निषु २.७.३; व्यवन्धायाम २.८.२. हाजिच्च ४.१.८; नि खट् ६.२.२; ज्यादेः ९.२.५;

मनुर्वैवस्वतः । विश्वेदेवाः । बृहती । ( ऋ० ८।२७।१ )

अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे । ऋचा यामि मरुतो ब्रह्मणस्पतिं देवाँ अवो वरेण्यम्॥४८॥

सुदीति-पुरुमीळ्हावाङ्गिरसौ । अग्निः । बृहती । ( ८।७१।१४ )

अग्निमीळिष्वावसे गाथाभिः शीरशोचिषम् । अग्निं राये पुरुमीळ्ह श्रुतं नरोऽग्निं सुदीतये छर्दिः॥४९॥

प्रस्कण्वः काण्वः । अग्निः । बृहती ( ऋ० १।४४।१३ )

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः। आ सीदन्तु बर्हिषि मित्रो अर्यमा प्रातर्यावाणो अध्वरम् ५०॥

अग्निरुक्थे पुरोहितो ग्रावाणो बर्हिरध्वरे ।

ऋचा यामि मरुतो ब्रह्मणस्पते देवा अवो वरेण्यम् ॥४८॥

अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम् ।

अग्निꣳराये पुरुमीढ श्रुतं नरोऽग्निः सुदीतये छर्दिः ॥४९॥

श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः ।

आ सीदतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥५०॥

---

॥ बार्हदुक्थे द्वे । द्वयोर्बृहदुक्थो बृहत्यग्निः ॥

(४८।१) अग्निरुक्थाइ॥ पुरोऽ२हाइताः । ग्रावाणोब । हिराऽ३ध्वाराइ । ऋचायामिमरुतोब्रह्माणस्पाताऽ२इ॥ दाइवाऽ२आवाऽ२३१॥ वरोऽ२३४वा ॥ णाऽ५योऽ६हाइ ॥ ( दी० ६ । प० ८ । मा० ९ )१४( गो । ८४ )

(४८।२) अग्निरुक्थाओहोहोहाइ॥ पुरौवाओऽ२३४वा । हिताः । ग्रावाणोब । हिरौवाओऽ२३४वा। ध्वराइ । ऋचौऽ३हो । यामिमरुतोब्रह्मणस्पाताऽ२इ॥ दाइवाऽ२आवाऽ२३ः ॥ वरोऽ२३४वा । णाऽ५योऽ६हाइ । ( दी० ७ । प० ११ । मा० ११ )१५( च । ८५ )

॥ पौरुमीढम् । पुरुमीढो बृहत्यग्निः ॥

(४९।१) अग्निमी । डिष्वाऽ३४औहोवा॥ आवसे । गाथाभिःशी । रशोचाऽ२३इषाम् । अग्निꣳरायाइ । पुरुमाऽ२३इढा । श्रुतन्नरो॥ अग्निःसूऽ२३दी ॥ तयाइच्छाऽ२३४५ दींऽ६५६ः॥ दक्षाऽ२याऽ२३४५॥ ( दी० ९ । प० ११ । मा० ७ )१६( ते । ८६ )

॥ कार्णश्रवसम् प्रास्कण्वं वा । कर्णश्रवा बृहत्यग्निः ॥

(५०।१) श्रुधीऽ५ । श्रूऽ२३४ । धिश्रुत्कर्णव । ह्निभाइः॥ देवैरग्नेसयावाऽ२३भीः । आसीदतुबर्हिषिमित्रोअर्याऽ२३मा॥ प्रातर्याऽ२३वाऽ३॥ भाऽ२इराऽ२३४औहोवा । एऽ३ । ध्वरआ ॥ ( दी० १० । प० १० । मा० ७ )१७ ( मे । ८७ )

---

[ साम-तन्त्र-सूत्राणि ] [८४]१४ माह० १.२.६; हिनः ८.९.१; चिक्रातपर्वान्ते १०.३.५ [८५] १५ नोदुत्वे ३.८.१; लु १२.४.१; [८६]१६ न तं विनि तुडि १.११.८; शतारे ३.४.१०; श्रुतचु ८.७.७; [८७] १७ डि द्वितीयम् ३.६.६;

सौभरिः काण्वः । अग्निः । बृहती ( ऋ० ८।१०३।२)

प्र दैवोदासो अग्निर्देवाँ अच्छा न मज्मना । अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य सानवि ॥५१

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८।१।१८)

अध ज्मो अध वा दिवो बृहतो रोचनादधि । अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥५२

विश्वामित्रो गाथिनः । अग्निः । बृहती । ( ऋ० ३।९।२ )

कायमानो वना त्वं यन्मातॄरजगन्नपः । न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥५३॥

प्र दैवोदासो अग्निर्देव इन्द्रो न मज्मना ।
अनु मातरं पृथिवीं वि वावृते तस्थौ नाकस्य शर्मणि ॥५१॥
अध ज्मो अध वा दिवो बृहतो रोचनादधि ।
अया वर्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥५२॥
कायमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभुवः ॥५३॥

---

॥ दैवोदासम् । दिवोदासो बृहत्यग्निः ॥

(५१।१) प्रदैवोदासोग्नीः ॥ देवइन्द्रोनमज्मना । अनुमाऽ२३ता । रंपृथिवींविवावृताइ ॥
तस्थौनाऽ२३का ॥ स्याशर्मणि । इडाऽ२३भाऽ३४३।ओऽ२३४५इ ॥ डा ॥ ( घी ।८८ )

( दी० ६ । प० ९ । मा० ४ । )१८

॥ सौक्रतवम् । सुक्रतुर्बृहत्यग्निः ॥

(५२।१) अधज्माओवा ॥ धवादाऽ१इवाऽ२ः । बृहतोरोचानाऽ१दाधीऽ२ । आऽ । यौ ।
हौहोऽ३वा । वार्द्धस्वतन्वा । गाइराऽ१ममाऽ२ । आजातासौ । हौहोऽ३वाऽ३४ ॥
हा । हाउवाऽ३ ॥ क्रतोपृणाऽ२३४५ ॥ ( दु । ८९ )

( दी० ९ । प० १३ । मा० ५ )१९

॥ काण्वे द्वे । द्वयोः कण्वो बृहत्यग्निः ॥

(५३।१) कायमानोऽ५वनातुवाम् ॥ यन्मातृरा । जागन्नाऽ२३४पाः । नतत्तेअग्नेऽ३ ।
प्रमृषेऽ३हाऽ३इ । निवाऽ२र्तोऽ२३४नाम् ॥ यद्दूराऽ२३इसान् ॥ इहाभुवा ।
औऽ३होवा । होऽ५इ ॥ डा ॥ ( है । ९० )

( दीं० ८ । प० ११ । मा० ८ )२०

---

[ साम-तन्त्र-सूत्राणि ] [८८] १८ रिवौ ७.१०.७; बिनि ९.८.१०; [८९] १९ आ नौछ्ये ६.१.१०; सुमत् ६.४.१०; मम. ६.९.७; ज्मः ८.३.८. [९०] २० आवविनि १०.८.४;

कण्वो घौरः । अग्निः । बृहती । ( ऋ० १।३६।१९ )

नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते । दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः॥५४

वसिष्ठो मैत्रावरुणिः । अग्निः । बृहती ( ऋ० ७।१६।११ )

देवो वो द्रविणोदाः पूर्णां विवष्ट्यासिचम् । उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते॥५५॥

नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते ।
दीदेथ कण्व ऋतजात उक्षितो यं नमस्यन्ति कृष्टयः ॥५४॥
देवो वो द्रविणोदाः पूर्णां विवष्ट्वासिचम् ।
उद्वा सिञ्चध्वमुप वा पृणध्वमादिद्वो देव ओहते ॥५५॥

---

(५३।२) एकाया ॥ मानो । वनातूऽ२३४वाम् । ओइ । तूऽ२३४वाम् । उहुवाहाइ । औऽ३होऽ३१इ।
यन्मातरी । जागन्नाऽ२३४पाः । अऽ२३४पाः । उहुवाहाइ । औऽ३होऽ३१इ ॥
नतत्तआ । ग्नाऽ३इप्रमृषाऽ२इ । निवाऽ२तोऽ२३४नाम् । ताऽ२३४नाम् ।
उहुवाहाइ । औऽ३होऽ३१इ॥ यद्दूरेसान् । इहाभूऽ२३४वाः । भूऽ२३४वाः ॥
उहुवाहाइ । औऽ३होऽ३१२ । याऽ२३४औहोवा॥ ऊऽ२३४पा ॥ ( [illegible] । ९१ )

( दी० ७ । प० २५ । मा० २१ )९१

॥ मानवाद्ये द्वे । द्वयोर्मनुर्बृहत्यग्निः ॥

(५४।१) नित्वामग्नाइ॥ मनुर्दाऽ२३४धाइ । ज्योतिर्जना । याशश्वाताऽ२इ । दी ।
दाइ । थक । ण्वाऋतजाऽ३ । तऊऽ२क्षाऽ२३४इताः ॥ यन्नमस्याऽ२३ ॥
ताऽ२इकृऽ२३४औहोवा॥ ष्टाऽ२३४याः ॥ ( फ । ९२ )

( दी० ५ । प० १२ । मा० ११ )९२

(५४।२) होवाइ । नित्वामग्नेमनुर्दधे । होवाइ॥ ज्योतिर्जनायशश्वते । दाइदेऽ१थक ।
ण्वाऋतजाऽ३१ । तऊऽ२क्षाऽ२३४इताः॥ यन्नामाऽ२३स्याऽ३॥ ताऽ२इकृऽ२३४औहोवा॥
ष्टाऽ२३४याः ॥ ( गौ । ९३ )

( दी० ८ । प० १० । मा १० । )९३

पञ्चमी दशतिः ॥ ५ ॥

---

[साम-तन्त्र-सूत्राणि ] [९१] ११ दधा. ४.५.३; घं भिकम् ५.१.६; नेह ५.५.८; [९२] १२ दरे ५.४.९;
अघोषादीनडिनोर्भिष्वगौ. ६.३.७; [९३] २३ अणः स्यवत्याइन्द्रायाम् ७.३.१०;

कण्वो घौरः। ब्रह्मणस्पतिः। बृहती। ( ऋ० १।४०।३ )

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥५६॥

कण्वो घौरः। यूपः। बृहती ( ऋ० १।३६।१३ )

ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ५७

सोभरिः काण्वः। अग्निः। बृहती। ( ऋ० ८।१०३।४ )

प्र यं राये निनीषसि मर्तो यस्ते वसो दाशत्। स वीरं धत्ते अग्न उक्थशंसिनं त्मना सहस्रपोषिणम् ५८

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥५६॥
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता।
ऊर्ध्वो वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्विह्वयामहे ॥५७॥
प्र यो राये निनीषति मर्तो यस्ते वसो दाशत्।
स वीरं धत्ते अग्न उक्थश१ सिनं त्मना सहस्रपोषिणम् ॥५८॥

॥ द्रविणम्। अग्निर्बृहत्यग्निः ॥

(५५।१) देवोऽ२वोऽ३द्रविणोदाः॥ पूर्णाविवष्ट्वासिचम्। उद्वाऽ१सिञ्चाऽ२। ध्वमुपवापृणध्वम्॥
आदिद्वोदेऽ२॥ वओहते। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥ ( दु। ९४ )

( दी० ८। प० ९। मा० ५ ) २४

॥ बार्हस्पत्यम्। बृहस्पतिर्बृहत्यग्निः ( ब्रह्मणस्पतिर्वा ) ॥

(५६।१) प्रैतूऽ३ब्रह्मणस्पतीः॥ प्रदाइवियें। तुसूनृताऽ३। अच्छाऽ२वाऽ२३४इराम्।
नर्यंप। ङ्क्तिराधाऽ१साऽ२३म्॥ देवाऽ२याऽ२३४ज्ञाम्॥ नाऽ२याऽ२३४औहोवा॥
तूऽ२३४नाः॥ ( घै। ९५ )

( दी० ४। प० ९। मा० ८ )२५

॥ वीङ्कम्। वसिष्ठो बृहत्यग्निः (यूपो वा)॥

(५७।१) ऊर्ध्वऊषुणाऽ१ऊताऽ२३४याइ॥ तिष्ठादेवोनसविता। ऊर्ध्वोवाऽ२३जा। स्यासनिता।
यादंजिभीऽ२ः॥ वाघाद्भीऽ२ः॥ वीवीऽ२॥ ह्वयामाऽ२३हाऽ३४३इ। ओऽ२३४५इ॥ डा॥

( दी० १०। प० १०। मा० ७ )२६ ( मे। ९६)

[ साम-तन्त्र-सूत्राणि ] [९४] २४ नैक् २.२.१०; [९५] २५ यिणः ६.३.४; दायिषु मन्द्रः ८.१०.३;
[९६] २६ कृष्टे ६.७.७; वं नर्घेवे ६.११.३;

कण्वो घौरः। अग्निः। बृहती। ( ऋ० १।३६।१ )

प्र वो यह्वं पुरूणां विशां देवयतीनाम्। अग्निं सूक्तेभिर्वचोभिरीमहे यं सीमिदन्य ईळते ॥५९॥

उत्कीलः कात्यः। अग्निः। बृहती। ( ऋ० ३।१६।१ )

अयमग्निः सुवीर्यस्येशे महः सौभगस्य। राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥६०॥

वसिष्ठो मैत्रावरुणिः। अग्निः। बृहती। ( ऋ० ७।१६।५ )

त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे। त्वं पोता विश्ववार प्रचेता यक्षि वेषि च वार्यम् ॥६१॥

प्र वो यह्वं पुरूणां विशां देवयतीनाम्।
अग्निं सूक्तेभिर्वचोभिर्वृणीमहे यꣳसमिदन्य इन्धते ॥५९॥
अयमग्निः सुवीर्यस्येशे हि सौभगस्य।
राय ईशे स्वपत्यस्य गोमत ईशे वृत्रहथानाम् ॥६०॥
त्वमग्ने गृहपतिस्त्वं होता नो अध्वरे।
त्वं पोता विश्ववार प्रचेता यक्षि यासि च वार्यम् ॥६१॥

---

॥ विष्पर्धसस्साम। विष्पर्धसो बृहत्याग्निः ॥

(५८।१) प्रयोरायाऽ५इनिनीषताइ॥ मर्तायस्तेवसोदाशत्। सवीराऽ२३न्धा। ताअग्नउ।
कृथशꣳसिनम्॥ त्मनासाऽ२३हा॥ स्रपोषाऽ२३इणाऽ३४३म्। ओऽ२३४५इ॥ डा॥

( दी० ९। प० ९। मा० ९ )२७ ( धो। ९७ )

॥ ऐतवाद्ध्वरम्। ऐतवद्धिर्बृहत्याग्निः ॥

(५९।१) प्रवाः॥ यह्वंपुरूऽ२३णाम्। विशांदेवयताऽ२३इनाम्। अग्निꣳसूक्तेभिर्वचोभिर्वृणीमाऽ२३
हाइ॥ याꣳसाऽ२माइदाऽ२न्॥ यइधते। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥

( दी० ७। प० ९। मा ९ )२८ ( झो। ९८ )

॥ दोहः साम। दोहो बृहत्याग्निः ॥

(६०।१) अयमग्निःसुवीर्यस्यहाउ॥ आइशेहिसौभगस्य। होवाऽ३हाइ। रायईशेस्वपत्य।
स्यागोऽ१माताऽ२३ः। होवाऽ३हाइ॥ ईशेहाऽ२३इवृऽ३। होवाऽ३हा॥
त्राहथानाम्। इडाऽ२३भाऽ३४३। ओऽ२३४५इ॥ डा॥ ( फो। ९९ )

( दी० १०। प० १२। मा० ९ )२९

---

[ साम-तन्त्र-सूत्राणि ] [९७] २७ (पृथक् सूत्राणि न सन्ति) . [९८] २८ न त्रे १.९.३; अम् ६.१०.३;
[९९] २९ तीनि २.५.८; दिजूष्मणि २.५.९; सणि ११.७.९;

विश्वामित्रो गाथिनः । अग्निः । बृहती । ( ऋ० ३।९।१ )

सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।

अपां नपातं सुभगं सुदीदितिं सुप्रतूर्तिमनेहसम् ॥६२॥

सखायस्त्वा ववृमहे देवं मर्तास ऊतये ।

अपां नपातꣳ सुभगं सुदꣳससं सुप्रतूर्तिमनेहसम् ॥६२॥

---

॥ समन्तम् । अग्निर्वसिष्ठो वा बृहत्यग्निः ॥

(६१।१) त्वमग्नेगृहपताइः ॥ त्वꣳहोतानोअध्वराइ । त्वंपोऽ२३ता । वाइश्ववा । रप्रचाइताः । औहोऽ३४वाहाइ ॥ य । क्षाइयाऽ२३सीऽ३ । होवाऽ३हाइ ॥ चवाराऽ२३याऽ३४३म् । ओऽ२३४५इ ॥ डा ॥ ( दी० ८ । प० १२ । मा० १२ ) ३० ( ठा । १०० )

॥ समन्ते द्वे । द्वयोर्वरुणो बृहत्यग्निः ॥

(६१।२) त्वमग्नेगृ । हाऽ५पतीः ॥ त्वꣳहोऽ२३४ता । नोअध्वाऽ२३४राइ ॥ त्वाऽ२०पोऽ२३४ता । विश्वावाऽ२३४रा । प्रचेताऽ३ः ॥ यक्षायेऽ३ ॥ याऽ२साऽ२३४औहोवा ॥ चवारियाऽ२३४५म् ॥ ( मू । १०१ )

( दी० ५ । प० १० । मा० ६ ) ३१

(६१।३) त्वमाऽ३ग्नेगृहापतीः ॥ त्वꣳहोतानोअध्वरे । त्वाऽ२३०पोता । औहोऽ३४इ । औहो । वाहाइ । वाइश्ववा । रप्रचाइताः । औहोऽ३४इ । औहो । वाहाइ ॥ यक्षाइयासा । औहोऽ३४इ । औहो । वाहाइ ॥ चवाराऽ३४याऽ३४३म् । ओऽ२३४५इ ॥ डा ॥ ( गी । १०२ )

( दी० २१ । प० १८ । मा० १४ ) ३२

॥ वाभ्रम् । वाभ्रो वैखानस आङ्गिरस दानवो वा बृहत्यग्निः ॥

(६२।१) सखायस्त्वाऔहोहोहाइ ॥ ववृ । माऽ२३४हाइ । देवंमर्ताऽ२हाऽ३ । सऊऽ२ताऽ२३४याइ । अपान्नपाऽ३ । तꣳसु । भगौ । वाऽ३हाऽ३इ । सुदꣳसाऽ२३४साम् ॥ सुप्रतूऽ२३तीम् ॥ अनेहाऽ२३साऽ३४३म् । ओऽ२३४५इ ॥ डा ॥ ( घौ । १०३ )

( दी० ६ । प० १४ । मा० १० ) ३३

॥ षष्ठी दशतिः ॥६॥

---

[ साम-तन्त्र-सूत्राणि ] [१००]३० इसन्त्वः ७.४.९; व्यचेः ९.६.३; [१०१]३१ ( पृथक् सूत्राणि न सन्ति ) [१०२] ३२ आचतुर्थादावि ४.३.१; याक्षि डेव ६.२.९; सन् खिडि ७.२.७; [१०३] ३३ एन्दे वावति ११.७.१०;

उपस्तुतो वार्ष्टिहव्यः । अग्निः । जगती । ( ऋ० १० । ११५ । १ )

चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावप्येति धातवे ।
अनूधा यदि जीजनदधा च नु ववक्ष सद्यो महि दूत्यं चरन् ॥६४॥

श्यावाश्वो वामदेवो वा । अग्निः । त्रिष्टुप् । (न ऋग्वेदीयः)

आ जुहोता हविषा मर्जयध्वं नि होतारं गृहपतिं दधिध्वम् ।
इडस्पदे नमसा रातहव्यं सपर्यता यजतं पस्त्यानाम् ॥ ६३ ॥

चित्र इच्छिशोस्तरुणस्य वक्षथो न यो मातरावन्वेति धातवे ।
अनूधा यदजीजनदधा चिदा ववक्षत्सद्यो महि दूत्यं३चरन् ॥६४॥

---

॥ त्रिष्टुप् श्यावाश्वम् । श्यावाश्वस्त्रिष्टुबग्निः ॥ *

(६३।१) आजुहोता॥ हविषामर्जयाऽ२ध्वाउवाऽ२ । निहोतारंगृहपतिंदधाऽ२इध्वाउवाऽ२३४॥
इडाऽ२४स्पदाइ॥ नमसारातहाव्याऽ२म् । सापर्यता । याजतंपाऽ२३ । स्तियोवा।
आऽ५नोऽ६हाइ ॥ ( ज्ञू । १०४ )

( दी० ७ । प० ९ मा० ६ )३४

॥ ऋतुसामणीद्वे । द्वयोर्ऋतुर्जगत्यग्निः ॥

(६४।१) ओइ । चित्रइच्छाइशोऽ१स्तरुणाऽ२३ । स्याऽ३वक्षथः ॥ ओइ ।
नयोमाताराऽ१वनुवाऽ२३इ । तीऽ३धातवे॥ ओइ । अनूधायादजीजनाऽ२३त् ।
आऽ३धाचिदा॥ ओइ । ववक्षत्साद्योऽ१महिदूऽ२३ । तियाऽ३०चाऽ५राऽ६५६न् ॥
दूत्यंचरन्महेऽ२३४५ ॥ ( बौ । १०५ )

( दी० १० । प० १३ । मा० १० )३५

(६४।२) चित्राऽ६ए॥ एऽ३१२३४ । शिशोस्तरुणस्यवक्षथः । क्षथः । हिहिहियाऽ६हाउ ।
एऽ३१२३४ । नयोमातरावन्वेतिधातवे । तवे । हिहिहियाऽ६हाउ॥ एऽ३१२३४ ।
अनूधायदजीजनदधाचिदा । चिदा । हिहिहियाऽ६हाउ ॥ एऽ३१२३४।
ववक्षत्सद्योमहिदूतियंचरन् । चरन् । हिहिहियाऽ६हाउ । वा॥ एऽ३। ऋतून्॥(ङौ।१०६)

( दी० १६ । प० २० । मा० १० )३६

---

[ साम-तन्त्र-सूत्राणि ] [१०४]३४ उपान्त्ये १.१.१०; वाध १.४.२; मयो ४.४.८; [१०५]३५ इजन्ताच्चतुर्थ-तृतीयोपान्त्या १.५.३; क्षैप्रः २.३.६; अन्त्यः ९.१.१; त्यं वाक्ये ९.५.४; दाउनु १०.९.८; [१०६]३६ न गप्रथमादिस्पर्शान्तम् २.१०.१; द्याद्विण् ३.६.४; ए ४.८.१; सकृत्खुप्मादिः ८.९.७; इजु में ९.७.९;

* " जागतं श्यावाश्वम् " इति फुल्लपौतकारः । फुल्लसूत्रे तु " त्रिष्टुप् श्यावाश्वं" इति व्यवहारः ॥

बृहदुक्थो वामदेव्यः । विश्वे देवाः । त्रिष्टुप् । ( ऋ० १०।५६।१ )

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशने तन्व१श्चारुरेधि प्रियो देवानां परमे जनित्रे　　॥६५॥

कुत्स आङ्गिरसः । अग्निः । जगती । ( ऋ० १।९४।१ )

इमं स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयं तव　॥६६॥

भरद्वाजो बार्हस्पत्यः । वैश्वानरोऽग्निः । त्रिष्टुप् । ( ऋ० ६।७।१ )

मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविं सम्राजमतिथिं जनानामासन्ना पात्रं जनयन्त देवाः　　॥६७॥

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सं विशस्व ।
संवेशनस्तन्वे३चारुरेधि प्रियो देवानां परमे जनित्रे　　॥६५॥
इमꣳ स्तोममर्हते जातवेदसे रथमिव सं महेमा मनीषया ।
भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मा रिषामावयं तव ॥६६॥
मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृत आ जातमग्निम् ।
कविꣳ सम्राजमतिथिं जनानामासन्नः पात्रं जनयन्त देवाः　॥६७॥

॥ यामं कौत्सं वा । यमस्त्रिष्टुबग्निः ( विश्वेदेवा वा ) ॥

(६५।१) ओऽ४हा । हहाइ । इदंतए । काऽ३०परः । ऊतएकाम् ॥ तृतीयेना । ज्योतिषाऽ३ । संविशस्वा ॥ संवेशनाः । तनुवे । चारुरेधी ॥ ओऽ४हा । हहाइ । प्रियोदेवा । नाऽ३०पर । माऽ३४३इ । जाऽ३नाऽ५इत्राऽ६५६इ ॥　( छौ । १०७ )

( दी० ७ । प० १७ । मा० १० )३७

॥ कौत्सम् । कुत्सो जगत्यग्निः । यज्ञसारथि ॥

(६६।१) इमꣳस्तोऽ२३४माम् । अर्हातेऽ२३४जा । तावेदसेऽ३ । होइ ॥ रथामीऽ२३४वा । संमाहेऽ२३४मा । मानीषयाऽ३ । होइ ॥ भद्राहीऽ२३४नाः । प्रमातीऽ२३४रा । स्यासꣳसदेऽ३ । होइ ॥ अग्नाइसाऽ२३४ख्याइ । माराइषाऽ२३४मा । वायंतवाऽ३ । होऽ२३४५इ ॥ डा ॥　( छो । १०८ )

( दी० २ । प० १७ । मा० ९ )३८

[ साम-तन्त्र-सूत्राणि][१०७]३७शग्ध्यू १.२.७; तुडि ३.९.२; ह्रस्वः पदान्तः ३.९.१०;ऊतेययोः ७.५.१०;ऊता१.२.८; क्रम ११.२.८;　[१०८] ३८ हों ४.८.४; वेरित. १०.१०.६; हूँ ~हायौ. १२.६.९;

भरद्वाजो बार्हस्पत्यः । इन्द्रः । त्रिष्टुप् । ( ऋ० ६।२४।६ )

वि त्वदापो न पर्वतस्य पृष्ठादुक्थेभिरिन्द्रानयन्त यज्ञैः ।
तं त्वाभिः सुष्टुतिभिर्वाजयन्त आजिं न जग्मुर्गिर्वाहो अश्वाः ॥६८॥

वि त्वादापो न पर्वतस्य पृष्ठादुक्थेभिरग्ने जनयन्त देवाः ।
तं त्वा गिरः सुष्टुतयो वाजयन्त्याजिं न गिर्वाहो जिग्युरश्वाः ॥६८॥

॥ अग्निर्वैश्वानरस्य सामनी द्वे । द्वयोरग्निर्वैश्वानरस्त्रिष्टुबग्निर्वैश्वानरः

(६७।१) मूर्द्धोहोहाइ ॥ नंदाऽ२३४इवाः । अरताइम् । पृथीऽ३व्याः । वैश्वानराम् । ऋतआ । जातमग्नीम् ॥ कविंसम्राजमातिथाइम् । जनाऽ२३नाम् ॥ आसन्नःपा । त्राऽ३०जन । याऽ३४३ । ताऽ३दाऽ५इवाऽ६५६ः ॥ ( दी० ६ । प० १३ । मा० १४ )३९( गी । १०९ )

(६७।२) होवाइ । मूर्द्धोहाइ ॥ नंदाइ । वाऽ२अर । तिंपृथिव्याः । इहोइयाऽ३ । ईऽ३या । वैश्वानराम् । ऋतआ । जातमग्नीम् । इहोइयाऽ३ । ईऽ३या ॥ कविंसम्रा । जाऽ३मति । थिंजनानाम् । इहोइयाऽ३ । ईऽ३या ॥ आसन्नःपा । त्राऽ३०जन । यंतदेवाः । इहोइयाऽ३ । ईऽ२ । याऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥ ( र्गी । ११० )
( दी० १३ । प० २५ । मा० १४ )४०

॥ इति ग्रामेगेयगाने द्वितीयस्यार्धःप्रपाठकः ॥२॥

॥ आश्वे द्वे । द्वयोरश्वस्त्रिष्टुबग्निः ॥

(६८।१) वित्वत् ॥ ओहाइ । आपोनपर्वतस्यपाऽ२३ष्ठात् । उक्थेभिरग्नेजनयंतदाऽ२३इवाः । तंत्वागिरःसुष्टुतयोवाजयाऽ२३०ती ॥ आजिन्नगाईर्वाऽ२३हाऽ३ः । जायेऽ३ । ग्यूऽ२राऽ२३४औहोवा ॥ अश्वाऽ२३४५ः ॥( दी० १० । प० ९ । मा० ९ )१ ( भो । १११ )

(६८।२) हा । ययाइदिवोहाइ । वित्वत् । आपो । नपर्व । तस्यपृष्ठात् ॥ हा । ययाइदिवोहाइ । उक्थाइ । भिरा । ग्नेऽ३जन । यंतदेवाः ॥ हा । ययाइदिवोहाइ । तंत्वा । गिराः । सुष्टुतयः । वाजयंती ॥ हा । ययाइदिवोहाइ । आजीम् । नगाइर्वाऽ२३हाऽ३ः । जायेऽ३ । ग्यूऽ२राऽ२३४औहोवा ॥ अश्वाऽ२३४५ः ॥ ( णो । ११२ )
( दी० ३ । प० २५ । मा० १९ )१

[साम-तन्त्र-सूत्राणि] [१०९]३९ जंघा १.१०.६; ढाजंघायाः ५.६.४; एनायाअच्च ७.१.६; [११०]४० अरि८.८.८; [१११] १ (पृथक् सूत्राणि न सन्ति ) [११२] १ ओष्ठ्यचतुर्भिर्भ्यां गायात् ३.१०.१; जि स्यादिन्याम् ७.१.५; त्वत् ७.८.९; विनः ७.१०.८; दु सन्ध्यम् १०.१.४;

वामदेवो गौतमः । रुद्रः । त्रिष्टुप् । ( ऋ० ४ । ३ । १ )

आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥६९॥

वसिष्ठो मैत्रावरुणिः । अग्निः । त्रिष्टुप् । ( ऋ० ७ । ८ । १ )

इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।

नरो हव्येभिरीळते सबाध आग्निरग्र उषसामशोचि ॥७०॥

आ वो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः ।

अग्निं पुरा तनयित्नोरचित्ताद्धिरण्यरूपमवसे कृणुध्वम् ॥६९॥

इन्धे राजा समर्यो नमोभिर्यस्य प्रतीकमाहुतं घृतेन ।

नरो हव्येभिरीडते सबाध आग्निरग्रमुषसामशोचि ॥७०॥

---

॥ वामदेव्यं रौद्रं वा । रुद्रस्त्रिष्टुबग्निः ॥

(६९।१) आवोराजा ॥ नमध्व । रस्यरुद्राम् । हो । ता । राम् । स । त्ययजाऽ३म् । रोदसीयोः ॥

अग्निंपु । रा । तनयि । त्नोरचित्तात् ॥ हिरण्य । रू ॥ पाऽ३मव । साऽ३४३इ ।

काऽ३णूऽ५ध्वाऽ६५६म् ॥ ( दे । ११३ )

( दी० ४ । प० १८ । मा० ७ ) ३

॥ वैश्वज्योतिषे द्वे । द्वयोर्विश्वज्योतिस्त्रिष्टुबग्निः उषा वा ॥

(७०।१) इन्धाऽ३१२३४इ । हाउहाउहाउ । राजासमर्योन । मोभीरोभीः । ओभीः ॥

यस्याऽ३१२३४ । हाउहाउहाउ । प्रतीकमाहुतंघृ । ताइनाआइना । आइना ॥

नराऽ३१२३४ः । हाउहाउहाउ । हव्येभिरीडतेस । बाधाबाधाः । बाधाः॥

आग्नाऽ३१२३४ई । हाउहाउहाउ । अग्रमुषसाऽ२३मशाउ । वाऽ३ ॥ चीऽ२३४५॥

(७०।२) ( दी० २१ । प० २० । मा० २४ )४ ( डी । ११४ )

हौहोऽ२ । हौहोऽ२ । हौहोइ । इंधेराजासमर्योनऽ३मोभीऽ२ः । ओभीऽ२ः । ओभीऽ२ः॥

यस्यप्रतीकमाहुतंघृऽ३ताइनाऽ२ । आइनाऽ२॥ आइनाऽ२। नरोहव्येभिरीडतेसऽ३बाधाऽ२ः।

बाधाऽ२ः॥ बाधाऽ२ः॥ हौहोऽ२ । हौहोऽ२ । हौहोइ । आग्निरग्रमुषसाऽ२३मशाउ। वाऽ३॥

चीऽ२३४५॥ ( दी० १३ । प० १८ । मा० १२ )५ ( डा । ११५ )

---

[ साम-तन्त्र-सूत्राणि ] [११३ ]३ रा २.१.२; स्योर्धम् ८.१०.१०; आतृचि भेनु १.१.२; [११४]४ प्रथमम् १.४.१; णि १०.३.२; [११५]५ सावै १४.७.१;

त्रिशिरास्त्वाष्ट्रः । अग्निः । त्रिष्टुप् । ( ऋ० १० । ८ । १ )

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।

दिवश्चिदन्ताँ उपमाँ उदानळपामुपस्थे महिषो ववर्ध ॥७१॥

वसिष्ठो मैत्रावरुणिः । अग्निः । त्रिपाद्विराड् गायत्री । ( ऋ० ७ । १ । १ )

अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥७२॥

प्र केतुना बृहता यात्यग्निरा रोदसी वृषभो रोरवीति ।

दिवश्चिदन्तादुपमामुदानडपामुपस्थे महिषो ववर्ध ॥७१॥

अग्निं नरो दीधितिभिररण्योर्हस्तच्युतं जनयत प्रशस्तम् । दूरेदृशं गृहपतिमथव्युम् ७२

( ७१।१ ) ॥ यामे द्वे । द्वयोर्यमस्त्रिष्टुबग्निः ॥

प्रकेतुना । बृहताया । तियग्नाइः । होइहोवाऽ३होइ ॥ आरोदसाइ । वृषभारो । रवीताइ ।

होइहोवाऽ३होइ ॥ दिवश्चिदा । तादुपमाम् । उदानाट् । होइहोवाऽ३होइ ॥ अपामुपा ।

स्थेमहिषो । ववर्द्धा । होइहोवाहाऽ३१उ । वाऽ२३ ॥ देऽ३ । दिवाऽ२३४५म् ॥

(७१।२) (दी० ११ । प० १९ । मा० १५ ) ६ ( घु । ११६ )

हा । हाओहोइ । प्राऽ२३४के । तुना । बृहताऽ३ । यातियग्नीः ॥ हा । हाओहोइ । आऽ२३४रो ।

दसाई । वृषभोऽ३ । रोरवीती । हा । हाओहोइ । दीऽ२३४वाः । चिदा । ताऽ३दुप ।

मामुदानट् ॥ हा । हाओहोइ । आऽ२३४पाम् । उपा । स्थेऽ३महि । षोववर्द्धा । हा । हाओहो ।

वाऽ२३४ओहावा । एऽ३ । दिवाऽऽ२३४५म् ॥ ( दी० ७ । प० २९ । मा० १६ ) ७ ( ञ्रू । ११७ )

( ७२।१ ) ॥ मराये द्वे । द्वयो राशिमरायोविराडग्निः ॥

हाउहाउहाउ । आग्नीम् । नराः । नराः । नराः । दीऽ३धिति । भिररण्योः ॥ हाउहाउहाउ । हास्ता ।

च्युताम् । च्युताम् । च्युताम् । जनय । तप्रशस्तम् ॥ हाउहाउहाउ । दूराइ । दृशाम् । दृशाम् ।

दृशाम् । गृहप । तिमथव्युम् । हाउहाउहाउ । वा ॥ ईऽ२३४५ । ( ञ्रू । ११८ )

(७२।२) (दी० १० । प० २४ । मा० २६ ) ८

हाउहाउहाउ । आग्नीम् । नराः । दीऽ३धिति । भिररण्यो । ण्यो । ण्योः ॥ हाउहाउहाउ ।

हास्ता । च्युताम् । जनय । तप्रशस्तम् । स्तम् । स्तम् । हाउहाउहाउ । दूराइ । दृशाम् ।

गृहप । तीमथव्युम् । व्युम् । व्युम् । हाउ हाउ हाउ । वा । ईऽ२३४५ ॥ ( झी । ११९ )

(दी० १२ । प० २४ । मा० १४ ) ९

षोडश सप्तमः । सप्तमः खण्डः ॥ ७ ॥ दशतिः ॥

[साम-तन्त्र-सूत्राणि] [११६] ६ अट्पादाद्ररायाः १.१०.१; गिरास्थेमि १०.६.८; [११७] ७ नद् ७.८.८;
[११८] ८ द्वितीयोहि प्रथमेऽतवंपतः ३.९.९; आच्छ्र. ७.८.३; मि ८.९.४; [११९] ९ हात् ११.५.१;

बुधगविष्ठिरावात्रेयौ । अग्निः । त्रिष्टुप् । ( ऋ० ५ । १ । १ )

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सिस्रते नाकमच्छ ॥७३॥

वत्सप्रिर्भालन्दनः । अग्निः । त्रिष्टुप् ( ऋ० १० । ४६ । ५ )

प्र भूर्जयन्तं महां विपोधां मूरा अमूरं पुरां दुर्माणम् ।
नयन्तो गर्भं वनां धियं धुर्हिरिश्मश्रुं नार्वाणं धनर्चम् ॥७४॥

भरद्वाजो बार्हस्पत्यः । पूषा । त्रिष्टुप् । ( ऋ० ६ । ५८ । १ )

शुक्रं ते अन्यद्यजतं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावो भद्रा ते पूषन्निह रातिरस्तु ॥७५॥

अबोध्यग्निः समिधा जनानां प्रति धेनुमिवायतीमुषासम् ।
यह्वा इव प्र वयामुज्जिहानाः प्र भानवः सस्रते नाकमच्छ ॥७३॥
प्र भूर्जयन्तं महां विपोधां मूरैरमूरं पुरां दर्माणम् ।
नयन्तं गीर्भिर्वना धियं धा हरिश्मश्रुं न वर्मणा धनर्चिम् ॥७४॥
शुक्रं ते अन्यद्यजन्तं ते अन्यद्विषुरूपे अहनी द्यौरिवासि ।
विश्वा हि माया अवसि स्वधावन्भद्रा ते पूषन्निह रातिरस्तु ॥७५॥

---

( ७३।१ ) ॥ श्येनः प्रजापतिर्वा, दीर्घायुष्यं वा । प्रजापतिस्त्रिष्टुबग्निः; उषा वा ॥

अबोधिया ॥ ग्राइस्समिधाजना॒ऽ२नाम् । प्रताइधेऽ३नूम् । इवायतीमुषासम् । यह्वाईऽ३वा । प्रवाऽ२यामुज्जिहानाः ॥ प्रभानाऽ२३वाः ॥ सस्रतेनाकमच्छा । इडाऽ२३भाऽ२३४ओऽ२३४५इ ॥डा॥

( दी० १४ । प० ११ । मा० ९ । )१०( तो । १२० )

( ७४।१ ) ॥ वासुर्क शुक्रं वा वसुकस्त्रिष्टुबग्निः ॥

प्रभूर्जयंताम् ॥ महाऽ३४३०विपोधाम् । मूरैरमूरंपुरांदर्माऽ२३णाम् ॥ नयाऽ३४३०तंगीर्भिः । वनाऽ३४३धियंधाः ॥ हरिश्मश्रुन्नवर्मणाऽ६ ॥ हाउवा ॥ धनाऽ३र्चीऽ२३४५म् ॥ ( डे । १२१ )

( दी० ८ । प० ८ मा० ७ ) ११

( ७५।१ ) ॥ पौषम् । पूषात्रिष्टुप्पूषा ॥

शुक्रंतेअन्यद्यजतम् । तआऽ६न्यात् ॥ विषुरूपेअहनीद्यौः । इवाऽ२३सी ॥ वाइश्वाहिमायाअवसाइ । स्वधाऽ३वान् ॥ भद्राते । पू ॥ षाऽ३निह । रातिरस्तु । तिराऽ५स्तुहाउवा ॥ ( त । १२२ )

( दी० ९ । प० ११ । मा० ११ ) १२

---

[साम-तन्त्र-सूत्राणि ] [१२०] १० इगः २.३.१०; युग्म्यां द्वौरे १२.७.१०; [१२१] ११ ( पृथक् सूत्राणि न सन्ति ) [१२२] १२ विष्टुभि ५.७.३; अव्यसरयोः ९.९.५;

विश्वामित्रो गाथिनः । अग्निः । त्रिष्टुप् । ( ऋ० ३ । ५,६,७।११ )

इळामग्ने पुरुदंसं सनिं गोः शश्वत्तमं हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे　　॥७६॥

वत्सप्रिर्भालन्दनः । अग्निः । त्रिष्टुप् ( ऋ० १०।४६।१ )

प्र होता जातो महान्नभोविन्नृषद्वा सीददपामुपस्थे ।
दधिर्यो धायि स ते वयांसि यन्ता वसूनि विधते तनूपाः ॥७७॥

इडामग्ने पुरुदंसꣳ सनिं गोः शश्वत्तमꣳ हवमानाय साध ।
स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे ॥७६॥
प्र होता जातो महान्नभोविन्नृषद्मा सीददपां विवर्ते ।
दधद्यो धायि सुते वयांसि यन्ता वसूनि विधते तनूपाः ॥७७॥

---

( ७६।१ ) ॥ कौत्सम् । कुत्सस्त्रिष्टुबग्निः ॥

इडामग्नाइ ॥ पुरुदाऽ३न् सꣳसनिंगोः । शश्वत्तमꣳहवमाना । यसाऽ२३४धा । स्यान्नस्सूनुस्तनयः । विजाऽ३वाऽ२ ॥ आग्नेसाताइ ॥ सुमाऽ३४३ । तीऽ३ः । भूतुहाउवा ॥ स्माऽ२३४५इ ॥

(दी० ६ । प० १२ । मा० ७ ) १३ ( खे १२३ )

( ७७।१ ) ॥ काश्यपे द्वे । द्वयोः कश्यपस्त्रिष्टुबग्निः ।

प्रहोताजाताः ॥ महान्नभोविन्नृषद्माऽ२३सीदात् । अपांविवर्ताइ ॥ दधद्योऽ२३धा । याइ । सुतेवयाꣳसियन्ताउ । वा ॥ वासूनिविध । ताऽ२ । याऽ२३४औहोवा ॥ तनूऽ३पाऽ२३४५ः ॥

(७७ । २ ) (दी० १२ । प० ११ । मा० ७ ) १४ ( चे । १२४ )

प्रहोताजातः । उहुवाहाइ ॥ माहाऽ२न्नाभोऽ२ । वाइन्नृषद्मासीददपांविवाऽ२३र्ताइ । आऔऽ३हो । इहा । दाधाऽ२द्योधाऽ२ । याइसुतेवयाꣳसियंतावसूऽ२३नी । आऔऽ३हो । इहा ॥ विधतायेऽ३ ॥ तनूऽ२पाऽ२३४औहोवा ॥ हविष्मतेऽ२३४५ ॥

( बै । १२५ )

( दी० १० । प० १३ । मा० ८ ) १५

---

[साम-तन्त्र-सूत्राणि] [१२३] १३ द्वितीये ४.३.४.; सत्तु ५.९.६; इत्युन्यास् ९.६.२; वाच्छादिभ्यः ११.३.६;
[१२४] १४ ( पृथक् सूत्राणि न सन्ति ) [१२५] १५ ते बर्हायाम् ३.३.८; भो ८.७.३;

वसिष्ठो मैत्रावरुणिः वैश्वानरोऽग्निः त्रिष्टुप् । ( ऋ० ७ । ६ । १ )

प्र सम्राजो असुरस्य प्रशस्तिं पुंसः कृष्टीनामनुमाद्यस्य ।
इन्द्रस्येव प्र तवसस्कृतानि वन्दे दारुं वन्दमानो विवक्मि ॥७८॥

विश्वामित्रो गाथिनः । अग्निः । त्रिष्टुप् ( ऋ० ३ । २९ । २ )

अरण्योर्निहितो जातवेदा गर्भ इव सुधितो गर्भिणीषु ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥७९॥

पायुर्भारद्वाजः । रक्षोहाग्निः । त्रिष्टुप् ( ऋ० १०।८७ । ११ )

सनादग्ने मृणसि यातुधानान्न त्वा रक्षांसि पृतनासु जिग्युः ।
अनु दह सहमूरान् क्रव्यादो मा ते हेत्या मुक्षत दैव्यायाः ॥८०॥

प्र सम्राजमसुरस्य प्रशस्तं पुंसः कृष्टीनामनुमाद्यस्य ।
इन्द्रस्येव प्र तवसस्कृतानि वन्दद्वारा वन्दमाना विवष्टु ॥७८॥
अरण्योर्निहितो जातवेदा गर्भ इवेत्सुभृतो गर्भिणीभिः ।
दिवेदिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः ॥७९॥
सनादग्ने मृणसि यातुधानान्न त्वा रक्षांऽसि पृतनासु जिग्युः ।
अनु दह सहमूरान्कयादो मा ते हेत्या मुक्षत दैव्यायाः ॥८०॥

---

(७८।१) ॥ घृताचेराङ्गिरसस्य साम । घृताचिस्त्रिष्टुबग्निः; इन्द्रो वा ॥

प्रसम्राजाम्॥ असुराऽ३ । स्याप्रशस्ताम् । पुंऽसःकृष्टाइ । नाऽ३मनु । मादियस्या ।
इन्द्रस्येवाऽ३४३प्रतव॥ सस्कृतानी॥ वंदद्वारावंदमाना॥ विवाऽ३ष्टूऽ२३४औहोवा॥वीऽ२३४शाः॥

( दी० ८। प० ११। मा० ५ ) १६( डु । १२६ )

(७९।१) ॥ प्रासाहम् । भरद्वाजस्त्रिष्टुबग्निः ॥

अरण्योः॥ निहितोजाऽ३४३तवेदाः । गर्भइवेत्सुभृतोग । र्भिणाऽ२३४इभीः ॥
दिवेदिवईड्योजागृवाऽ२३द्भीः॥ हाऽ२३४वी । ष्माऽ२३४द्भीः । मनुष्येऽ५भिरग्निः ।
एहियाऽ६हा । हाऽ५इ ॥ डा ॥ ( दी० । १० । प० ११ । मा० १० )१७ ( पी । १२७ )

( ८०।१ ) ॥ अग्नेर्वैश्वानरस्यात्रेर्वा. राक्षोघ्नम् । अग्निस्त्रिष्टुबग्निः ॥

अहा । वोऽ३हा । वोऽ३हा । सनादग्नाइ । मृणासि । यातुधानान्॥ नत्वारक्षा । सीऽ३पृत ।
नासुजिग्यूः ॥ अनुदहा । सहमू । रान्कयादाः॥ अहा । वोऽ३हा । वोऽ३हा । मातःइहेत्याः ।
मुक्षत । दाऽ३४३ ई । वीऽ३याऽ५याऽ६५६ः ॥ ( दी० ५ । प० ११ । मा० ८ )१८( भै । १२८ )

अष्टमः खण्डः ॥ ८ ॥ दशतिः ॥

---

[ साम-तन्त्र-सूत्राणि ] [१२६] १६ रा. ३.२.१०; विदस्य पि.४.३.७; रोऽप्रथमे ७.६.१; [१२७] १७ न्यौ हस्वम् ८.१०.९; रान् ९.५.७; यि ११.१.६; [१२८] १८ गिरे घमित् ७.३.५; उत्ताक्ष्णोः १०.९.६;

गय आत्रेयः । अग्निः । अनुष्टुप् (त्रिष्टुप्) ( ऋ० ५।१०।१ )

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो । प्र नो राया परीणसा रत्सि वाजाय पन्थाम् ॥८१॥

भरद्वाजो बार्हस्पत्यः । अग्निः । अनुष्टुप् । (त्रिष्टुप्) ( ऋ० ६।२।६ )

त्वेषस्ते धूम ऋण्वति दिवि षञ्छुक्र आततः । सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥८३॥

अग्न ओजिष्ठमा भर द्युम्नमस्मभ्यमध्रिगो।प्र नो राये पनीयसे रत्सि वाजाय पन्थाम्८१

यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः ।
आजुह्वद्धव्यमानुषक् शर्म भक्षीत दैव्यम् ॥८२॥ (न ऋग्वेदीयः)

त्वेषस्ते धूम ऋण्वति दिवि सं छुक्र आततः ।
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥८३॥

---

(८१।१) ॥ पाथे द्वे । द्वयोः पथोऽनुष्टुबग्निः ॥

आग्नाओऽ२३४वा॥ ओजिष्ठऽ३मा । भाराओऽ२३४वा । द्युम्नमस्मभ्यमध्रिगोऽ३ ॥ ओइ ॥
प्रानाओऽ२३४वा॥ रायेपनीऽ२यसेऽ३ । ओइ । रात्साओऽ२३४वा॥ वाजायपन्थाऽ२३४५म् ॥

(८१।२) ( दी० ६।प० १०।मा० ७) १९ ( ङे । १२९ )

अग्नेहाउ॥ ओजि । ष्ठामाऽ१भारा । औहोऽ२३४वा । द्युम्नमस्म । भ्यामध्रिगा। औहोऽ२३४वा।
प्रनोराये । पानीऽ१यासा । औहोऽ२३४वा॥ रात्सीऽ२वाजाऽ२॥ यपोवाऽ३ओऽ२३४वा ।
थाऽ५मोऽ६हाइ ॥ ( जि । १३० )

( दी० ७।प० १३।मा० ३ )२०

(८२।१) ॥ बृहदाग्नेयम् । अग्निरनुष्टुबग्निः ॥

यदिवीरोअनुष्यात् । ऐयाऽ३४३इऽ३४या॥ अग्निमिंधीतमौ । होऽ३हाऽ३ । होऽ२३४र्तियाः ।
आजूऽ२ह्वाद्धाऽ२३ । व्यमाऽ२नूऽ२३४षाक्॥ शर्मभ । क्षाइ । तदाऽ२हाऽ३इ ।
वाऽ३ओऽ२३४वा॥ व्याऽ२३४५म् । ( खो । १३१ )

( दी० ६।प० १२।मा० ९ ) ११

(८३।१) ॥ त्वेषस्ते यामम् । यमोऽनुष्टुबग्निः ॥

त्वेषास्तेऽ२३धूमऋण्वतिहाउ॥ दिविसंछुक्रऽ३आताताऽ३ः । सूरोनहीहाउ॥ द्युतातूवाऽ३म् ।
कृपापवाहाउ॥ करोचाऽ२३साऽ२४३इ । ओऽ२३४५इ । ॥ डा ॥ ( गो १३२ )

( दी० ६।प० ८।मा० ९ ) ११

---

[ साम-तन्त्र-सूत्राणि ] [१२९] १९ (पृथक् सूत्राणि न सन्ति ) [१३०] २० नित्रिष्वा .२.३.२.
[१३१]११ द्विवनि ९.१.४; [१३२] ११ चतुक्षिणोवृद्धादिनि ६.५.२; ह्व १२.१.३;

भरद्वाजो बार्हस्पत्यः । अग्निः । अनुष्टुप् ) ( ऋ० ६ । २ । १ )

त्वं हि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे । त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥८४॥

द्वितो मुक्तवाहा आत्रेयः । अग्निः । अनुष्टुप् ( ऋ० ५ । १८ । १ )

प्रातरग्निः पुरुप्रियो विशः स्तवेतातिथिः । विश्वानि यो अमर्त्यो हव्या मर्तेषु रण्यति ॥८५॥

वसूयव आत्रेयाः । अग्निः । अनुष्टुप् । ( ऋ० ५ । २५ । ७ ) (य०२६।१२)

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥८६॥

त्वꣳहि क्षैतवद्यशोऽग्ने मित्रो न पत्यसे ।

त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥८४॥

प्रातरग्निः पुरुप्रियो विशस्तवेतातिथिः । विश्वे यस्मिन्नमर्त्ये हव्यं मर्तास इन्धते॥८५॥

यद्वाहिष्ठं तदग्नये बृहदर्च विभावसो । महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥८६॥

---

( ८४।१ ) ॥ बृहदाग्नेयम् । अग्निरनुष्टुबग्निः ॥

त्वꣳहिक्षैतवद्यशः । ईयइयाहाइ ॥ अग्नाइमि । त्रो । नापत्याऽ२३४साइ । आऔऽ३४हो । इयाहाइ । त्वंवि । चा । षणेऽ२श्राऽ२३४वाः । आऔऽ३४हो । इयाहाइ ॥ वासाऽ२उवा ॥ पु । ष्टाइम् । नापुष्याऽ२३४सी । आऔऽ३४हो । इयाहा । होऽ५इ ॥ डा ॥ ( छु । १३३ )

( दी० १ । प० २० । मा० १५ )२३

(८५।१) ॥ बृहतश्च कौमुदस्य साम । कुमुद्बृहदनुष्टुबग्निः ॥

प्रातरग्नाइःपूऽ६रुप्रियाः ॥ विशास्तवे । ताऽ२३ । अतिथाइः । वाइश्वेयास्मीऽ२न् । अमाऽ२र्त्तोऽ२४याइ ॥ हव्याऽ२३ꣳहोइ । मर्त्ताऽ२हो॥ सइंधाऽ२३ताऽ३४३इ। ओऽ२३४५इ॥डा॥

( दी० । ३ प० ११ । मा० ११ )२४ ( ट । १३४ )

( ८६।१ ) ॥ यद्वाहिष्ठीये द्वे । द्वयोरग्निरनुष्टुवग्निः ॥

यद्वाहिष्ठंतदा ॥ ग्नयाइ । बृहदर्चविभावाऽ२३साउ । माहीऽ२षाइवाऽ२ । त्वद्रयिः ॥ त्वद्वाऽ२३जाः ॥ उदीराऽ२३ताऽ३४३इ । ओऽ२३४५इ ॥ डा ॥ ( हे । १३५ )

( ८६।२ ) यद्वाहिष्ठीयोत्तरम् । ( दी० ३ । प० ९ । मा० ७ )२५

यद्वाहिष्ठंतदग्नये । यद्वाहिष्ठावा ॥ तदग्नयाइ । बृहदाऽ२३र्चा । विभावसाउ ॥ महिषाऽ२३इवा । त्वद्रयिः ॥ त्वद्वाऽ२३जाः ॥ उदीराऽ२३ताऽ३४३इ । ओऽ२३४५इ ॥ डा ॥ ( पे । १३६ )

( दी० ५ । प० ११ । मा० ७ )२६

---

[ साम-तन्त्र-सूत्राणि ] [१३३]२३ ए. २.७.८; [१३४] २४ द्वितीयम् १.१.८; मर्त्ता १.१०.९; खद्गष्माणि २.७.१०; मर्त्ता ४.१.६; ऊमे ८.१०.२; त्वायाः छे १०.१.२; [१३५]२५, [१३६]२६ ( पृथक् सूत्राणि न सन्ति )

गोपवन आत्रेयः। अग्निः। अनुष्टुप् ( ऋ० ८।७४।१)

विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् । अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥८७॥

पुरुरात्रेयः । अग्निः । अनुष्टुप् । ( ऋ० ५।१६।१ )

बृहद्वयो हि भानवेऽर्चा देवायाग्नये । यं मित्रं न प्रशस्तिभिर्मर्तासो दधिरे पुरः ॥८८॥

गोपवन आत्रेयः । अग्निः । अनुष्टुप् ( ऋ० ८।७४।४ )

आगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् । यस्य श्रुतर्वा बृहन्नार्क्षो अनीक एधते ॥८९॥

विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
अग्निं वो दुर्यं वचःस्तुषे शूषस्य मन्माभिः ॥८७॥

बृहद्वयो हि भानवेऽर्चा देवायाग्नये । यं मित्रं न प्रशस्तये मर्तासो दधिरे पुरः ॥८८॥

अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् । यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥८९॥

---

(८७।१) ॥ विशोविशीयं ऐडं वा । अग्निरनुष्टुबग्निः ॥

विशोविशोहिमूर्स्थिवोऽ६आतिथाइम् ॥ वाजयन्ताः । पूऽ३रूप्रीऽ३याम् । अग्निवोऽ२ । दूराऽ२३याम् । हिंमाइ । वाऽ३चाऽ३ः । स्तूऽ२३४षेहाइ ॥ ओ । हुवाइ । शूऽ२३४षा ॥ हिंमा । स्याऽ३माऽ३ । न्माऽ२३४भाइ । एहियाऽ६हा । होऽ५इ ॥ डा ॥ ( छि । १३७ )

(दी० ७ । प० १७ । मा० १३ )२७

(८८।१) ॥ आत्रेये द्वे । द्वयोरत्रिरनुष्टुबग्निः ॥

बृहद्वयाः ॥ हिभानाऽ२३वाइ । आर्चादेवा । यअग्नाऽ२३याइ । यम्मित्रन्न । प्राशस्तायाऽ२इ ॥ मर्तासोऽ३दाऽ३ ॥ धिरोवा । पूऽ५रोऽ६हाइ ॥ ( धू १३८ )

(८८।२) ( दी० ४ । प० ९ । मा० ६ )२८

बृहद्वयोहिभानाऽ६वाइ ॥ आर्चादेवा । यअग्नाऽ२३याइ । यम्मित्रन्न । प्राशस्ताऽयाऽ२इ ॥ मर्तासोद ॥ धाइरेऽ१पूरा । औहोवाहाऽ३४औहोवा । वाऽ३हाऽ२३४५ः ॥ ( क्षे । १३९ )

( दी० १२ । प० ९ । मा० ७ ) २९

(८९।१) ॥ श्रौतवर्णम् । श्रुतर्वाऽनुष्टुबग्निः ॥

अगन्मवृ ॥ त्राऽ३हान्ताऽ३माम् । ज्याइष्ठम । ग्निमानाऽ३वाम् । यस्माऽ२३होइ । श्रुतर्वन्नार्क्षाइ ॥ बृहाऽ२३द्धोइ ॥ आनीकयाऽ३१उवायेऽ३ ॥ ध्याऽ२३४ते ॥ ( क्षे । १४० )

( दी० २ । प०९ । मा० ७ )३०

---

[साम-तन्त्र-सूत्राणि] [१३७]२७ अवः ७.४.१०; [१३८] २८ नाधु चवर्गि ३.३.३; नवेऽहस्वान्ते १०.१.८ नवे १०.८.२; [१३९] २९ नाम् ५.१०.६; [१४०]३० इ ११.४.४; वन् ११.९.५; विस्वरिण स्तादेर्गः१३.७.४

अग्निस्तापसः । विश्वे देवाः । अनुष्टुप् । ( ऋ० १०।१४१।३)

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे । आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥९१॥

वामदेवः, कश्यपो वा, मारीचो मनुर्वा वैवस्वत, उभौ वा । अग्निः । अनुष्टुप् । ( न ऋग्वेदीयः )

३ १ २र ३ १ २ ३ २ ३ १ २ ३ १ २

जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः ।

३ २उ ३ १ २ ३ २ ३ २ ३ १ २र ३ २

पिता यत्कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥९०॥

२ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २

सोमꣳ राजानं वरुणमग्निमन्वारभामहे। आदित्यं विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम् ९१

वामदेवः कश्यपोऽसितो देवलो वा । अङ्गिराः । अनुष्टुप् । ( न ऋग्वेदीयः )

३ २ ३ २ ३ १ २ ३ २ ३ १ २र २ ३ २ ३ १ २ ३ १ २र

इत एत उदारुहन्दिवः पृष्ठान्या रुहन् । प्र भूर्जयो यथा पथोद्यामङ्गिरसो ययुः ॥९२॥

(९०।१) ॥ इन्द्रस्य प्रियम् । इन्द्रोऽनुष्टुबग्निः ॥

२र र १ ३ २ १ ३ २ ३ ५ १र २

जातःपरेणऽ२धा । इहा । मणा । इहा । योऽ२३४नीम् । योनिमिंद्रश्रगच्छथः ॥

१ ३ २ १ ३ २ ३ ५ १र २ र १

यत्सवृद्भिःसऽ३हा। इहा। भुवाः। इहा। योऽ२३४नीम्।। योनिमिंद्रश्रगच्छथः।। पितायत्कश्यऽ३पा।

३ २ र १ ३ २ ३ ५ १र २ ३ २ र र १ ३ २

इहा । स्याग्नाइ । इहा । योऽ२३४नीम्। योनिमिंद्रश्रगच्छथः।। श्रद्धामातामऽ२नूः । इहा ।

१ ३ २ ३ ५ १र २ ३ १ १ १

कवाइ । इहा । योऽ२३४नीम् । योनिमिंद्रश्रगच्छथाऽ२३४५ः ॥ ( घा । १४१ )

( दी० ११ । प० २४ । मा० १२ )३१

त्रयोदश नवमः । नवमः खण्डः ॥९॥ दशतिः ॥

॥ इति ग्रामेगेयगाने द्वितीयः प्रपाठकः ॥

(९१।१) ॥ बार्हस्पत्यम् । बृहस्पतिरनुष्टुबग्निः ॥ विश्वे देवा वा ।

४र ५ ४र५र ४ ५ ४ २ १ र २र १ २ र र १ २ १र२

सोमꣳराजानंवरुणाम्।। अग्निमन्वारभामहेऽ३ । होवाऽ३हाइ । आदित्यंविष्णुꣳसूर्यम् ।

१ २ २ १र २ १ २ २ १न २ ३ ५

होवाऽ३हाइ।। ब्रह्माणाऽ२३०चाऽ३ । होवाऽ३हाइ।। बृहाऽ३२उवाऽ३।। पाऽ२३४तीम् ॥

( दी० ८ । प० ९ । मा० । ७ ) १ ( ढे । १४२ )

(९२।१) ॥ आरूढवदाङ्गिरसं यामं वा । आरूढविदाङ्गिरानुष्टुबग्निः ॥

आरोऽ३हान्।आरोऽ३हान्। आरोऽ३हान्।इतएतउऽ३दारूऽ१हाऽ२न्।।दिवः पृष्ठानीऽ३याऽरूऽहोऽ२न्।।

प्रभूर्जयोयऽ३थापाऽ१थाऽ२ ।। उद्यामंगिरऽ३सोयाऽ१यूऽ२ः । आरोऽ३हान् । आरोऽ३हान् ।

आऽ२३ । रोऽ२ । हाऽ२३४ । औहोवा।। ऊऽ२३४पा ॥ ( ङ्वौ । १४३ )

( दी० १२ । प० १४ । मा० १० ) २

[ साम-तन्त्र-सूत्राणि ] [१४१]३१ ( पृथक् सूत्राणि न सन्ति ) [१४२] १ र्यि २.४.९; मे. वृद्धपरे ३.३.९; वाचि रादिस्वरं विस्वरे ३.८.८; त्यमिधिष्ण्वि ९.५.१; ब्रुणश्च रायां वाचि ११.४.३;

[१४३] १ कण्ठ्या देर्घम् ४.६.१; रोतिक्रमे ५.२.५; न विकर्षणि ८.१०.६;

मेधातिथिः काण्वः, प्रियमेधश्चांगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । २ । १६ )

यमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः । कण्वा उक्थेभिर्जरन्ते ॥ १५७ ॥

यमु त्वा तदिदर्था इन्द्र त्वायन्तः सखायः । कण्वा उक्थेभिर्जरन्ते ॥ १५७ ॥

(१५६।३) ॥ गौरीविते द्वे ॥

वईऽ३या । ईऽ३या । इन्द्राईऽ३या । ईऽ३या। याऽ२३४मा। दाऽ३नाम्॥ हरईऽ३या। ईऽ३या। आश्वोईऽ३या । ईऽ३या । याऽ२३४गा । याऽ३ता॥ सखईऽ३या । ईऽ३या । यास्सोईऽ३या । ईऽ३याऽ३॥ मापोऽ२३४वा । आऽ५न्नोऽ६हाइ ॥ ( डै । २६६)

( दी० ३ । प०१८। मा० ८)२१

१५६।४ )

वौहोवाऽ२ । इन्द्रौहोवा। याऽ२३४मा। दाऽ३नाम्॥ हरौहोवाऽ२ । आश्वौहोवा । याऽ२३४गा। याऽ३ता॥ सखौहोवाऽ२ । यास्सौहोवाऽ३॥ मापोऽ२३४वा । आऽ५न्नोऽ६हाइ ॥

( दी० ६ । प० १२ । मा० २ ) २२ ( स्वा । २६७)

(१५६।५) ॥ शाक्त्यं साम ॥

वौदऽ३दा । औऽ३हो । इन्द्रोददा । औऽ३हो । याऽ२३४मा । दाऽ३नाम्॥ हरिदऽ३दा । औऽ३हो । आश्वोददा । औऽ३हो । याऽ२३४गा । याऽ३ता॥ सखिदऽ३दा । औऽ३हो । यास्सोददा । औऽ३होऽ३॥ मापोऽ२३४वा । आऽ५न्नोऽ६हाइ ॥ (दा । २६८)

( दी० ४ । प० १८ । मा० २ )२३

१५६।६) ॥ गौरीवीतम् ॥

वः । प्रवाः॥ इन्द्रायेन्द्रा । यमादाऽ१नाऽ२म् । हराइहयश्वा । यगायाऽ१ताऽ२॥ सखायाऽ२३स्सोऽ३॥ मापोऽ२३४वा । आऽ५न्नोऽ६हाइ ॥ ( सु । २६९ )

( दी० ५ । प० ९ । मा० ५ )२४

(१५७।१) ॥ काण्वे द्वे । द्वयोः कण्वो गायत्रीन्द्रः ॥

यंवायाम्॥ ऊऽ२३४त्वा । तादीदाऽ२३४र्थाः । इन्द्रत्वायन्तः । सखाऽ२३४याः ॥ कण्वाऽ३१२३४ः॥ उक्थेभिर्जरन्ते । एहियाऽ६हा । होऽ५इ ॥ डा ॥ ( नू । २७० )

( दी० ४ । प० १० । मा० ६ )२५

१५७।२ )

यमूऽ३त्वातदिदर्थाः॥ एहिहाऽ२इ । वयमुत्वातदिदर्थाइन्द्रत्वायन्तस्सखाऽ२३याः ॥ काऽ२३४ण्वाः॥ ऊ । क्थाइ । भिर्जोऽ२३४वा॥ रन्ताऽ३याऽ२३४५ ॥ ( नू । २७१ )

( दी० ५ । प० ८ । मा० ६ )२६

[ साम-तन्त्र-सूत्राणि ] [२६६]२१ रि खा सि भ इदि १२.१.५: गि १२.२.१, ( इदं सामतन्त्र भाष्यानुसारेण ) [२६७] २२, [२६९]२४ ( पृथक् सूत्राणि न सन्ति ) [२६८] २३ इ दि १२.१.६; घोण १२.१.९; [२७०]२५ इत ५.४.२; [२७१] २६ आऽन्तस्थादि: २.९.९, रात् ११.३.७;

श्रुतकक्षः सुकक्षो वा आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९२ । १९ )

इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥१५८॥

इरिम्बिठिः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । १७ । ११ )

अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिब ॥१५९॥

इन्द्राय मद्वने सुतं परि ष्टोभन्तु नो गिरः । अर्कमर्चन्तु कारवः ॥१५८॥

अयं त इन्द्र सोमो निपूतो अधि बर्हिषि । एहीमस्य द्रवा पिब ॥१५९॥

---

(१५८।१) ॥ गौरीविते द्वे । द्वयोर्गौरीवितो गायत्रीन्द्रः ॥

इन्द्रायमद्वनाइ॥ सुताम् । इन्द्रायमद्वनेसुताम् । पराइष्टोऽ२३भा । तुनोगिरो॥ अर्कमाऽ२३र्चा॥ तुकाराऽ२३वाऽ३४३ः। ओऽ२३४५ इ॥ डा ॥ ( दी० ५ । प० ९ । मा० ६ )२७ ( भू । २७२ )

(१५८।२)

इन्द्रायमद्वनेहाउ॥ ओइसूऽ३ताम् । परिष्टो । भा । तुनोऽ२३हाइ । गाइराऽ२ः । परिष्टोभा । तुनोऽ२३हाइ॥ गाइराऽ२ः॥ अर्कोऽ२३म्॥ आऽ२र्चाऽ२३४औहोवा ॥ एऽ३ । तुकाऽ३२वाऽ२३४५ः ॥ ( दी० ६ । प० १३ । मा० १२ )२८ ( गा । २७३ )

(१५८।३) ॥ औतकक्षम् । श्रुतकक्षा गायत्रीन्द्रः ॥

इन्द्रायमद्वनेसुतम् । इन्द्रायमोवा॥ द्वाऽ३नाइसूऽ३ताम् । परिष्टो । भाऽ२३ । हाऽ३हाऽ३ । तूनोऽ२गाऽ२३४इराः॥ आर्कमर्चाऽ३ । हाऽ३हा॥ तुकाराऽ२३वाऽ३४३ः। ओऽ२३४५इ॥डा॥ ( दी० ५ । प० १२ । मा० ७ ) २९( फे । २७४ )

(१५९।१) सौमित्रे द्वे । द्वयोः सुमित्रो गायत्रीन्द्रः ॥

अयंतआ॥ द्रसोमो । होवाऽ३होइ । निपूतोआऽ३ । धीबर्हाऽ२३४इषी॥ आइहीमस्याऽ२३॥ द्राऽ२वाऽ२३४औहोवा ॥ पीऽ२३४बा ॥ ( दी० ६ । प० ८ । मा० ६ ) ३० ( गू । २७५ )

(१५९।२)

अयंतइन्द्रसोऽ४माः॥ निपूतोअधिवाऽ२हाइषीऽ२ । एहोऽ२इमास्या॥ द्रवापाइबाऽ२ । आइहीमस्याद्रवाऽ३१उवाऽ२३॥ पीऽ२३४बा ॥ ( दी० ५ । प० ६ । मा० ८ )३१ ( पै । २७६ )

---

[ साम-तन्त्र-सूत्राणि ] [२७२]२७ [ पृथक् सूत्राणि न सन्ति ) [२७३]२८ आइषातायानाम् १२.३.१; [२७४]२९ गादि न्यवारा ५.५.१; [२७५]३० सो दन्त्यादेः खौ ८.७.६; इक्षम् १०.२.३; यिण् दूरे ११.५.१०; [२७६]३१ असु ६.६.८; पिबायाम् ७.७.१; ए १२.२.४;

मधुछन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ४ । १ )

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥१६०॥

त्रिशोकः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ४५ । २२ )

अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥ १६१ ॥

सूरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥१६०॥

अभि त्वा वृषभा सुते सुत९ सृजामि पीतये । तृम्पा व्यश्नुही मदम् ॥१६१॥

---

(१५९।३) इहवद्दैवोदासम् । दिवोदासो गायत्रीन्द्रः ॥

अयंतइन्द्रसोऽ४मः । नाऽ२३४इ । पूताअधिबर्हिषी ॥ निपूताअधिबर्हाऽ२३इषी ॥

एहोइमाऽ२३स्या ॥ द्रवापाऽ२३४५इबाऽ६५६॥ ईऽ२३४हा ॥ ( खै । २७७ )

( दी० ६ । प० ७ । मा० ८ )३२

(१६०।१) ॥ शाकरवर्णम् । शाकरवर्णो गायत्रीन्द्रः प्रजापतिर्वा ॥

सूरू ॥ पकृत्नुमूतयाइ। सुदुघाम् । इवगोऽ२ । दुहयाऽ३१उवाऽ२३। ऊऽ३४पा ॥ जुहूमाऽ२३सी॥

द्यविद्यवियाऽ३१उवाऽ२३ ॥ ऊऽ३२३४पा ॥ ( दी० ३ । प० ९ । मा० ४ )३३ ( क्ली । २७८ )

(१६०।२) ॥ रैवतम् । रेवतो गायत्रीन्द्रः ( रैणवम् । रेणुर्गायत्री प्रजापतिर्वा ) ॥

सुरूहाहाउ ॥ पकृत्नुमूऽ२तायाऽ२इ । सुदुघाम् । इवगोऽ२ । दुहे । एहीयहीऽ१ ॥ जुहौऽ२ ।

हौऽ२ । हुवाऽ२इ । मासीऽ२॥ द्यविद्यवि ॥ एहीयहीऽ१ ॥ ( फी । २७९ )

( दी० १० । प० १२ । मा० ४ )३४

(१६०।३) ॥ ऐणवे वैणवे वा औदले द्वे, वीकम् । वीको गायत्रीन्द्रः प्रजापतिर्वा ॥

सुरूपकृत्नूऽ३मूताऽ२३४याइ॥ ओइसुरूपकृत्नूमूऽ१तायाऽ२इ । ओइसुदुघामिवागोऽ१दुहाऽ२इ ।

जुहूमसाऽ२इ । द्यविद्याऽ२३४वी । एही ॥ जुहूऽ२मासीऽ२॥ द्यविद्या । वीवीऽ२३ ।

आऔहोइ । आऔहोऽ६वा॥ एऽ३ । द्यविऽ३ईऽ२३४५ ( दी० ६ । प० १३ । मा० १० )३५(गौ।२८०)

(१६०।४) ॥ औदलम् । ओदलो गायत्रीन्द्रः ॥

सुरूपकृ॥ त्नूमूऽ२तयाइ । सुदुघामीऽ३ । वागोदूऽ२३४हाइ ॥ सुदुघामा॥ वागोऽ२दुहाइ ।

जुहूमाऽ२३सीऽ३ । द्याऽ२३वीऽ३ । द्याऽ३४५वोऽ६हाइ॥( दी० ४ । प० ९ । मा० ४ )३६ (घी।२८१)

इति ग्रामेगेयगाने चतुर्थः प्रपाठकः ॥४॥

---

[ साम-तन्त्र-सूत्राणि ] [२७७]३२ डिगोऽसो ३.४.७; [२७८] ३३ ये १०.४.९;

[२७९]३४ ( पृथक् सूत्राणि न सन्ति ) [२८०]३५ उ तिस्रा । ४.१०.३. द्यवे: १२.५.९: [२८१]३६ संवाया: ५.६.६;

कुसीदी काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ८२ । ७ )

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषे ॥१६२॥

शुनः शेप आजीगर्तिः । इन्द्रः । गायत्री । ( ऋ० १ । ३० । ७ )

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥१६३॥

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषे ॥१६२॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥१६३॥

---

(१६१।१) ॥ आर्षभाणि सैन्धुक्षितानि वा वाभ्राश्वानि वा त्रीणि । त्रयाणामृषभो गायत्रीन्द्रः ॥

अभित्वावृषभासुताइ ॥ सूतꣳसृजा । मिपाइताऽ१याऽ२इ ॥ तृम्पावाऽ१याऽ२ ॥

श्नुहाऽ३१उवायेऽ३ ॥ माऽ२३४दाम् ॥ ( दी० ३ । प० ६ । मा० ५ )१ ( टु । २८२ )

(१६१।२)

अभित्वावृषभासुतअभ्याहाउ ॥ त्वावृऽ३षाभाऽ१सुतऽ२इ । सुतꣳसृजा ।

मिपाइताऽ१याऽ२इ ॥ तृम्पाऽ३होइ । वियाऽ३हो ॥ श्नुहीमाऽ२३दाऽ३४३म् ।

ओऽ२३४५इ ॥ डा ॥ ( दी० ७ । प० ९ । मा० ८ )२ ( झै । २८३ )

(१६१।३)

अभित्वावृषभासुत । सुतꣳसृजोवा ॥ मिपीतायाऽ२इ । सुतꣳसृजामि । पीताऽ२३याइ ॥

त्राऽ२३०पाऽ३ ॥ वाऽ२याऽ२३४ओहोवा ॥ श्नुहीमदाऽ२३४५म् ॥ ( दी । २८४ )

( दी० ९ । प० ८ । मा० ४ ) ३

१६२।१ ) ॥ कौत्से पाश्ववाजे वा दाशवाजे वा द्वे, ऐडकौत्सम् । द्वयोः कुत्सो गायत्रीन्द्रः ॥

।ाही०द्राऽ२३ । चमसेषुवाईया ॥ सोमश्चमूषुतेसुतः । सोमश्चमू । षुताइसूऽ२३ताः ॥

।ाइबेऽ३द्वाइ । आस्याऽ३हाइ ॥ त्वमीशाऽ२३इषाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

( दी० ७ । प०१० । मा० १० ) ४ ( जौ । २८५ )

१६२।२) ॥ स्वार कौत्सम् ॥

इन्द्रचामाऽ६सेषुवा ॥ सोमश्चमूषुताऽ१इसूऽ३ताः । सोमश्चमूऽ३ । षूऽ३ताइसूऽ३ताः ॥

।ऽ२इ । पिबेदस्योऽ२३४हाइ ॥ त्वमाऽ३इशाऽ५इषाऽ६५६इ ॥

( दी० ६ । प० ७ । मा० १० )५ ( खौ । २८६)

---

।ाम-तन्त्र-सूत्राणि] [२८२]१, [२८४]३, [२८६]५ ( पृथक् सूत्राणि न सन्ति ) [२८३]२ रस्तयुग्गुरोः ६.९.१०;
८५]४ डिहौ ५.७.७; ए. ७.४.५; अनु दुद्यो ९.६.९.

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ५ । १ )

आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः ॥ १६४ ॥

विश्वामित्रो गाथिनः । इन्द्रः । गायत्री । ( ऋ० ३ । ५१ । १० )

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्वा३स्य गिर्वणः ॥ १६५ ॥

आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखाय स्तोमवाहसः ॥१६४॥

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्व३स्य गिर्वणः ॥१६५॥

---

(१६३।१) सौमेधानि,पूर्वतिथानि वा पौर्वातिथानि वा त्रीणि । त्रयाणां सुमेधा गायत्रीन्द्र ॥

योगेयागेतवस्तराम् ॥ वाजेवाजेहवामहे॥ सखायाऽ२३ईऽ३ ॥ द्रमूऽ२३४वा । ताऽ५योऽ६हाइ ॥

( दी० ११ । प० ५ । मा० ३ ) ६ ( ङि । २८७ )

(१६३।२)

योगेयागेतवस्ताऽ६राम् ॥ वाजेऽ२वाजेऽ२हवाऽ२महेऽ३ । होवाऽ३हाइ ॥ साखाऽ२याईऽ२३ । होवाऽ३हाइ ॥ द्रमूऽ२३ । ताऽ२याऽ२३४औहोवा ॥ ऊऽ३२३४पा ॥ ( ग्लु । २८८ )

( दी० ११ । प० ८ । मा० ५ ) ७

(१६३।३) ॥ सौमेधम् ॥

योगेयागेतवाहाउस्ताराम् ॥ वाजेवाजे । हवाऽ२माहाइ । हूवाइ । औऽ३होऽ२३४वा । साखायइ । द्रमूऽ२तायाइ । हूवाइ । औऽ३होऽ२३४वा ॥ सखायआ ॥ हूवाऽ२इ । औऽ३होऽ२३४५वाऽ६५६ ॥ द्रमूऽ३तयेऽ२३४५ ॥ ( दी० ११ । प० १३ । मा० ९ )८ ( गो । २८९ )

(१६४।१) ॥ दैवातिथं मैधातिथं वा । देवातिथिर्गायत्रीन्द्रः ॥

आतूऽ३४ । एतानि । षीदाऽ६ता ॥ इंद्रमभाइ । प्रगायता । साखायस्स्तोम । वा । औऽ३हो । ववाऽ२हाऽ२३४साः॥ हयाइ । साखायस्स्तोम । वा । औऽ३हो ॥ हिम्माऽ२३ । हाऽ३४५सोऽ६हाइ ॥

( दी० ९ । प० १५ । मा० ४ ) ९ ( नी । २९० )

त्रिंशत् पञ्चमः खण्डः॥५॥ दशतिः ॥५॥

(१६५।१) आंगिरसं माधुछन्दसम् वा । मधुछन्दा गायत्रीन्द्रः ॥

इदाऽ६मे ॥ हियऽ३नूओऽ१जासाऽ२ । सुत॰राधा । नाम्पाऽ१ताऽ२इ । पिबातुवस्यागिर्वाणाऽ२३४ः ॥ पिबाऽ३४तुवाऽ३ ॥ स्याऽ२गाऽ२३४औहोवा ॥ वाऽ२३४णाः ॥

( दी० ३ । प० ८ । मा० ५ ) १० ( डु । २९१ )

---

[ साम-तन्त्र-सूत्राणि ] [२८७]६, [२९१]१० ( पृथक् सूत्राणि न सन्ति ) [२८८] ७ एऽश्रिकः १०.६.६; [२८९] ८ विम्वी ५.२.७; उपान्त्यमनु ६.६.७; धना ७.६.९; [२९०] ९ प्यामाप्मिण्याम् ६.८.१०;

कुसीदी काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ८२ । ७ )

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषे ॥१६२॥

शुनः शेप आजीगर्तिः । इन्द्रः । गायत्री । ( ऋ० १ । ३० । ७ )

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥१६३॥

य इन्द्र चमसेष्वा सोमश्चमूषु ते सुतः । पिबेदस्य त्वमीशिषे ॥१६२॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इन्द्रमूतये ॥१६३॥

---

(१६१।१) ॥ आर्षभाणि सैन्धुक्षितानि वा वाभ्राश्वानि वा त्रीणि । त्रयाणामृषभो गायत्रीन्द्रः ॥

अभित्वावृषभासुताइ ॥ सुतꣳसृजा । मिपाइताऽ१याऽ२इ ॥ तृम्पावाऽ१याऽ२ ॥

श्नुहाऽ३१उवायेऽ३ ॥ माऽ२३४दाम् ॥ ( दी० ३ । प० ६ । मा० ५ )१ ( डु । २८२ )

(१६१।२)

अभित्वावृषभासुतेअभ्याहाउ ॥ त्वावृऽ३षाभाऽ१सुतोऽ२इ । सुतꣳसृजा ।

मिपाइताऽ१याऽ२इ ॥ तृम्पाऽ३होइ । वियाऽ३हो ॥ श्नुहीमाऽ२३दाऽ३४३म् ।

ओऽ२३४५इ ॥ डा ॥ ( दी० ७ । प० ९ । मा० ८ )२ ( झै । २८३ )

(१६१।३)

अभित्वावृषभासुत । सुतꣳसृजोवा ॥ मिपीतायाऽ२इ । सुतꣳसृजामि । पीताऽ२३याइ ॥

त्राऽ२३०पाऽ३ ॥ वाऽ२यौऽ२३४औहोवा ॥ श्नुहीमदाऽ२३४५म् ॥ ( दी । २८४ )

( दी० ९ । प० ८ । मा० ४ ) ३

( १६२।१ ) ॥ कौत्से पाश्वाजे वा दाशवाजे वा द्वे, ऐडकौत्सम् । द्वयोः कुत्सो गायत्रीन्द्रः ॥

याहीऽद्राऽ२३ । चमसेषुवाईया ॥ सोमश्चमूषुतेसुतः । सोमश्चमू । षुताइसूऽ२३ताः ॥

पाइबेऽ३द्वाइ । आस्याऽ३हाइ ॥ त्वमीशाऽ२३इषाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

( दी० ७ । प०१० । मा० १० ) ४ ( जौ । २८५ )

(१६२।२) ॥ स्वार कौत्सम् ॥

यइन्द्रचामाऽ६सेषुवा ॥ सोमश्चमूषुताऽ१इसूऽ२ताः । सोमश्चमूऽ३ । षूऽ३ताइसूऽ२ताः ॥

आऽ२इ । पिबेदस्योऽ२३४हाइ ॥ त्वमाऽ३इशाऽ५इषाऽ६५६इ ॥

( दी० ६ । प० ७ । मा० १० )५ ( खौ । २८६ )

---

[साम-तन्त्र-सूत्राणि] [२८२]१, [२८४]३, [२८६]५ ( पृथक् सूत्राणि न सन्ति ) [२८३]२ रस्तयुग्गुरोः ६.९.१०; [२८५]४ डिहौ ५.७.७; ए. ७.४.५; अनु दुहो ९.६.९;

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ५ । १ )

आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखायः स्तोमवाहसः ॥ १६४ ॥

विश्वामित्रो गाथिनः । इन्द्रः । गायत्री । ( ऋ० ३ । ५१ । १० )

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्वाऽस्य गिर्वणः ॥ १६५ ॥

आ त्वेता नि षीदतेन्द्रमभि प्र गायत । सखाय स्तोमवाहसः ॥१६४॥

इदं ह्यन्वोजसा सुतं राधानां पते । पिबा त्व३स्य गिर्वणः ॥१६५॥

(१६३।१) सौमेधानि,पूर्वतिथानि वा पौर्वातिथानि वा त्रीणि । त्रयाणां सुमेधा गायत्रीन्द्र ॥

योगेयोगेतवस्तराम् ॥ वाजेवाजेहवामहे ॥ सखायाऽ२३ईऽ३ ॥ द्रमूऽ२३४वा । ताऽ५योऽ६हाइ ॥

( दी० ११ । प० ५ । मा० ३ ) ६ ( डि । २८७ )

(१६३।२)

योगेयोगेतवस्ताऽ६राम् ॥ वाजेऽ२वाजेऽ२हवाऽ२महेऽ३ । होवाऽ३हाइ ॥ साखाऽ२याईऽ२३ ।
होवाऽ३हाइ ॥ द्रमूऽ२३ । ताऽ२याऽ२३४औहोवा ॥ ऊऽ३२३४पा ॥ ( ग्लु । २८८)

( दी० ११ । प० ८ । मा० ५ ) ७

(१६३।३) ॥ सौमेधम् ॥

योगेयोगेतवाहाउस्ताराम् ॥ वाजेवाजे । हवाऽ२माहाइ । हूवाइ । औऽ३होऽ२३४वा ।
साखायइ । द्रमूऽ२तायाइ । हूवाइ । औऽ३होऽ२३४वा ॥ सखायआ ॥ हूवाऽ२इ ।
औऽ३होऽ२३४५वाऽ६५६ ॥ द्रमूऽ३तयेऽ२३४५ ॥ ( दी० ११ । प० १३ । मा० ९ )८ ( गो । २८९ )

(१६४।१) ॥ दैवातिथं मैधातिथं वा । देवातिथिर्गायत्रीन्द्रः ॥

आतूऽ३४ । एतानि । षीदाऽ६ता ॥ इंद्रमभाइ । प्रगायता । साखायस्स्तोम । वा । औऽ३हो ।
ववाऽ२हाऽ२३४सा ॥ हयाइ । साखायस्स्तोम । वा । औऽ३हो ॥ हिम्माऽ२३ ।
हाऽ३४५सोऽ६हाइ ॥ ( दी० ९ । प० १५ । मा० ४ ) ९ ( नी । २९० )

त्रिंशत् पञ्चमः खण्डः ॥५॥ दशतिः ॥५॥

(१६५।१) आंगिरसं माधुछन्दसम् वा । मधुछन्दा गायत्रीन्द्रः ॥

इदाऽ६मे ॥ हियऽ३नूओऽ१जासाऽ२ । सुतꣳराधा । नाम्पाऽ१ताऽ२इ ।
पिबातुवस्यागिर्वाणाऽ२३४ः ॥ पिबाऽ३४तुवाऽ३ ॥ स्याऽ२गाऽ२३४औहोवा ॥
वाऽ२३४णाः ॥ ( दी० ३ । प० ८ । मा० ५ ) १० ( डु । २९१ )

~ [ साम-तन्त्र-सूत्राणि ] [२८७]६, [२९१]१० ( पृथक् सूत्राणि न सन्ति ) [२८८] ७ एऽश्रिकः १०.६.६;
[२८९] ८ विम्बी ५.२.७; उपान्त्यमनु ६.६.७; धना ७.६.९; [२९०] ९ प्यामाप्मिण्याम् ६.८.१०;

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ८ । ५ )

महाँ इन्द्रः परश्च नु महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः ॥१६६॥

महाँ इन्द्रः पुरश्च नो महित्वमस्तु वज्रिणे । द्यौर्न प्रथिना शवः ॥१६६॥

---

(१६५।२) ॥ गायत्री (आंगिरसं) कौञ्चम् वा । क्रौंचो गायत्रीन्द्रः ॥

इद ऽहियाऽ४औहो॥ नूऽ२ओजाऽ२३४सा । सुतऽराधा । नाऽ३२म् । पाऽ२३४ताइ ॥
पिबातुवस्याऽ२३ । ग । वाहाइ॥ वाऽ२३४णाः । एहियाऽ६हा । होऽ५इ ॥ डा ॥ (छे । २९२)
( दी० २ । प० १२ । मा० ७ ) ११

(१६५।३) ॥ आंगिरसं घृतश्चुन्निधनं प्राजापत्यं माधुच्छन्दसं वा । प्रजापतिर्गायत्रीन्द्रः ॥

इद ऽह्यनूऽ६ओजसा । सुतऽराधा । ना०पातौ । होवाऽ३हाइ । पिबातुव । स्यगाइर्वाणौ ।
होवाऽ३हाइ॥ पिबातुवौ । होवाऽ३हा॥ स्यगायेऽ३ः । वाऽ२नाऽ२३४औहोवा ॥
घृतश्चुताऽ२३४५ः ॥ ( दी० ९ । प० १२ । मा० ७ )१२ ( थे । २९३ )

(१६६।१) ॥ वाम्राणि प्रैयमेधानि वा त्रीणि । त्रयाणां वाम्रो गायत्रीन्द्रः ॥

महा ऽइन्द्राः॥ पुरश्चनो । माऽ१हीऽ२त्वामाऽ२ । स्तुव । ज्रिणाइ॥ द्यौऽ२र्नाप्राऽ२ ॥
थिनाशाऽ२३वाऽ३४३ः । ओऽ२३४५इ ॥डा॥ ( दी० १ । प० ९ । मा० ५ )१३ ( घु । २९४ )

(१६६।२)

महाहा ऽइन्द्राः॥ पूऽ२राश्चाऽ३नो । महाऽ२इत्वाऽ२३४मा । स्तुवौऽ३हौऽ३ । हवाऽ५ज्रिणाइ ।
द्यौर्नप्र । थिनाशवाऽ२३ः॥ द्यौऽ२र्नाऽ२३४प्रा॥ थिनौऽ३हौऽ३ । हवोवा । शाऽ५वोऽ६हाइ ॥
( दी० ३ । प० ११ । मा० ६ )१४ ( ट्रू । २९५ )

(१६६।३)

महा ऽइन्द्राऽ५ःपुरश्चनाः॥ माहित्वाऽ३२३२३मा॥ स्तुवज्राऽ३२३२३इणाइ॥ द्यौर्नाऽ३२३२३प्रा॥
थिनाशवाऽ३२३२३४३ः । ओऽ२३४५इ ॥ डा ॥ ( दी० ३ । प० ७ मा० ६ )१५( ट्रू । २९६ )

---

**[साम-तन्त्र-सूत्राणि]** [२९२]११ अन्तश्च १.१.९; गि १२.१.४; [२९३] १२ अन्त्याम् ९.६.८; (ओ)उत्तु९.६.४;
[२९४] १३ तद्वेदौषा ३.९.६; दि घमविङ् ७.५,७; चनो ८.७.४; [२९५]१४ इणि ४.६.१०;
[२९६]१५ स्तुव ५.७.८;

कुसीदी काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ८१ । १ )

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभं सं गृभाय । महाहस्ती दक्षिणेन ॥१६७॥

प्रियमेध आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ६९ । ४ )

अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुं सत्यस्य सत्पतिम् ॥ १६८ ॥

आ तू न इन्द्र क्षुमन्तं चित्रं ग्राभꣳसं गृभाय । महाहस्ती दक्षिणेन ॥ १६७ ॥

अभि प्र गोपतिं गिरेन्द्रमर्च यथा विदे । सूनुꣳ सत्यस्य सत्पतिम् ॥ १६८ ॥

---

(१६७।१)  ॥ गौरीविते द्वे । द्वयोर्गौरीवितिर्गायत्रीन्द्रः ॥

आतूनआ ॥ इक्षुमाऽ२३न्ताम् । चाइत्रंग्राभाऽ२३ꣳहाइ । संगृ२भाया । महाहस्तोऽ२३४हाइ । दक्षाऽ२इणाइना ॥ महाऽ२३ ॥ हाऽ२स्ताऽ२३४औहोवा ॥ दक्षिणेऽ२नाऽ२३४५ ॥ (घे । २९७)

(१६७।२)  ( दी० ६ । प० ९ । मा० ८ )१६

आतूनइन्द्रक्षुमान्ताम् ॥ चित्राऽ२०ग्राऽ२३४भाम् । संगृभाऽ२३४या । मोऽ२हाऽ२ ॥ हाऽ२स्ताऽ२३४औहोवा ॥ दक्षिणनाऽ२३४५ ॥  ( दी० ५ । प० ६ । मा० ४ ) १७ (पी । २९८)

(१६७।३) ॥ आपालवैणवे, वेणवे वा आपाले वा आकूपारे पारववे वा द्वे । द्वयोराकूपारो गायत्रीन्द्रः ॥

आतूनइ । इक्षुमाऽ६न्ताम् ॥ चित्रंग्राभꣳसंगृभाऽ२या । चित्रंग्राभꣳसम् । गृऽ । औऽ३होइ । भाऽ२३४या ॥ एहोइ । महाहस्तीदक्षाऽ२३होइ ॥ औहो । वाहोऽ२३४वा । णाऽ५इनोऽ६हाइ ॥

(१६७।४)  ( दी० ९ । प० १२ । मा० ८ )  १८ ( थै । २९९ )

आतूनइन्द्रक्षुमाऽ६न्ताम् ॥ चित्रंग्राभꣳसंगृभाया । चित्रंग्राभꣳसम् । गृऽ२३ । ईऽ३४हा । भाऽ२३४या ॥ एहोइ । महाहस्तीदक्षाऽ२३होइ ॥ औहो । वाहोऽ२३४वा । णाऽ६इनोऽ६हाइ ॥*  ( दी० १० । प० ११ । मा० ७ )१९ ( पे । ३०० )

(१६८।१)  ॥ धुरोःसामनी द्वे । द्वयोर्धुरो गायत्रीन्द्रः ॥

अभीअभी ॥ प्रगोऽ३पार्तिगिराऽ२ । इन्द्रमर्चयाथाऽ१विदाऽ२इ ॥ सूनूऽ३ꣳहोइ । सत्योऽ२३४हा ॥ स्याऽ२साऽ२३४औहोवा ॥ पतीऽ३मेऽ२३४५ ॥  ( थी । ३०१ )

( दी० ४ । प० ७ । मा० ४ )२०

---

[ साम-तन्त्र-सूत्राणि] [२९७] १६ [२९८] १७ [२९९] १८ [३००] १९ ( पृथक् सूत्राणि न सन्ति )
[३०१]२० चतुक्षि चदा १०.८.१०;

वामदेवो गौतमः । इन्द्रः । गायत्री । ( ऋ० ४ । ३१ । १ )

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥१६९॥

कया नश्चित्र आ भुवदूती सदावृधः सखा । कया शचिष्ठया वृता ॥१६९॥

(१६८।२)

अभीअभी ॥ प्रगो । पतिंगिरा । इन्द्राम् । अर्चायाऽ२३४था । हिऽ३०स्थिहिऽ३म् । आऽ२३४५इविदाइ ॥ सूनुंसत्यस्यसा । हिऽ३स्थिहिऽ३म् । ओऽ२३४वा । पाऽ५तोऽ६हाइ ॥

( दी० १ । प० ११ । मा० ९ )२१( को । ३०२ )

(१६८।३) ॥ महागौरीवितं गौरीवितं वा । गौरीवितिर्गायत्रीन्द्रः ॥

अभि । प्रगोऽ३ । पतिंगिरा ॥ इन्द्रमर्चयथाविदाऽ२३इ । सूनुंसत्याऽ३१२३ । स्यसाऽ५त्पताइम् ॥ सूनुंसत्याऽ३१२३ ॥ स्यसोवा । पाऽ५तोऽ६हाइ ॥ ( घी । ३०३ )

( दी० १ । प० ९ । मा० ४ )२२

(१६९।१) ॥ वाचस्सामनी द्वे । द्वयोर्वाक् गायत्रीन्द्रः ॥

कयानश्ची ॥ त्रआभूऽ३वात् । ऊताइस । दा । वाद्धःसाऽ२३४खा ॥ कयाशाऽ३चीऽ३ ॥ ष्ठाऽ२३याऽ३ । वाऽ३४५र्तोऽ६हाइ ॥ ( दी० २ । प० ८ । मा० ४ )२३ ( जी । ३०४ )

(१६९।२)

होवाइ । होवाइकयानश्ची ॥ त्रआभूऽ३वाऽ३४त् ॥ होवाइ । होवाऊतीसदा ॥ वृधास्साऽ३खाऽ३४ ॥ होवाइ । होवाइकयाशचाइ ॥ ष्ठया । वाऽ२त्ताऽ२३४औहोवा ॥ ऊऽ२३४पा ॥ ( दी० १९ । प० ११ । मा० १० )२४( त्वौ । ३०५ )

(१६९।३) ॥ महावामदेव्यं वा । वामदेवो गायत्रीन्द्रः ॥

काऽ५या । नश्चाऽ३इत्राऽ३आभुवात् ॥ ऊ । तीसदावृधस्स । खा । औऽ३होहाइ । कयाऽ२३शचाइ ॥ ष्ठयौहोऽ३ । हिंमाऽ२ । वाऽ२र्तोऽ३५हाइ ॥ ( डु । ३०६ )

( दी० ६ । प० १० । मा० ६ )२५

[साम-तन्त्र-सूत्राणि ] [३०२]२१ उज्नु लघुहौं ३.५.९; [३०३]२२ थार्वा १२.७.७; [३०४]२३ न चतुर्थहकाराघोषादयः । १.१०.४; शवाद्रि २.७.६; नोविरे ४.१०.७; [३०५]२४ आद्यप्रथम्यूष्माणि १०.३.६, [३०६] २५ उपान्त्ये १.१.४; हायन् ४.२.२; अनित्ये हि ४.८.५; हानिधने ( प ) रे णिवत् ४.९.३; ब्यन्दि ४.११.७;

श्रुतकक्षः सुकक्षो वा आङ्गिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९२ । ७ )

त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥१७०॥

मेधातिथिः काण्वः । सदसस्पतिः । गायत्री । ( ऋ० १ । १८ । ६ )

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥१७१॥

त्यमु वः सत्रासाहं विश्वासु गीर्ष्वायतम् । आ च्यावयस्यूतये ॥१७०॥

सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ॥१७१॥

वामदेवो गौतमः । इन्द्रः । गायत्री । (न ऋग्वेदीयः)

ये ते पन्था अधो दिवो येभिर्व्यश्वमैरयः । उत श्रोषन्तु नो भुवः ॥१७२॥

---

(१७०।१) ॥ इन्द्रस्य सत्रासाहीये, अजितस्य आजिती वा द्वे । द्वयोरिन्द्रो गायत्रीन्द्रः ॥

त्यमुवाः॥ सत्रासाहाऽ२म्। विश्वासुगीर्षूआऽ१याताऽ२म्। आच्याऽ२३॥ वाऽ२याऽ२३४औहोवा॥ सियूऽ३तयेऽ२३४५ ॥ ( दी० ६ । प० ६ । मा० ५ )२६( कु । ३०७ )

(१७०।२)

त्याऽ३४म् । उवस्सत्रासाहम् । ओऽ६वा॥ विश्वासुगीर्ष्वायाऽ२ताम् । आऽ२च्या । वाऽ२३या ॥ सियोऽ३हा । वाहाऽ३४३इ॥ ताऽ२३४योऽ६हाइ । ( दी० ७ । प० ९ मा० ५ )२७( झु । ३०८ )

(१७१।१) ॥ वामदेव्यम् । वामदेवो गायत्रीन्द्रः ॥

सादा॥ सस्पताइमद्भुता । ओऽ२३४वा । प्रायाआऽ२३४वा॥ आइंद्रा । स्याकामाऽ२३४५याऽ६५६म्॥ सनिमेऽ२धामयासिषाऽ२३४५म् ॥ ( ठु । ३०९ )

( दी० ३ । प० ७ । मा० ५ )२८

(१७२।१) ॥ अश्विनोः साम । अश्विनौ गायत्रीन्द्रः ॥

हाइ । आप्स्नदाऽ२३४क्षाः । आप्स्नदाऽ२३४क्षाः । येतेपंथाअऽ३धोदिवाऽ२३४५ः ॥ हाइ । आप्स्नदाऽ२३४क्षाः । आप्स्नदाऽ२३४क्षाः । येभिर्व्यश्वऽ३माइरयाऽ२३४५ः॥ हाइ । उताश्रोऽ२३४षा॥ तुनोऽ२३ । भूऽ२वाऽ२३४औहोवा॥ ईऽ२३४ती ॥ ( गा । ३१० )

( दी० ६ । प० १३ । मा० १२ )२९

---

[ साम-तन्त्र-सूत्राणि ] [३०७]२६ [३०९]२८ [३१०]२९ ( पृथक् सूत्राणि न सन्ति ) [३०८]२७ हो वाहायाम् ७.७.५;

सुकक्ष आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९३ । २८ )

भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो । यदिन्द्र मृळयासि नः ॥१७३॥

बिन्दुः पूतदक्षो वा आंगिरसः । मरुतः । गायत्री । ( ऋ० ८ । ९४ । ४ )

अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥१७४॥

देवजामय इन्द्रमातरः । इन्द्रः । गायत्री । ( ऋ० १० । १५३ । १ )

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । भेजानासः सुवीर्यम् ॥१७५॥

भद्रंभद्रं न आ भरेषमूर्जं शतक्रतो । यदिन्द्र मृडयासि नः ॥१७३॥

अस्ति सोमो अयं सुतः पिबन्त्यस्य मरुतः । उत स्वराजो अश्विना ॥१७४॥

ईङ्खयन्तीरपस्युव इन्द्रं जातमुपासते । वन्वानासः सुवीर्यम् ॥१७५॥

---

(१७३।१) ॥ गौतमस्य भद्रं । गोतमो गायत्रीन्द्रः ॥

भद्रंभाद्राम्॥ नआभाऽ२३राऽ३ । आइषामूर्जाम्॥ शतक्राऽ२३ताऽ३उ॥ यादिन्द्रामृ॥ डाऽ२याऽ२३४औहोवा॥ सीऽ२३४नाः ॥ ( दी० ३ । प० ७ । मा० ७ )३०( ठे । ३११ )

(१७४।१) ॥ अश्विनोः साम, सोम साम वा । अश्विनौ गायत्रीन्द्रः ॥

अस्तिसोमोअय२सुतः । अ । स्त्येआस्ती॥ सोमोअय२सुतःपिबन्त्यस्यम । रुतोऽ२३४हाइ ॥ उतस्वराऽ५जोवा॥ श्वाऽ५इनोऽ६हाइ॥ ( दी० ४ । प० ७ । मा० ७ )३१( थे । ३१२ )

॥ द्वाविंशतिः, षष्ठः खण्डः ॥ ६ ॥ दशतिः ॥ ८ ॥

इत्यैन्द्राख्ये द्वितीये गाने बहुसामाख्यम् ॥

॥ द्वितीयं तन्त्रं सम्पूर्णम् ॥

(१७५।१) ॥ त्वाष्ट्री साम । त्वष्टा गायत्रीन्द्रः ॥

ईङ्खयन्तीः॥ अपाऽ२स्यूवाऽ२ः । आइन्द्रंजातम् । ऊपाऽ१साताऽ२इ॥ वन्वानाऽ२३साः ॥ सुवीरियाऽ३१उवाऽ२३ ॥ वृधेऽ१ ॥ ( दी० ३ । प० ७ । मा० ७ )३२ ( ठे । ३१३ )

---

[साम-तन्त्र-सूत्राणि] [३११]३० ( पृथक् सूत्राणि न सन्ति ) [३१२]३१ चतुर्थधुम् १.६.४; [३१३]३२दान् भिके घरे ४.७.८; जि ७.५.४; ह्युरियनि ११.२.६;

गोधा ऋषिका । इन्द्रः । पङ्क्तिः । ( ऋ० १० । १३४ । ७ )

नकिर्देवा मिनीमसि नकिरा योपयामसि । मन्त्रश्रुत्यं चरामसि ।
पक्षेभिरपिकक्षेभिरत्राभि सं रभामहे ॥१७६॥

प्रस्कण्वः काण्व. । अश्विनौ । गायत्री । ( ऋ० १ । ४६ । १ )

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥१७८॥

गोतमो राहूगणः । इन्द्रः । गायत्री । ( ऋ० १ । ८४ । १३ )

इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥१७९॥

न कि देवा इनीमसि न क्या योपयामसि । मन्त्रश्रुत्यं चरामसि ॥१७६॥

दध्यङ्ङाथर्वणः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

दोषो आगाद्बृहद्गाय द्युमद्गामन्नाथर्वण । स्तुहि देवं सवितारम् ॥१७७॥

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥१७८॥

इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः । जघान नवतीर्नव ॥१७९॥

---

(१७६।१) ॥ गोधा साम । गोधा गायत्रीन्द्रो विश्वेदेवा वा ॥

नकिर्देवाः ॥ इनाइ । इनीमासाऽ३इ । मासीऽ३या ॥ नाकियायो ॥ पया । पयामासाऽ३इ । मासीऽ३या ॥ मन्त्रश्रुत्याम् ॥ चरा । चरामासाऽ३इ । मासीऽ३या ॥ ( छू । ३१४ )

( दी० २ । प० १२ । मा० ६)३३

(१७७।१) सवितुस्साम । सविता गायत्री सविता ॥

दोषाआगात् ॥ बृहद्गाया । द्युमद्गाऽ२३मान् । आथर्वणाऽ३ ॥ स्तुहि । औऽ३होऽ३४इ ॥ देवाऽ३म् । सवोवा । ताऽ५रोऽ६हाइ ॥ ( दी० ६ । प० ९ । मा० ६ )३४ ( घू । ३१५ )

(१७८।१) ॥ उषसस्साम । उषा गायत्र्यश्विनौ ॥

एषोउषाः ॥ आपूर्विया । व्युच्छति । होवाऽ३हाइ । प्रियादाऽ२३इवाऽ३४ः ॥ स्तुषाऽ३४इवामाऽ३ ॥ श्विनोऽ२३४वा । बृऽ५होऽ६हाइ ॥ ( दी० ६ । प० ८ । मा०७) ३५(गे । ३१६)

॥ इति ग्रामे गेय-गाने पञ्चमस्यार्धः प्रपाठकः ॥

(१७९।१) ॥ त्वष्टुरातिथ्ये द्वे । द्वयोस्त्वष्टा गायत्रीन्द्रः ॥

इन्द्रोदधीचोअस्थभिरियाऽ२ईऽ३या ॥ वृत्राण्यप्रतिष्कुतइयाऽ२ईऽ३या ॥ जघाननवतीर्नवइयाऽ२ ॥ ईऽ२ । याऽ२३४ । औहोवा ॥ ऊऽ२३४पा ॥ ( दी० ८ । प० ७ । मा० ५ ) १ ( ङु । ३१७ )

(१७९।२ )

इन्द्रोदधाइ ॥ चोअस्थाऽ२३४भीः ॥ वृत्राणिया । प्रातिष्कुताः ॥ जघानाऽ२३ना ॥ वतीर्नवा । औऽ३होवा । होऽ५इ ॥डा॥ ( दी० ५ । प० ९ । मा० ५ ) २ ( भु । ३१८ )

---

[साम-तन्त्र-सूत्राणि] [३१४]३३ द्विर्द्वितीयो लुप् ४.१०.९; द्वितीयवति ४.१०.१०; घे भे ४.११.१; सचन् ६.१.८; न.न ९.४.३. तात्पर्वान्ते १२.८.३; [३१५]३४ [३१६]३५ [३१७]१ [३१८]२ ( पृथक् सूत्राणि न सन्ति )

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ९ । १ )

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महाँ अभिष्टिरोजसा ॥१८०॥

वामदेवो गौतमः । इन्द्रः । गायत्री । ( ऋ० ४ । ३२ । १ )

आतू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । महान्महीभिरूतिभिः ॥१८१॥

वत्सः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ६ । ५ )

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥१८२॥

शुनःशेप आजीगर्तिः । इन्द्रः । गायत्री । ( ऋ० १ । ३० । ४ )

अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥१८३॥

इन्द्रेहि मत्स्यन्धसो विश्वेभिः सोमपर्वभिः । महा२ अभिष्टिरोजसा ॥१८०॥

आ तू न इन्द्र वृत्रहन्नस्माकमर्धमा गहि । महान्महीभिरूतिभिः ॥१८१॥

ओजस्तदस्य तित्विष उभे यत्समवर्तयत् । इन्द्रश्चर्मेव रोदसी ॥१८२॥

अयमु ते समतसि कपोत इव गर्भधिम् । वचस्तच्चिन्न ओहसे ॥१८३॥

(१८०।१) ॥ पौषम् । पूषा गायत्रीन्द्रः ॥

इन्द्रेहिमाहाउ ॥ त्सीऽ३आन्धाऽ३सा: । वाइश्वेभिस्सोऽ२३हाऽ३ । मापर्वाऽ२३४भीः । महा२३ ॥ आऽ२भाऽ२३४औहोवा ॥ ष्टिरोजसाऽ२३४५॥ ( दी० ६ । प० ७ मा० ६)३ (खु।३१९)

(१८१।१) ॥ इन्द्रस्यमायम्, माया वा । इन्द्रो गायत्रीन्द्रो वृत्रहा वा ॥

आतूओहो । आतूओहो ॥ नइन्द्रवृत्राऽ२३४हान् । अस्माकमर्द्धम् । आगाऽ२३ही । गाहीऽ२ ॥ माहाऽ२न्माहीऽ२३ ॥ भिरूऽ२३४वा । ताऽ५इमोऽ६हाइ ॥ ( दी० १० । प० ९ । मा०७)४ (भे।३२०)

(१८२।१) ॥ इन्द्रस्य संवर्तस्य सांवर्तं वा द्वे । द्वयोरिन्द्रो गायत्रीन्द्रः ॥

हा । हाउवाऽ३ । ओजस्तदस्यातित्विषेऽ२३४ ॥ हा । हाउवा । उभेयत्समवर्तयाऽ२३४त् ॥ हा । हाउवाऽ३ । इन्द्रश्चर्मेऽ२वरोदसीऽ२३४५ ॥ ( दी० ४ । प० ९ । मा० ४ )५( धी । ३२१ )

(१८२।२)

ओजस्तदाऽ५स्यातित्विषाइ ॥ उभेयत्समवर्तयादाऽ१इन्द्राऽ२३:॥ चाऽ२मोऽ२३४औहोवा ॥ वरोदसीऽ२३४५ ॥ ( दी० ५ । प० ४ । मा० ४ )६( भी । ३२२ )

(१८३।१) ॥ आंगिरसस्य शौनःशेपम्, च्यावनं वा । शुनःशेपो गायत्रीन्द्रः ॥

अयाऽ५मु । ताऽ३इसाऽ३मातसाइ ॥ कापोतइ । वगाभोऽ१धीऽ२म् ॥ वाचाऽ२स्ताच्चीऽ२३त् ॥ नओऽ२३४वा । हाऽ५सोऽ६हाइ ॥ ( दी० २ । प० ७ । मा० ७ )७( छे । ३२३ )

[ साम-तन्त्र-सूत्राणि] [३१९] ३ भादि ४.१०.६; [३२०] ४ भाद्धिः ११.७.४;

[३२१] ५ जि चुं तु दि वि २.९.६; आचतुर्थाद्दौ ३.४.६; चतुर्थत्यविनोः ४.७.५; विङ्ङ्भूद्धात् १०.६.७; हि ११.९.६;

[३२२] ६ सि दधे ५.८.४; [३२३] ७ अतसि ८.३.१०;

उलो वातायनः । वायुः । गायत्री । ( ऋ० १० । १८६ । १ )

वात आ वातु भेषजं शंभु मयोभु नो हृदे । प्र ण आयूंषि तारिषत् ॥१८४॥

कण्वो घौरः । वरुणमित्रार्यमणः । गायत्री । ( ऋ० १।४१।१ )

यं रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । नू चित्स दभ्यते जनः ॥१८५॥

वशोऽश्व्यः । इन्द्रः । गायत्री । ( ऋ० ८ । ४६ । १० )

गव्यो षु णो यथा पुराश्वयोत रथया । वरिवस्य महामह ॥१८६॥

वात आ वातु भेषज१ शम्भु मयोभु नो हृदे । प्र न आयू१ंषि तारिषत॥१८४॥

य१ रक्षन्ति प्रचेतसो वरुणो मित्रो अर्यमा । न किः स दभ्यते जनः ॥१८५॥

गव्यो षु णो यथा पुराश्वयोत रथया । वरिवस्या महानाम् ॥१८६॥

---

(१८४।१) ॥ प्रतीचीनेडं काशीतम् । काशीतो गायत्रीन्द्रो वायुर्वा ॥

वातआवातु । भाऽ५इषजाम् ॥ शा०म्भुमयः । भुनोहृदाऽ२३४इ । हाहोइ ॥

प्रनआयू१षीऽ३ता ॥ रिषात् । औऽ२३होवा ॥ ईडा ॥ ( दी० ५ । प० ९ । मा० ८ ) ८ ( भै । ३२४ )

॥ द्वादशप्रथमः, सप्तमः खण्डः ॥७॥ दशतिः ॥९॥

(१८५।१) ॥ सौमित्रम् । सुमित्रो गायत्रीन्द्रो विश्वेदेवा वा ॥

य१रक्षन्तिप्रचेतसाः ॥ वरुणोमित्रोअर्याऽ२३मा ॥ न । काइस्साऽ२३दा ॥ हिंमायेऽ३ ।

भ्याऽ२ताऽ२३४औहोवा ॥ जाऽ२३४नाः ॥ ( दी० ५ । प० ७ । मा० ५ ) ९ ( फु । ३२५ )

(१८६।१) ॥ श्यावाश्वे द्वे । द्वयो श्यावाश्वो गायत्रीन्द्रः ॥

गव्योषुणोयथापुरा ॥ अश्वयोतरथा । यावरिवस्या ॥ म । हामाऽ२३ ॥ होनाऽ३४औहोवा ॥

उऽ२३४५पा ॥ ( दी० ८ । प० ७ । मा० १ ) १०( वे । ३२६ )

(१८६।२)

गव्योषुणोयथापुराऽ६ए ॥ अश्वयोऽ१त । रथाऽ२ । या । वरिवाऽ२स्या ॥ महो ।

महोऽ२नाऽ२३४औहोवा ॥ ईऽ२३४५ ॥ ( दी० ६ । प० ८ । मा० २ )११( ग्रा । ३२७ )

---

[साम-तन्त्र-सूत्राणि] [३२४] ८ [३२५] ९ [३२७] ११ ( पृथक् सूत्राणि न सन्ति )

[३२६]१० अयुप्रथमिभ्याम् ६.६.१०;

वत्सः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ६ । १९ )

इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषीः ॥१८७॥

सुकक्ष आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९३ । १७ )

अया धिया च गव्यया पुरुणामन्पुरुष्टुत । यत्सोमेसोम आभवः ॥१८८॥

मधुच्छन्दा वैश्वामित्रः । सरस्वती । गायत्री । ( ऋ० १ । ३ । १० )

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥१८९॥

इमास्त इन्द्र पृश्नयो घृतं दुहत आशिरम् । एनामृतस्य पिप्युषीः ॥१८७॥

अया धिया च गव्यया पुरुणामन्पुरुष्टुत । यत्सोमेसोम आभुवः ॥१८८॥

पावका नः सरस्वती वाजेभिर्वाजिनीवती । यज्ञं वष्टु धियावसुः ॥१८९॥

वामदेवो गौतमः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

क इमं नाहुषीष्वा इन्द्रं सोमस्य तर्पयात् । स नो वसून्या भरात् ॥१९०॥

---

(१८७।१) ॥ शैखण्डिनम् । शिखण्डी गायत्रीन्द्रः ॥

इमास्तई ॥ द्रपृश्नयोघृतंदूऽ२हा । औहोऽ२हाऽ३ । हाऽ३इ । ताआऽ२शाऽ२३४इराम् ॥

एनाऽ२३४मृताऽ३॥ स्यपोऽ२३४वा । प्यूऽ५षोऽ६हाइ ॥ ( दी० ४ । प० ८ । मा० ६ )१२ (दू । ३२८)

(१८८।१) ॥ वैतहव्यम् । वीतहव्यो गायत्रीन्द्रः ॥

अयाधियाचगव्याऽ६या ॥ पुरुणाऽ३ । मन्पूऽ२३४रू । ष्टूतो । वाऽ३२ । यत्सोमेऽ३सोमआ ॥

यात्सोमेऽ२सो । मओऽ२३४वा । भूऽ५वोऽ६हाइ ॥( दी० ८ । प० ९ । मा० ३ )१३ ( ढि । ३२९ )

(१८९।१) ॥ भारद्वाजम् । भरद्वाजो गायत्रीन्द्रः सरस्वती वा ।

पावकानईया ॥ सरास्वाऽ१तीऽ२ । वाजेभिर्वा । जिनाइवाऽ१तीऽ२॥ यज्ञाऽ२३म् ॥

वाऽ२ष्टूऽ२३४औहोवा ॥ धियावसूऽ२३४५ः ॥ ( दी० ७ । प० ७ । मा० ५ )१४ ( छु । ३३० )

(१९०।१) ॥ आरुणस्य वैतहव्यस्य वा साम, सौभरं वा । आरुणोर्गायत्रीन्द्रः ॥

कइमम् । उहुवाहाइ ॥ नाहुऽ२पाइषूऽ१वाऽ२ । आइन्द्र२सोम । स्यतार्पाऽ१याऽ२त् ।

सानोऽ२वसू । नियाभाऽ१राऽ२त् ॥ सनोऽ२वसूनि॥ आऽ२३ । भराउवा ॥

आगाहियाहिताइमेऽ१ ॥ ( दी० ८ । प० ११ । मा० ९ )१५ ( टो । ३३१ )

---

[साम-तन्त्र-सूत्राणि] [३२८]१२ [३३०]१४ ( पृथक् सूत्राणि न सन्ति ) [३२९]१३ ओष्ठ्ये या २.३.५; ह्रस्वेऽर्मिन् मेसपू ३.१.८; [३३१]१५ सन्ध्यक्षरा त्रीणि २.३.३; अन्तर्गतयोः ३.५.५; ह्रस्वे ११.३.११;

इरिम्बिठिः काण्वः । इन्द्रः । गायत्री ( ऋ० ८ । १७ । १ )

आ याहि सुषुमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥१९१॥

सत्यधृतिर्वारुणिः । आदित्यः ( स्वस्त्ययनम् ) । गायत्री । ( ऋ० १० । १८५ । १ )

महि त्रीणामवोऽस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥१९२॥

वशोऽश्व्यः । इन्द्रः । गायत्री । ( ऋ० ८ । ४६ । १ )

त्वावतः पुरूवसो वयमिन्द्र प्रणेतः । स्मसि स्थातर्हरीणाम् ॥१९३॥

आ याहि सुषमा हि त इन्द्र सोमं पिबा इमम् । एदं बर्हिः सदो मम ॥१९१॥

महि त्रीणामवरस्तु द्युक्षं मित्रस्यार्यम्णः । दुराधर्षं वरुणस्य ॥१९२॥

त्वावतः पुरूवसो वयमिन्द्र प्रणेतः । स्मासि स्थातर्हरीणाम् ॥१९३॥ 9-2-60

(१९१।१) ॥ सौभरम् । सुभरिर्गायत्रीन्द्रः ॥

आयाहिसू॥ षुमाहाऽ१इतेऽ२। षुमाहाऽ१इतेऽ२। आइंद्रसोमम्। पिबाइमम्। पिबाआऽ१इमाऽ२म्॥ एदंबर्हाइः॥ सदोमाऽ२३माऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( ना । ३३२ )

( दी० ४ । प० १० । मा० १२ )१६

(१९२।१) ॥ पाष्ठौहे द्वे । द्वयोः पष्ठवाड् गायत्रीन्द्रः ॥

महाइत्राऽ२३४इणाम्॥ अवाऽ२रस्तू । द्युक्षमाऽ२३४इत्रा । स्याऽ२र्येम्णाः॥ दुराधाऽ२३४र्षाम्॥ वरौहोऽ२३४। वाँ। णाऽ५स्योऽ६हाइ ॥ ( दी० १ । प० ८ । मा० ७)१७(गे।३३३)

(१९२।२)

महित्रीणामवरस्तूऽ६ए॥ द्युक्षमित्रस्यार्यम्णाः॥ दुराधाऽ२३र्षाम्॥ वरौहोऽ२ । हिंमाऽ२ । ण । स्योऽ२ । याऽ२३४औहोवा॥ हाओवा । ओवाऽ२३४५ ॥ ( जु । ३३४ )

( दी० ७ । प० १० । मा० ५ )१८

(१९३।१) ॥ धुरासाकमश्वम् । साकमश्वो गायत्रीन्द्रः ॥

त्वावतोऽ३ । हौऽ३होऽ३१इ॥ पुरूवसोऽ३ । हौऽ३होऽ३१इ॥ वयमिन्द्राऽ३ । हौऽ३होऽ३१इ । प्रणतऽ३ः । हौऽ३होऽ३१इ॥ स्मसिस्थातऽ३ः । हौऽ३होऽ३१इ॥ हरीणाऽ३म् । हौऽ३होऽ३१२३४५इ ॥ डा ॥ ( दी० ५ । प० १३ । मा० ९ ) १९( बो । ३३५ )

॥ एकादश द्वितीयः, अष्टमः खण्डः ॥ ८ ॥ दशतिः ॥१०॥

॥ इति द्वितीयः प्रपाठकः ॥२॥

[साम-तन्त्र-सूत्राणि] [३३२]१६ असु प्रथमात् ६.३.१०; रौं ६.४.४; मि १०.८.३; [३३३]१७ ( पृथक् सूत्राणि न सन्ति ) [३३४]१८ आवो द्विवतः ११.६.१०; स्वादि १२.४.२; [३३५]१९ णयुक् ३.३.४; णा ३.३.१०;

प्रगाथः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ६४ । १ )

उत्त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥१९४॥

विश्वामित्रो गाथिनः । इन्द्रः । गायत्री । ( ऋ० ३ । ४० । ६ )

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥१९५॥

श्रुतकक्षः सुकक्षो वा आङ्गिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९२ । २२ )

आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्राति रिच्यते ॥१९७॥

उत्त्वा मन्दन्तु सोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ॥१९४॥

गिर्वणः पाहि नः सुतं मधोर्धाराभिरज्यसे । इन्द्र त्वादातमिद्यशः ॥१९५॥

वामदेवो गौतमः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

सदा व इन्द्रश्चर्कृषदा उपो नु स सपर्यन् । न देवो वृतः शूर इन्द्रः ॥१९६॥

आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः । न त्वामिन्द्राति रिच्यते ॥१९७॥

---

(१९४।१) ॥ यामम् । यमो गायत्रीन्द्रः ॥

उत्वामन्दन्तुसोहोमाः ॥ कृणौहो । ष्वरौहो । धाअद्रिवाः ॥ अ । वब्राऽ२३ह्मा ॥ द्विषाऽ२ः ।

हाऽ२इ । औऽ३होऽ३१येऽ२ । जाऽ२हाऽ२३४औहोवा ॥ एऽ३ । ययूऽ२३४५ः ॥

( दी० ७ । प० १२ । मा० ७ ) २० ( छो।३३६ )

(१९५।१) ॥ आंगिरसां हरिश्रीनिधनम् । अंगिरसो गायत्रीन्द्रः ॥

गिर्वणःपाहिनःसुतम् । गिर्वणःपा ॥ हिनःसुताऽ२म् । मधोर्धाराभिराहोऽ२ ।

ज्यासेऽ२३ ॥ हाउवा ॥ इन्द्रात्वाऽ२३दा ॥ तमायेऽ३त् । याऽ२शाऽ२३४औहोवा ॥

हरीऽ३श्रीऽ२३४५ः ॥ ( दी० ६ । प० १० । मा० ६ ) २१ ( ञू।३३७ )

(१९६।१) ॥ वैरूपम् । विरूपो गायत्रीन्द्रः ॥

सादा ॥ वइन्द्राऽ२ः । चर्कृषादा । उपोनुसाऽ३ः । सापर्यन् ॥ नदेवाऽ२३ः ॥ वृताऽ३४३ः ।

शूऽ३४३ । राऽ३आऽ५इन्द्राऽ६५६ः ॥ ( दी० २ । प० ९ । मा० ९ ) २२ ( श्रो । ३३८ )

(१९७।१) ॥ आसितं सिन्धुषाम वा । असितो गायत्रीन्द्रः ॥

आत्वाविशंत्विन्दाऽ६वाः ॥ समुद्रमिवासिन्धवः । समुद्रमि । वसिन्धाऽ२३वाः ।

नत्वामिन्द्रातिरिच्यते ॥ नत्वामाऽ२३इन्द्रा ॥ तिरिच्याऽ२३ताऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

( दी० ६ । प० ९ । मा० ६ ) २३ ( घू।३३९ )

---

[ साम-तन्त्र-सूत्राणि ] [३३६]२० इट्टा १२.४.९; [३३७]२१ [३३९]२३ ( पृथक् सूत्राणि न सन्ति )

[३३८]२२ सःस्था ४.३.६ः अग्रदे ५.९.१०; इत्र कृषु ७.६.२; देव सचेः ८.८.१०;

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ७ । १ )

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥१९८॥

सुकक्ष आंगिरसः । इन्द्र-ऋभवश्च । गायत्री । ( ऋ० ८ । ९३ । ३४ )

इन्द्र इषे ददातु न ऋभुक्षणमृभुं रयिम् । वाजी ददातु वाजिनम् ॥१९९॥

गृत्समदः शौनकः । इन्द्रः । गायत्री । ( ऋ० २ । ४१ । १० )

इन्द्रो अङ्ग महद्भयमभी षदप चुच्यवत् । स हि स्थिरो विचर्षणिः ॥२००॥

शंयुर्बार्हस्पत्यः । इन्द्रः । गायत्री । ( ऋ० ६ । ४५ । २८ )

इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः । वत्सं गावो न धेनवः ॥२०१॥

इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः । इन्द्रं वाणीरनूषत ॥१९८॥

इन्द्रइषे ददातु न ऋभुक्षणमृभुꣳरयिम् । वाजी ददातु वाजिनम् ॥१९९॥

इन्द्रो अङ्ग महद्भयमभीषदपचुच्यवत् । स हि स्थिरो विचर्षणिः ॥२००॥

इमा उ त्वा सुतेसुते नक्षन्ते गिर्वणो गिरः । गावो वत्सं न धेनवः ॥२०१॥

(१९८।१) ॥ यमस्य इन्द्रस्य वा अर्कः (अर्कम्) । यमो गायत्रीन्द्रः ॥

इन्द्रमिद्गाथिनोबृहात् ॥ इन्द्रामर्काइ । भिरार्किणाः ॥ इन्द्रंवाणीऽ३ः । हाऽ३हाइ ॥ अनूऽ५षता । होऽ५इ ॥ डा ॥ ( दी० २ । प० ८ । मा० ६ )२४ ( जू । ३४० )

(१९९।१) ॥ सौमित्रे द्वे । द्वयोः सुमित्रो गायत्रीन्द्रः ऋभुर्वा ॥

इन्द्रइषेददातुनः । ओहाइ ॥ ऋभु । क्षणाऽ२म् । ऋभुꣳराऽ२३४यीम् । वाजीददातुवाऽ३ ॥ वाजीददा ॥ तुवोऽ२३४वा । जाऽ५इनोऽ६हाइ ॥ ( दी० ६ । प० ९ । मा० ७ )२५ ( घे । ३४१ )

(१९९।२)

इन्द्रइषेददातुनाऽ६ए ॥ ऋभुक्षणम् । भूऽ२१२३म् । रयीऽ३४३म् ॥ वाऽ२३जी ॥ ददाऽ२ओऽ२३ । तुवोवा । जाऽ५इनोऽ६हाइ ॥ ( दी० २ । प० ८ । मा० ७ )२६ ( जे । ३४२ )

(२००।१) ॥ इन्द्रस्याभयङ्करम् । इन्द्रो गायत्रीन्द्रः ॥

इन्द्रोअंगा ॥ महद्भाऽ२३याम् । आभीपद । पचुच्याऽ२३वाऽ३४त् ॥ सहाऽ३४इस्थिराऽ३ः ॥ विचोवा । षाऽ५णोऽ६हाइ ॥ ( दी० २ । प० ७ । मा० ६ ) २७ ( डू । ३४३ )

(२०१।१) ॥ त्वाष्ट्री साम । त्वष्टा गायत्रीन्द्रः ॥

इमाउत्वा ॥ सुताइसुताइ । नक्षन्ताऽ२३इगीऽ३४ः । वनः । गाऽ३इराः ॥ गावोवाऽ३त्साऽ३म् ॥ नधोऽ२३४वा । नाऽ५वोऽ६हाइ ॥ ( दी० २ । प० ८ । मा० १० ) २८ ( जौ । ३४४ )

[ साम-तन्त्र-सूत्राणि ] [३४०]२४ [३४१]२६ [३४३]२७ [३४४]२८ ( पृथक् सूत्राणि न सन्ति )
[३४१]२५ सार्वा १.५.१; दचु ७.५.९;

भरद्वाजो बार्हस्पत्यः । इन्द्रापूषणौ । गायत्री । ( ऋ० ६ । ५७ । १)

इन्द्रा नु पूषणा वयं सख्याय स्वस्तये । हुवेम वाजसातये ॥२०२॥

वामदेवो गौतमः । इन्द्रः । गायत्री । ( ऋ० ४ । ३० । १ )

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा त्वम् ॥२०३॥

त्रिशोकः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ४५ । २८ )

तरणिं वो जनानां त्रदं वाजस्य गोमतः । समानमु प्र शंसिषम् ॥२०४॥

मधुछन्दा वैश्वामित्रः । इन्द्रः । गायत्री । ( ऋ० १ । ९ । ४ )

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिम् । ॥२०५॥

इन्द्रा नु पूषणा वय१ सख्याय स्वस्तये । हुवेम वाजसातये ॥२०२॥

न कि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् । न क्येवं यथा त्वम् ✓ ॥२०३॥

तरणिं वो जनानां त्रदं वाजस्य गोमतः । समानमु प्र श१सिषम् ॥२०४॥

असृग्रमिन्द्र ते गिरः प्रति त्वामुदहासत । सजोषा वृषभं पतिम् ॥२०५॥

---

(२०२।१) ॥ पौषम् । पूषा गायत्रीन्द्रः इन्द्रापूषणौ वा ॥

इन्द्रानुपू॥ षणावाऽ२३याम् । साख्याय । सुवस्ताऽ२३याइ॥ हूवेऽ२मावाऽ२३ ॥

जसोऽ२३४वा । ताऽ५योऽ६हाइ ॥ ( दी० ३ । प० ७ । मा० ३ ) २९ ( ठि । ३४५ )

(२०३।१) ॥ इन्द्राण्याः साम । इन्द्राणी गायत्रीन्द्रः ॥

न। क्येनाकी॥ आइन्द्रत्वदुत्तराम् । नज्यायोऽ२ । अस्ताऽ२३ इत्रू । हिम्ऽ२स्थिहिम् ।

त्राऽ२३४हान्॥ नक्ये । वयाऽ२३था॥ हिम्ऽ२स्थिहिम्ऽ३४३ । तूऽ२३४५वोऽ६हाइ ॥

( दी० ३ । प० ११ । मा० ९ ) ३० ( टां । ३४६ )

एकादशस्तृतीयः, नवमः खण्डः ॥९॥ दशतिः ॥१॥

(२०४।१) ॥ श्यावाश्वं तारणं वा । श्यावाश्वो गायत्रीन्द्रः ॥

तरणिंवाः॥ जनाऽ२३नाम् । त्रदंवाजाऽ३हाऽ३ । स्यागोमाऽ२३४ताः॥ समानाऽ२३मू ॥

प्रशाऽ५१सिषाम् । होऽ५इ ॥ डा ॥ ( दी० २ । प० ८ । मा० ५ ) ३१ ( जु । ३४७ )

(२०५।१) ॥ वैरूपम् । विरूपो गायत्रीन्द्रः ॥

असृग्रमाइन्द्राऽ६तेगिराः॥ प्रातीऽ२त्वामूऽ२त् । अहा । सता॥ साऽ१जोऽ२षावाऽ२ ॥

षभाऽ२०पतिम् । ओऽ२३४५इ ॥ डा ॥ ( दी० ३ । प० ८ । मा० ५ )३२ ( डु । ३४८ )

---

[ साम-तन्त्र-सूत्राणि] [३४५]२९[३४७]३१( पृथक् सूत्राणि न सन्ति ) [३४६]३० ताळव्यरे २.६.२; तद्वे ९.६.५; [३४८]३२ विस्वरात् ६.६.२;

वशोऽश्व्यः । इन्द्रः । गायत्री । ( ऋ० ८। ४६ । ४ )

सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा । मित्रः पान्त्यद्रुहः ॥२०६॥

त्रिशोकः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ४५ । ४१ )

यद्वीळाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् । वसु स्पार्हं तदा भर ॥२०७॥

सुकक्ष आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९३ । १६ )

श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् । आ शुषे राधसे महे ॥२०८॥

सुनीथो घा स मर्त्यो यं मरुतो यमर्यमा । मित्रास्पान्त्यद्रुहः ॥२०६॥

यद्वीडाविन्द्र यत्स्थिरे यत्पर्शाने पराभृतम् । वसु स्पार्हं तदा भर ॥२०७॥

श्रुतं वो वृत्रहन्तमं प्र शर्धं चर्षणीनाम् । आशिषे राधसे महे ॥२०८॥

---

वामदेवो गौतमः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

अरं त इन्द्र श्रवसे गमेम शूर त्वावतः । अरꣳ शक्र परेमणि ॥२०९॥

(२०६।१)　॥ सौमित्रम् कौत्सं वा । सुमित्रो गायत्रीन्द्रः ॥

सुनीथोघाऽ५समर्तियाः॥ यंमरुतोऽ२यमर्यमा । मित्रास्पांत्यद्रुहः॥ ऊऽ । ऊऽऽ ।
वाहाऽ३१उवाऽ२॥ अतिद्विषाऽ२३४५ः ॥　( दी० ७ । प० ७ । मा० ४ ) ३३ ( छी । ३४९ )

(२०७।१)　॥ तौभम् । तुभो गायत्रीन्द्रः ॥

औहोवाऔहोऽ२३४वा । ओऽ६हा । यद्वीडावीऽ२०द्राऽ३यत्स्थिराइ॥ औहोवाऔहोऽ२३४वा ।
ओऽ६हा । यत्पर्शानेऽ३पाऽ३राभृतम्॥ औहोवाऔहोऽ२३४वा । ओऽ६हा ।
वसुस्पार्हाऽ३०ताऽ३दाभर॥ औहोवाऔहोऽ२३४वा । ओऽ६हा । होऽ५इ ॥ डा ॥

( दी० २२ । प० १३ । मा० ७ ) ३४ ( जे । ३५० )

(२०८।१)　श्रौतम् । श्रुतो गायत्रीन्द्रः ॥

श्रुताम्॥ वोवृत्रहन्तमम् । प्रशर्द्धंचर्षणाऽ२३इनाम्॥ आशाइषाऽ२३इरा॥ धसेमहा ।
औऽ३होवा । होऽ५इ ॥ डा ॥　( दी० ३ । प० ८ । मा० ७ )३५ ( डे । ३५१ )

इति ग्रामे गेय-गाने पञ्चमः प्रपाठकः ॥ ५ ॥

(२०९।१)　॥ आभीशवम् । अभीशुर्गायत्रीन्द्रः ॥

अरंतइन्द्रश्रवसेए । ए॥ गमाइमशूरत्वावताऽ३ः। होवाऽ३हाइ॥ अराꣳशाऽ१क्राऽ२३ ।
होवाऽ३हाइ॥ पराइमाऽ२३णाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

( दी० ३ । प० ९ । मा० ९ ) १ ( ढो । ३५२ )

---

**[साम-तन्त्र-सूत्राणि]** [३४९]३३ नति ४.७.६;　[३५०]३४[३५२]१ ( पृथक् सूत्राणि न सन्ति )
[३५१]३५ लध्वाइन्द्रायां भरे १.९.२;　षयुङ् णि १.९.४;

विश्वामित्रो गाथिनः । इन्द्रः । गायत्री । ( ऋ० ३ । ५२ । १ )

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्व नः ॥ २१०॥

गोपूक्त्यश्वसूक्तिनौ काण्वायनौ । इन्द्रः । गायत्री । ( ८ । १४ । १३ )

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजयः स्पृधः ॥२११॥

सुकक्ष आंगिरसः । इन्द्रः । गायत्री । (ऋ ० ८ । ९३ । २५ )

तुभ्यं सोमाः सुता इमे स्तीर्णं बर्हिर्विभावसो । स्तोतृभ्य इन्द्रमा वह ॥२१३॥

धानावन्तं करम्भिणमपूपवन्तमुक्थिनम् । इन्द्र प्रातर्जुषस्वनः ) ॥२१०॥

अपां फेनेन नमुचेः शिर इन्द्रोदवर्तयः । विश्वा यदजय स्पृधः ॥२११॥

वामदेवो गौतमः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

इमे त इन्द्र सोमाः सुतासो ये च सोत्वाः । तेषां मत्स्व प्रभूवसो ॥२१२॥

तुभ्यं सुतासः सोमाः स्तीर्णं बर्हिर्विभावसो । स्तोतृभ्य इन्द्र मृडय ॥२१३॥

---

(२१०।१) ॥ पौषम् । पूषा गायत्रीन्द्रः ॥

धानावतंकरंभिणाम् ॥ अपूपवन्तमूऽ१क्थीऽ३नाम् ॥ इन्द्राप्राऽ२३४ताः । ओऽ२३४हाइ ॥ जुषोवा । स्वाऽ५नोऽ६हाइ ॥ ( दी० ३ । प० ६ । मा० ५ )२ ( डु । ३५३ )

(२११।१) ॥ इन्द्रस्य क्षुरपवि । इन्द्रो गायत्रीन्द्रः ॥

अपांफेनेननमुचेः ॥ शिरइ । द्रोत् । अवाऽ२त्तोऽ२३४याः॥ वाइश्वाऽ२३ः ॥ याऽ२दाऽ२३४औहोवा ॥ जयस्पृधाऽ२३४५ः ॥ ( दी० ५ । प० ७ । मा० ८ ) ३ ( फै । ३५४ )

(२१२।१) ॥ सौमित्रे द्वे । सुमित्री गायत्रीन्द्रः ॥

इमेतआ ॥ द्रसोमाः । होवाऽ३हाइ । सुतासोयेऽ२ । चासोतूऽ२३४वाः॥ तेऽ४षाम् । हाऽ३हाइ ॥ मात्स्वप्रभूऽ२३४वा । वाऽ५सोऽ६हाइ ॥ ( दी० ५ । प० ९ । मा० ७ )४ ( भे । ३५५)

(२१३।१)

तुभ्यऽहाउ ॥ सुतासस्सोमाः । स्तीर्णंबाऽ२३हीः । विभाऽ२होऽ१इ । वाऽ२३साउ ॥ स्तोताऽ३उवाऽ३ ॥ भ्यआऽ२इ । द्रमृऽ२४औहोवा ॥ डाऽ२३४या ॥ ( घो । ३५६ )
( दी० ६ । प० ९ । मा० ९ )५

दश चतुर्थः, दशमः खण्डः ॥१०॥ दशतिः ॥ २ ॥

---

[ साम-तन्त्र-सूत्राणि] [३५३] २ अन्त्ये १.३.८: [३५४] ३ [३५६]५ ( पृथक सूत्राणि न सन्ति )
[३५५] ४ अत्रिवतः ३.४.८; न गप्रथमचु ३.५.७;

शुनःशेप आजीगर्तिः । इन्द्रः । गायत्री । ( ऋ० १ । ३० । १ )

आ व इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् । मंहिष्ठं सिञ्च इन्दुभिः ॥२१४॥

श्रुतकक्षः सुकक्षो वा आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९२ । १० )

अतश्चिदिन्द्र ण उपा याहि शतवाजया । इषा सहस्रवाजया ॥२१५॥

त्रिशोकः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ४५ । ४ )

आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् । क उग्राः के ह शृण्विरे ॥२१६॥

मेधातिथिः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ३२ । १० )

बृबदुक्थं हवामहे सृप्रकरस्नमूतये । साधु कृण्वन्तमवसे ॥२१७॥

आ व इन्द्रं कृविं यथा वाजयन्तः शतक्रतुम् । मꣳहिष्ठꣳ सिंच इन्दुभिः ॥२१४॥

अतश्चिदिन्द्र न उपा याहि शतवाजया । इषा सहस्रवाजया ॥२१५॥

आ बुन्दं वृत्रहा ददे जातः पृच्छद्वि मातरम् । क उग्राः के ह शृण्विरे ॥२१६॥

बृबदुक्थꣳ हवामहे सृप्रकरस्नमूतये । साधः कृण्वन्तमवसे ॥२१७॥

---

(२१४।१) ॥ कौत्से द्वे । कुत्सो गायत्रीन्द्रः ॥

आवइन्द्राम्॥ क्रुविंयथा । वाजयाऽ२३०ताः । शताक्रतुम्॥ मꣳहिष्ठाऽ२३ꣳसीं ॥ चायाऽ३उवाऽ३इ॥ दूऽ२३४भीः ॥ ( दी० २ । प० ७ । मा० ७ ) ६ ( छे । ३५७ )

(२१५।१)

अतश्चिदिंद्रिनउपाऽ६ए॥ आयाहिश । तवाजाऽ२३याऽ३४॥ इषाऽ३४सहाऽ३ ॥ स्रवोऽ२३४वा । जाऽ५योऽ६हाइ ॥ ( दी० २ । प० ६ । मा० ३ )७ ( चि । ३५८ )

(२१६।१) ॥ औषसम् । उषा गायत्रीन्द्रः ॥

आबुन्दंवृ॥ त्रहाद । दाइ । जातःपृच्छाऽ२त् । विमाऽ२ताऽ२३४राम्॥ कउग्राऽ२३ःके ॥ हाश्रृण्विरे । इडाऽ२३भाऽ३४३ । ओऽ२३४५ इ ॥ डा ॥ ( णु । ३५९ )
( दी० ३ । प० १० । मा० ५ )८

(२१७।१) ॥ भारद्वाजम् । भरद्वाजो गायत्रीन्द्रः ॥

बृबदुक्थꣳहाऽ६वामहाइ॥ साप्रोऽ२काराऽ२ । स्नमू । तयाइ॥ साऽ१धाऽ२ःकाण्वाऽ२३ । तमोऽ२३४वा । वाऽ५सोऽ६हाइ ॥ ( दी० २ । प० ७ । मा० ३ )९ ( छि । ३६० )

---

[साम-तन्त्र-सूत्राणि] [३५७]६ [३५८]७ [३५९]८ ( पृथक् सूत्राणि न सन्ति ) [३६०]९ स्पर्शः १०.१०.१०;

गोतमो राहूगणः । विश्वेदेवाः । गायत्री । ( ऋ० १ । ९० । १ )

ऋजुनीती नो वरुणो मित्रो नयतु विद्वान् । अर्यमा देवैः सजोषाः ॥२१८॥

ब्रह्मातिथिः काण्वः । अश्विनौ । गायत्री । ( ऋ० ८ । ५ । १ )

दूरादिहेव यत्सत्यरुणप्सुरशिश्वितत् । वि भानुं विश्वधातनत् ॥२१९॥

विश्वामित्रो गाथिनः । मित्रावरुणौ । गायत्री । ( ऋ० ३ । ६२ । १६ )

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजांसि सुक्रतू ॥२२०॥

कण्वो घौरः । मरुतः । गायत्री । ( ऋ० १ । ३७ । १० )

उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥२२१॥

ऋजुनीती नो वरुणो मित्रो नयति विद्वान् । अर्यमा देवैः सजोषाः ॥२१८॥

दूरादिहेव यत्सतोऽरुणप्सुरशिश्वितत् । वि भानुं विश्वथातनत् ॥२१९॥

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् । मध्वा रजाꣳसि सुक्रतू ॥२२०॥

उदु त्ये सूनवो गिरः काष्ठा यज्ञेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥२२१॥

---

(२१८।१)　　॥ कौत्सं । कुत्सो गायत्रीन्द्रः ॥

ऋजुनीतीनोवरुणः । इहा ॥ मित्रोनयतिविद्वाऽ२३न्त्साः । इहा ॥ अर्यमादाऽ२३इवाइ । इहा ॥ सजोषाऽ२उवाऽ२ ॥ ईऽ२३४हा ॥　　( दी० ५ । प० ८ । मा० ५ )१० ( बु । ३६१ )

(२१९।१)　　॥ औषसम् । उषा गायत्रीन्द्रः अश्विनौ वा ॥

दूरादीऽ२३हेवयत्सताः ॥ अरुणप्सुराशिश्वाऽ२३इतात् ॥ विभानूऽ२३०वी ॥ श्वाथातनत् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥　　( दी० ५ । प० ७ । मा० ५ )११ ( फु । ३६२ )

(२२०।१)　　॥ मित्रावरुणयोः संयोजनम् । मित्रावरुणौ गायत्रीन्द्रः मित्रावरुणौ ॥

आनोमित्रा । वरुणाऽ३ । औहोवाऽ२३४ ॥ घृतैर्गव्यूतिमु । क्षताऽ३म् । औहोवाऽ२ ॥ माध्वारजाऽ२ꣳसिसूऽ२ । औहोवाऽ२ ॥ क्रतू । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० ११ । प० १२ । मा० २ ) १२ ( खा । ३६३ )

(२२१।१)　　॥ ऋतुषाम । ऋतवो गायत्रीन्द्रो मरुतो वा ॥

उदुत्येसूनाऽ६वोगिराः ॥ काष्ठाय । ज्ञाइ । पुवाऽ२त्नाऽ२३४ता ॥ वाश्राआऽ२३भीऽ३ ॥ ज्ञूऽ२३याऽ३ । ताऽ३४५वोऽ६हाइ ॥　　( दी० ६ । प० ७ । मा० ४ ) १३ ( खी । ३६४ )

---

[साम-तन्त्र-सूत्राणि] [३६१]१० [३६२]११ [३६४]१३ ( पृथक् सूत्राणि न सन्ति )

[३६३]१२ अयूष्मणोम २.८.६;

मेधातिथिः काण्वः । विष्णुः । गायत्री । ( ऋ० १ । २२ । १७; यजु० ५ । १५ )

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूळ्हमस्य पांसुरे ॥२२२॥

मेधातिथिः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८।३२।२१ )

अतीहि मन्युषाविणं सुषुवांसमुपारणे । इमं रातं सुतं पिब ॥२२३॥

मेधातिथिः काण्वः, प्रियमेधश्चांगिरसः । इन्द्रः । गायत्री ।( ऋ० ८ । २ । १४ )

उक्थं चन शस्यमानमगोररिरा चिकेत । न गायत्रं गीयमानम् ॥२२५॥

इदं विष्णुर्वि चक्रमे त्रेधा नि दधे पदम् । समूढमस्य पाꣳसुले ॥२२२॥

अतीहि मन्युषाविणꣳ सुषुवाꣳसमुपेरय । अस्य रातौ सुतं पिब ॥२२३॥

वामदेवो गौतमः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

कदु प्रचेतसे महे वचो देवाय शस्यते । तदिध्यस्य वर्धनम् ॥२२४॥

उक्थं च न शस्यमानं नागो रयिरा चिकेत । न गायत्रं गीयमानम् ॥२२५॥

---

(२२२।१) ॥ विष्णोः साम । विष्णुर्गायत्री विष्णुः ॥

इदाऽ६मे॥ विष्णूऽ२ः। विचक्राऽ२३४माइ । त्राइधानि । दधाइपाऽ१दाऽ२म् ॥

समूऽ२होऽ१ । ढाऽ२३माऽ३॥ स्याऽ२पाऽ२३४औहोवा॥ एऽ३ । सुलेऽ१ ॥

( दी० ३ । प० १० । मा० ५ ) १४ ( णु । ३६५ )

नव पञ्चमः, एकादशः खण्डः ॥११॥ दशतिः ॥ ३ ॥

23-7-78

(२२३।१) ॥ कौत्सम् । कुत्सो गायत्रीन्द्रः ॥

अतीहिमा॥ न्युषाऽ२वाइणाऽ२म् । सुषुवाꣳसाऽ२म् । हाइ । ऊपैऽ१रायाऽ२॥

अस्यराताऽ२३उ॥ सूऽ२ताऽ२३४औहोवा॥ पीऽ२३४बा ॥( दी० ४ । प० ८ । म० ६ )१५ (दू।३६६)

(२२४।१) ॥ काश्यपम्, आप्सरसं वा । कश्यपो गायत्रीन्द्रः ॥

कदुप्रचेतसे । महाऽ२इ॥ वाऽ२३४चो । देवाहाउ । वचोदेवा । यशस्याऽ२ ३ताऽ२३४इ ॥

तदाऽ२३४इद्धियाऽ३॥ स्यवोऽ२३४वा । धाऽ५नोऽ६हाइ ॥ ( सु । ३६७ )

( दी० ५ । प० ९ । मा० ५ ) १६

(२२५।१) ॥ बार्हदुक्थे द्वे । द्वयोर्बृहदुक्थो गायत्रीन्द्रः ॥

उक्थंचनोहाइ॥ शस्यमानम् । नागाराऽ२३यीः । आचिकेता॥ नगायाऽ२३त्राम्। गी ।

यमाऽ२नाऽ२३४औहोवा॥ ऊऽ२३४पा ॥ ( दी० ९ । प० ८ । मा० ५ )१७ ( ह्वु । ३६८ )

---

[साम-तन्त्र-सूत्राणि] [३६५]१४ [३६७]१६ [३६८]१७ पृथक् सूत्राणि नसन्ति [३६६]१५ उपे १९.६.३;
सा० गा० १२

मेधातिथिः काण्वः, प्रियमेधश्चांगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । २ । १९ )

ओ षु प्र याहि वाजेभिर्मा हृणीथा अभ्य१स्मान् । महाँ इव युवजानिः ॥२२७॥

दुर्मित्रः ( सुमित्रो वा ) कौत्सः । इन्द्रः । गायत्री । ( ऋ० १० । १०५ । १ )

कदा वसो स्तोत्रं हर्यत आव श्मशा रुधद्वाः । दीर्घं सुतं वाताप्याय ॥२२८॥

विश्वामित्रो गाथिनः । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

इन्द्र उक्थेभिर्मन्दिष्ठो वाजानां च वाजपतिः । हरिवान्त्सुताना१ सखा ॥२२६॥

आ याह्युप नः सुतं वाजेभिर्मा हृणीयथाः । महा१ इव युवजानिः ॥२२७॥

कदा वसो स्तोत्र१ हर्यत आ अव श्मशा रुधद्वाः । दीर्घ१ सुतं वाताप्याय ॥२२८॥

---

(२२६।१)

इन्द्रउक्थाइ ॥ भिर्मान्दाइष्ठोऽ३ ॥ वाजानाऽ२३४०चा । वाजपतिः ॥ हराऽ२इवाऽ२३४न्त्सु । तानाऽ२१स । खा ॥ औऽ३होवा । होऽ५इ ॥ डा ॥ ( दी० ३ । प० १० । मा० ६ ) १८ ( णू । ३६९ )

(२२७।१) ॥ कौत्सम् । कुत्सो गायत्रीन्द्रः ॥

आयाहीं ॥ उपनस्सुतम् ॥ होवाऽ३हाइ । वाजेऽ२भिर्माहृणीयथाऽ२ः ॥ होवाऽ३हाइ ॥ महा१इवयुवाऽ२३ । होवाऽ३हाऽ२इ ॥ जाऽ२नाऽ२३४औहोवा ॥ ऊऽ३२३४पा ॥

( दी० ९ । प० ९ । मा० ७ ) १९ ( ध्रे । ३७० )

( २२८।१ ) ॥ कौत्से द्वे । द्वयोः कुत्सो गायत्रीन्द्रः ॥

ओऽ२होऽ१इ । कदावसो । स्तोत्राऽ२म् । हर्यताआ ॥ ओऽ२होऽ१इ । अवश्मशा । रुधादूऽ२३४वाः ॥ ओऽ२होऽ१इ । दीर्घ१सुतम् ॥ वाताऽ३४३ । पीऽ३याऽ५याऽ६५६ ॥ ईऽ२३४५ ॥

( दी० ५ । प० १२ । मा० ७ ) २० ( फे । ३७१ ).

(२२८।२)

कदाऽ३४औहोवा । वसो । स्तोत्राऽ३म् । हर्यताआ ॥ अवाऽ३४ । औहोवा । श्मशाऽ२ । रुधादूऽ२३४वाः ॥ दीर्घोऽ३४औहोवा । सुताऽ२३म् ॥ वाताऽ३४३ । पीऽ३याऽ५याऽ६५६ ॥

( दी० ८ । प० १२ । मा० ६ ) २१ ( द्रू । ३७२ )

---

[साम-तन्त्र-सूत्राणि] [३६९]१८ प्रह्वा उस्थिनोः १०.९.२; [३७०]१९ घाज्जंघायाः १.११.६; [३७१]२० रुद्धक् १.४.६; दादिर्विसर्जनीयात् ९.३.१०; घे १०.२.२; द्वचु धादुश्चैभ्यः ९.३.१२; [३७२]२१ पृथक् सूत्राणि न सान्ति

मेधातिथिः काण्वः । इन्द्रः । गायत्री । ( ऋ० १ । १५ । ५ )

आ॒ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतम् ॥२२९॥

मेधातिथिः काण्वः । इन्द्रः । गायत्री । ( ऋ० ८ । ३२ । ७ )

वयं घा ते अपि ष्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपाः ॥२३०॥

श्रुतकक्षः सुकक्षो वा आंगिरसः । इन्द्रः । गायत्री । ( ऋ० ८ । ९२ । २८ )

एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनः ॥२३२॥

ब्राह्मणादिन्द्र राधसः पिबा सोममृतूँ२रनु । तवेद२ँ सख्यमस्तृतम् ॥२२९॥

वयं घा ते अपि स्मसि स्तोतार इन्द्र गिर्वणः । त्वं नो जिन्व सोमपाः ॥२३०॥

विश्वामित्रो गाथिनोऽभीपादुदलो वा । इन्द्रः । गायत्री । ( न ऋग्वेदीयः )

एन्द्र पृक्षु कासु चिन्नृम्णं तनूषु धेहि नः । सत्राजिदुग्र पौं२ँस्यम् ॥२३१॥

एवा ह्यसि वीरयुरेवा शूर उत स्थिरः । एवा ते राध्यं मनः ॥२३२॥

(२२९।१) ॥ और्ध्व ( अर्ध ) सद्मनम् । ऊर्ध्वसद्मा गायत्रीन्द्रः ॥

ब्राह्मणादी॥ द्राधसाः । पिबासोमाऽ२म् । ऋतू२ँरनू॥ तवेदाऽ१२ँसाऽ२३॥ ख्याऽ२३माऽ३ । स्ताऽ२३४५र्तोऽ६हाइ ॥ ( दी० ६ । प० ७ । मा० ३ ) २२ ( ग्वि । ३७३ )

(२३०।१) ॥ और्ध्व ( अर्ध ) सद्मनम् । ऊर्ध्वसद्मा गायत्रीन्द्रः ॥

वयंघातेअपिस्मसाइ॥ स्तोतारइन्द्रगिर्वणाः । ववाऽ२३हाइ॥ तूवन्नोजीऽ२ । ववाऽ२३हा ॥ न्वसोऽ२३ । माऽ२पाऽ२३४औहोवा॥ ए॒ऽ३ । उपाऽ२३४५ ॥ ( दी० ६ । प० ९ । मा० ६ ) २३ ( घू । ३७४ )

(२३१।१) ॥ अभीपादस्य औदलस्य साम । उदलो गायत्रीन्द्रः ॥

एन्द्रपृक्षुकासुचीऽ६दे॥ नृम्णाम्॥ तनूषुऽ२धाइहाऽ१इनाऽ२ः ॥ सात्राजिदु ॥ ग्रपौंऽ२३२ँसियाउ। वाऽ३॥ ऊऽ२३४पा ॥ ( दी० ४ । प० ७ । मा० ५ ) २४ ( ध्यु । ३७५ )

(२३२।१) ॥ आमहीयवं उक्थ्यामहीयवम् वा । अमहीयुर्गायत्रीन्द्रः ॥

एवाहोऽ३आसिवीरियूः॥ एवाशूऽ१राऽ२ः । उताऽ२३स्थिराः॥ आइवातेरा॥ धियाऽ२३०मनाउ। वाऽ३॥ स्तौषेऽ२३४५ ॥ ( दी० ७ । प० ७ । मा० ६ ) २५ ( छू । ३७६ )

॥ एकादश षष्ठः, द्वादशः खण्डः ॥१२॥ दशतिः ॥४॥

इति द्वितीयोऽध्यायः ॥ २ ॥

॥ इत्यैन्द्राख्ये तृतीये गाने एकसामाख्यं तृतीयं तन्त्रं संपूर्णम् ॥

---

[साम-तन्त्र-सूत्राणि] [३७३]२२ [३७५]२४ पृथक् सूत्राणि न सन्ति [३७४]२३ नु ९.३.४; दिक् षड्वतः १०.२.८; [३७६]२५ हि १२.२.३;

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । २२ )

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥२३३॥

शंयुर्बार्हस्पत्यः । इन्द्रः । बृहती । ( ऋ० ६ । ४६ । १ )

त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववर्तः ॥२३४॥

अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।
ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥२३३॥
त्वामिद्धि हवामहे सातौ वाजस्य कारवः ।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववर्तः ॥२३४॥

---

(२३३।१) ॥ भरद्वाजस्यार्कौ द्वौ । द्वयोर्भरद्वाजो बृहतीन्द्र ईशानेन्द्रौ वा ॥

अभित्वाशू॥ रनोनुमाऽ२ः। ओइनूऽ३माः। आदुग्धाइ । वधाइनवाऽ२ः। ओइनाऽ३वाः। आइशानमस्यजगतः । सुवार्दृशम्। आईऽ३शाम्॥ आइशानमि॥ द्रतास्थुषः। आऽ२३ । स्थूऽ२ । षाऽ२३४ । औहोवा॥ स्थुषःस्थुषाऽ२३४५ः॥ ( दी० ६ । प० १६ । मा० १५)२६ (कु।३७७)

(२३३।२)

अभित्वाऽ३शूरनोनुमाः॥ आदुग्धाइव । धाइनाऽ२३वाः। आइशानमस्याजग । ताः । सुवाऽ२र्दृऽ२३४शा म्॥ ईशानाऽ२३मी॥ द्रातस्थुषः। इडाऽ२३भाऽ३४३ । ओऽ२३४५इ॥डा॥ ( दी० ६ । प० ११ । मा० ९ )२७ ( को । ३७८ )

(२३४।१) ॥ इन्द्रस्य भारद्वाजे द्वे । द्वयोर्भरद्वाजो बृहतीन्द्रः ॥

त्वामिद्धी॥ हवाऽ२महे । आ । औऽ३होवाहाउवाऽ३ । ऊऽ३४पा । सातौवाज । स्यऽ३काऽ२रवः। आ । औऽ३होवाहाउवाऽ३ । ऊऽ३४पा॥ त्वांवृत्राइषुइ । द्रसाऽ२त्पतिम्। आ । औऽ३होवाहाउवाऽ३ । ऊऽ३४पा॥ नरस्त्वांकाष्ठा । सुआऽ२वंतः । आ । औऽ३होवाहाउवाऽ३॥ ऊऽ३२३४पा॥ ( दी० १७ । प० २० । मा० १० )२८ ( ग्लौ । ३७९ )

(२३४।२)

त्वामिद्धिहवामहे। सातौवाजावा॥ स्याकाऽ१रावाऽ२ः। त्वांवृत्राइषुइन्द्रसत् । पातिन्नाराऽ२ः॥ त्वांकाऽ२३ष्ठा । सुअर्वाऽ२३ताऽ३४३ः। ओऽ२३४५इ॥ डा॥ ( है । ३८० ) ( दी०८ । प० ९ । मा० ८ )२९

---

[ साम-तन्त्र-सूत्राणि] [३७७]२६ नुवत्स्वनिक्षिपु २.६.३; थि दन्त्ये ११.८.९; [३७८,२७ [३८०,२९ पृथक् सूत्राणि न सन्ति [३७९]२८ जेर्गीतपूर्वात् ३.७.२;

प्रस्कण्वः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ४९ । १ )

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे । यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति२३५

अभि प्र वः सुराधसमिन्द्रमर्च यथा विदे ।
यो जरितृभ्यो मघवा पुरूवसुः सहस्रेणेव शिक्षति ॥२३५॥

---

॥ साम्नते द्वे । द्वयोः सप्ततिर्बृहतीन्द्रः ॥

(२३५।१)
अभिप्रवाः॥ सुराधाऽ२३साम्। इन्द्रमर्चयाथाऽ१विदाऽ२३४इ। योजाऽ३४रितृ ।
भ्योमघवापूरूऽ१वासूऽ२ः॥ सहाऽ२३॥ स्राऽ२इणाऽ२३४औहोवा॥ वशिक्षतीऽ२३४५ ॥

( दी० ६ । प० ८ । मा० ६ )३० ( गू । ३८१ )

(२३५।२)
अभाइप्रवाऽ२ः । सुराधाऽ२३४साम्॥ इन्द्रामर्चाऽ२३ । याऽ२थाऽ२३४औहोवा ।
वीऽ२३४दे। योजरितृभ्योमघवाऽ२पुरूवसुः॥ सहा॥ स्रेणेवऽ३शायेऽ३। क्षाऽ२ताऽ२३४औहोवा॥
सुभूऽ३तयेऽ२३४५ ॥

(दी० १० । प० १० । मा० ६ ) ३१ ( मू । ३८२ )

॥ श्यैतम् । प्रजापतिर्बृहतीन्द्रः ॥

(२३५।३)
अभिप्रवस्सुरा । धसाऽ३४औहोवा॥ आइन्द्रमर्चे । यथाविदाऽ२३४इ॥ औऽ६हा। योजरितृभ्यः।
माघाऽ२३वा । पुरूऽ२ । वाऽ२३४सूः॥ सहस्रणावाइवाऽ३शा॥ हिम्मायेऽ३ ।
क्षाऽ२ताऽ२३४औहावा॥ वाऽ२३४सू ॥

( दी० ७ । प० १३ । मा० ७ ) ३२ ( जे । ३८३ )

---

[साम-तन्त्र-सूत्राणि] [३८१]३० कवचु २.१.६; [३८२]३१ [३८३]३२ पृथक् सूत्राणि न सन्ति

नोधा गौतमः । इन्द्रः । बृहती । ( ऋ० ८ । ८८ । १ )

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः । अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥२३६॥

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः ।
अभि वत्सं न स्वसरेषु धेनव इन्द्रं गीर्भिर्नवामहे ॥२३६॥

---

(२३६।१) ॥ प्रजापतेर्नोविकम् । प्रजापतिर्बृहतीन्द्रः ॥

तंवः । एदास्माम् ॥ ऋतीषहम् । हाऽ२इ । आओऽ३हो । इहा । वासोर्मन्दानमन्धसाऽ३ः । हाऽ२इ । आओऽ३हो । इहा । अभिवत्सन्नस्वसरेषुधेनवाऽ२ः । हाऽ२इ । आओऽ३हो । इहा ॥ इन्द्रम् । हाऽ२इ । आओऽ३हो । इहा । गीभाइः । नाऽ२३४औहोवा ॥ वामहेऽ२३४५ ॥

( दी० १० । प० २१ । मा० १७ )३३ ( पे । ३८४ )

(२३६।२) ॥अभीवर्तस्य इन्द्रस्य वा, अभीवर्तम् । अभीवर्तो बृहतीन्द्रः ॥

तंवोऽ२दाऽ२स्मामृतीषहोवा ॥ वासोर्मन्दा । नमान्धाऽ१साऽ२ः । आभिवत्साऽ३१२३४म् । नस्वसरे । षुधाइनाऽ१वाऽ२ः ॥ इन्द्राऽ२गाऽ१इर्भीऽ२ः ॥ नवाऽ२ । माऽ२३४५ ॥ हाऽ२३४५इ ॥

( दी० ४ । प० १० । मा० ७ ) ३४ ( ने । ३८५ )

(२३६।३) ॥ अभीवर्तस्य भागम् । भगो बृहतीन्द्रः ॥

तंवोदस्ममृती । षहाओऽ२३४वा ॥ वासोर्मन्दानमन्धासाऽ२ः । आभिवत्सन्नस्वसरेषूधेऽ१नावाऽ२ः । ओऽ३वा ॥ इन्द्रंगाऽ२३४इर्भीः ॥ नवामाऽ२३४५हाऽ६५६इ ॥ भगाऽ३याऽ२३४५ ॥

( दी० ६ । प० ८ । मा० ६ ) ३५ ( गू । ३८६ )

(२३६।४) ॥ अभीवर्त आभीवर्तम् वा । इन्द्रो बृहतीन्द्रः ॥

तंवोदस्ममृती । षहाऽ२म् ॥ वाऽ२३४ । सोर्मन्दानम । धासाः ॥ अभिवत्सन्नस्वसरेषूऽ२धाइ । नाऽ२३वाः ॥ इन्द्रंगीर्भाइनोऽ२वा ॥ हिऽम्३स्थिहिऽम्३ । हिऽम्३स्थिहिम् । नवानवोऽ२३४वा । मा५होऽ६हाइ ॥

( दी० ६ । प० १२ । मा० १० ) ३६ ( ग्वौ । ३८७ )

(२३६।५) नौधसम् । नोधा बृहतीन्द्रः ॥

ताऽ२३४म् । वोदस्ममृती । षाहाम् ॥ वसोर्मन्दा । नाऽ३मान्धाऽ३साः । आऽ२३भी । वात्सन्न । स्वस । राइ । षूधेनाऽ२३४वाः ॥ आऽ२३इन्द्राम् । गाइर्भिर्नवोऽ२३४वा ॥ माऽ२३४हे ॥

( दी० ३ । प० १३ । मा० ८ ) ३७ ( डै । ३८८ )

॥ इति प्रथमे गेय-गाने षष्ठस्यार्द्धः प्रपाठकः ॥

---

[ साम-तन्त्र-सूत्राणि ] [३८४]३३ वृद्धान्नीचानाम् २.१.७; सत्तु ३.३.१; द्वावतोऽस्सः ३.४.१; [३८५]३४ ङु भौ वान् ५.९.६; तंवास्तृतीयात् ७.२.४; [३८६]३५ स्यन्तिमि ५.८१०; [३८७]३६ [३८८]३७ पृथक् सूत्राणि न सन्ति

कलिः प्रागाथः । इन्द्रः । बृहती । ( ऋ० ८ । ६६ । १ )

तरोभिर्वो विदद्वसुमिन्द्रं सबाध ऊतये । बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥२३७

तरोभिर्वो विदद्वसुमिन्द्र९ सबाध ऊतये ।

बृहद्गायन्तः सुतसोमे अध्वरे हुवे भरं न कारिणम् ॥२३७॥

(२३७।१)          ॥ लौशे द्वे । द्वयोर्लुशो बृहतीन्द्रः ॥

तारो॥ भाइर्वोविदाऽ३१उवाऽ२३ । वाऽ२३४स्रम् । इन्द्राऽ२९सबाधऊतयेऽ२ । बृहात् ।
बृहाऽ३१उ । वाऽ२ । गायन्तस्सुतसोमेअध्वरे॥ हुवेभाऽ२३राम् ॥ नाकारिणम् ।
इडाऽ२३भाऽ३४३ । ओऽ२३४५इ॥ डा ॥     ( दी० ११ । प० १३ । मा० १० ) १ ( गौ । ३८९ )

(२३७।२)

तारो॥ भाइर्वोविदाऽ३१उवाऽ२३ । वाऽ२३४स्रम् । इन्द्राऽ२९सबाधऊतयेऽ२ ।
बृहाद्गाऽ१याऽ२ । तास्सुतसोऽ२॥ मेअध्वराइ॥ हुवेभाऽ२३राम्॥ नाकारिणम् ।
इडाऽ२३भाऽ३४३ । ओऽ२३४५ इ ॥ डा ॥     ( दी० ८ । प० १२ । मा० ९ )२ ( ठो । ३९० )

(२३७।३)          ॥ धानाके द्वे । द्वयोर्धानाको बृहतीन्द्रः ॥

तरोभिर्वोविदद्वास्रम्॥ इन्द्राम् । इन्द्र९सबाधऽ२ऊताऽ१याऽ२इ॥ बृहात् ।
बृहद्गायन्तस्सुतसोमऽ२आध्वाऽ१राऽ२इ॥ हुवाइ। हुवेभरन्नकारिणम्। इडाऽ२३भाऽ३४३ ।
ओऽ२३४५ इ॥डा॥     ( दी० ७ । प० १० । मा० १० )३ ( जौ । ३९१ )

(२३७।४)          ॥ क्षुल्लककालेयं वा ॥

तरोभिर्वोविदाऽ४द्वास्रम्॥ इन्द्र९सबाऽ३ । धऊऽ२ताऽ२३४याइ। बृहात् । बृहाऽ३१उ ।
वाऽ२ । गायन्तस्सुतसोमेअध्वरे॥ हुवेहोइभाऽ२३राम्॥ नाकारिणम् । इडाऽ२३भाऽ३४३ ।
ओऽ२३४५इ ॥डा॥     ( दी० ८ । प० १२ । मा० १० )४ ( ठौ । ३९२ )

(२३७।५)          ॥ कालेयानि त्रीणि । त्रयाणां कालेयो बृहतीन्द्रः ॥

तरोऽ२३भिर्वो । विदाऽ५द्वस्रम्॥ इन्द्र९सबाऽ३धाऊऽ१तायाऽ३इ। ओऽ३४वा ।
ओऽ२३४वा । बृहद्गायन्तस्सुतसोऽ३माअध्वाराऽ३इ। ओऽ३४वा । ओऽ२३४वा॥ हुवाइभराम्॥
नाकाराऽ२३४इणाम् । ओऽ२३४वा । ओऽ२३४५इ ॥ डा ॥     ( डौ । ३९३ )
( दी० ३ । प० १३ । मा० १० )५

---

[साम-तन्त्र-सूत्राणि] [३८९]१ उष्मणीद्वाद्ये ३.२.१; वच्च ७.४.७;     [३९०]२ [३९१]३ [३९२]४
[३९३]५ पृथक् सूत्राणि न सन्ति

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । २० )

तरणिरित्सिषासति वाजं पुरंध्या युजा । आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्र्वम्॥२३८॥

तरणिरित्सिषासति वाजं पुरन्ध्या युजा ।
आ व इन्द्रं पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥२३८॥

(२३७।६)
तरोभिर्वोऽ२ । विदद्वाऽ२३४सुम्॥ इन्द्र्ँसबाऽ३धाऊऽ१तायाऽ२इ । औऽ३होऽ३वा । २ । बृहद्गायतस्सुतसोऽ३माअध्वार्ऽरइ । औऽ३होऽ३त्रा । औऽ३होऽ३वा॥ हुवाइभाऽ१राऽ२म् । औऽ३होऽ३वा । औऽ३होऽ३वा॥ नाकारिणम् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥
( दी० ५ । प० १५ । मा० ९ ) ६ ( मो । ३९४ )

(२३७।७)
तरोभाऽ३इर्वोविदद्वसूम्॥ इन्द्राऽ्ँसबा । धऊतयाऽ२३इ । बृहद्गायाऽ३ । ताऽ२३४ः । सुतसोमेअ । ध्वाऽ३राइ॥ हुवाइभरो । वाऽ२४३ओऽ३४वा॥ नकाऽ५रिणाम् । होऽ५इ ॥डा॥
( दी० ६ । प० १२ । मा० ११ ) ७ ( ख । ३९५ )

॥ ऐषिरे द्वे । द्वयोरिषिरो बृहतीन्द्रः ॥
(२३८।१)
तरणिरीत्॥ सिषाऽ३साती । वाजा०पुराम् । धियायुजा । आवाऽ३आइंद्राम् ॥ पुरूहूतम् । नमेगाइरा॥ नाइमीऽ३०ताष्टे॥ वासुद्रुवाऽ२३४५म् ॥ (दी० ५ । प० ९ । मा० ९ )८ ( भो । ३९६)

(२३८।२)
तराहाउ॥ णिरित्सिऽ३षासति । हयाइ । हयाइ । वाजंपुरम् । धियायुजौ । होवाऽ३हाइ । आवइन्द्रंपुरुहूतम् । नमाइगाइरौ । होवाऽ३हाइ॥ नेमिंतष्टेवऽ३सा॥ औऽ३होवाहाऽ२३४औहोवा॥ उप् । द्रूऽ२३४वाम् ॥
( दी० १२ । प० १४ । मा० १३ ) ९ ( ग्नि । ३९७ )

॥ गौशृंगे द्वे । द्वयोर्गोशृंगो बृहतीन्द्रः ॥
(२३८।३)
तरणिरित्सिषा । साऽ३ती । वाजंपुरंध्यायुजा॥ वाजंपुरंध्यायुजा । वआऽ२३इन्द्राऽ३४म् । पुरुहूतंनमे । गाऽ३इरा॥ नेमाइन्ताऽ२३ष्टे॥ वसुद्रुवम् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥
( दी० ९ । प० १२ । मा० ७ )१० ( थे । ३९८ )

(२३८।४)
तरणिरित्सिषा । सतीऽ३ । वाऽ२३४ । जंपुरंभिया । युजा ॥
वाजंपुरंध्यायुजावइन्द्रंपुरुहूतन्नमाऽ२इगाइराऽ२ । हाऽ२ऊऊवाइ ॥
नेमिंतष्टेवसोवाऽ२ओऽ२३४वा॥ द्रूऽ५वोऽ६हाइ ॥ ( दी० ८ । प० ९ । मा० ८ )११ ( है । ३९९ )

[साम-तन्त्र-सूत्राणि] [३९४]६ [३९५]७ [३९७]९ पृथक् सूत्राणि न सन्ति　[३९६]८ चतुर्थे ४.२.४; घु चिक्रावतः ७.१.८; उग्रं मे ७.९.२;　[३९८]१० उद्वत् ( तम् ) ४.५.२;　[३९९,११ वृद्धे पासायाष्टे च १.८.१; संकृष्यते

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८।३।१ )

पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
आपिर्नो बोधि सधमाद्यो वृधे३ऽस्माँ अवन्तु ते धियः ॥२२९॥

पिबा सुतस्य रसिनो मत्स्वा न इन्द्र गोमतः ।
आपिर्नो बोधि सधमाद्ये वृधे३ऽस्मा२ अवन्तु ते धियः ॥२२९॥

---

(२२९।१) ॥ पृष्ठम् । पृष्ठोबृहतीन्द्रः ॥

पिबाऽ३सुतस्यरसिनाः ॥ मत्स्वानइन्द्रगोमताऽ२३होइया । आपिर्नोबोधिसधमाद्येवृधाऽ२३होइया ॥
अस्मा२आऽ२३वा ॥ तुताइधाऽ२३याऽ३४३ः । ओऽ२३४५इ ॥ डा ॥

( दी० ८ । प० ७ । मा० ८ )१२ ( ठै । ४०० )

(२२९।२) ॥ शौक्रम् । शुक्रो बृहतीन्द्रः । अभीवर्तौ द्वौ । द्वयोर्जमदग्निः ॥

पिबासुतस्यरसिनोहाउ ॥ मत्स्वानइन्द्रगोमाऽ२तः । हाओऽ२३४वा ॥
आपिर्नोबोधिसधमादियेवाऽ२र्द्धे । हाओऽ२३४वा ॥ अस्मा२अवन्तुतेधाऽ२यः ।
हाओऽ२३४वा ॥ ईऽ२३४५ ॥ ( दी० १२ । प० ८ । मा० ८ ) १३ ( ञै । ४०१ )

(२२९।३) ॥ जमदग्नेरभीवर्तः । जमदग्निर्बृहतीन्द्रः ॥

पिबासुतस्यरसिनोमत्स्वाहाउ ॥ नाऽ२ः । इन्द्राऽ२गोमताऽ२३ः । हाउ । आपिर्नाऽ२बो ।
धिसाधमाऽ२ । दियेवृधाऽ२३ । हाउ ॥ अस्मा२अवाऽ२३ । हा ॥ तुतेऽ३होऽ२ ।
याऽ२३४औहोवा ॥ धियऊऽ२३४५ ॥ ( दी० १० । प० १३ । मा० ८ )१४ ( थै । ४०२ )

---

[साम-तन्त्र-सूत्राणि] [४००]१२ [४०२]१४ पृथक् सूत्राणि न सन्ति [४०१]१३ महि गु नहो। ५.३.७;
धे ७.१.५. दन्त्यादि वृद्धे १.४.५;

भर्गः प्रागाथः । इन्द्रः । बृहती । ( ऋ० ८ । ६१ । ७ )

त्वं ह्येहि चेरवे विदा भगं वसुत्तये । उद्वावृषस्व मघवन् गविष्टय उदिन्द्राश्वमिष्टये ॥२४०॥

वसिष्ठो मैत्रावरुणिः । मरुतः । बृहती । ( ऋ० ७ । ५९ । ३ )

नहि वश्चरमं चन वसिष्ठः परिमंसते । अस्माकमद्य मरुतः सुते सचा विश्वे पिबत कामिनः ॥२४१॥

त्वं ह्येहि चेरवे विदा भगं वसुत्तये । उद्वावृषस्व मघवन्गविष्टय उदिन्द्राश्वमिष्टये२४०

न हि वश्चरमं चन वसिष्ठः परिमᳲसते ।

अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः ॥२४१॥

---

(२४०।१)　　कौल्मलबर्हिषे द्वे । द्वयोः कुल्मलबर्हिर्बृहतीन्द्रः ॥

तुवाऽ३ᳲहोऽ३एहिचेरवाइ ॥ विदाभगंवसूऽ२त्तायाऽ२३४इ । उद्वावृषस्वमघावान् ॥

एहोइ । गाऽ२विष्टयाइ ॥ उदिन्द्राश्वमोवाऽ३ओऽ२३४वा । ष्टाऽ५योऽ६हाइ ॥

( दी० ६ । प० ७ । मा० ८ ) १५ ( खै । ४०३ )

(२४०।२)

त्वंᳲह्योहिचेराऽ६वाइ ॥ विदाभगंवसूत्ताऽ१याऽ२३४इ । उद्वावृषस्व । माऽ५घवान् ॥

आइहियाइ । गाविष्टायाऽ२इ ॥ उदिन्द्राऽ२अश्वमी । ओऽ३१म् । ओऽ२३४वा । ष्टाऽ५योऽ६हाइ॥

( दी० ४ । प० १० । मा० ९ ) १६ ( नो । ४०४ )

(२४१।१)　　वसिष्ठस्यजनित्रे द्वे । द्वयोर्वसिष्ठो बृहतीन्द्रः ॥

नहिवाऽ३श्चारमंचना ॥ हुवेहोऽ२इ । वसिष्ठःपराइमᳲसाताऽ२इ । अस्माकमद्यमरुताऽ२ः ।

सुताइसाऽ२३४चा ॥ वाइश्वेऽ३होइ । पिबाऽ३हो ॥ तुकाऽ२३ । माऽ२इनाऽ२३४औहोवा ॥

जनित्राऽ२३४५म् ॥　　( दी० ३ । प० १० । मा० १० ) १७ ( णौ । ४०५ )

(२४१।२)

नहिवश्चरमम् । चनाऽ३ । वसिष्ठाः ॥ होइ । होइ । पराइमᳲसाताऽ२३४इ । अस्माकमद्यमरुतः ।

सुताऽ३इसाचा ॥ वाइश्वेपिबन्तुकौऽ३ । होऽ३१येऽ३ ॥ माऽ२इनाऽ२३४औहोवा ॥

जनिऽइत्राऽ२३४५म् ॥　　( दी० ४ । प० १२ । मा० १२ ) १८ ( था । ४०६ )

---

[साम-तन्त्र-सूत्राणि] [४०३]१५ [४०६]१८ पृथक् सूत्राणि न सन्ति　　[४०४]१६ चावतः ८.१०.५;
[४०५]१७ सूष्वा १.३.६; नह्याहस्वम् ७.२.५;

प्रगाथो घौरः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । १ । १ )

मा चिदन्यद्वि शंसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणं सचा सुते मुहुरुक्था च शंसत ॥२४२॥

पुरुहन्मा आङ्गिरसः । इन्द्रः । बृहती । ( ऋ० ८ । ७० । ३ )

नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् । इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णवोजसम् ॥२४३॥

मा चिदन्यद्वि शꣳसत सखायो मा रिषण्यत ।
इन्द्रमित्स्तोता वृषणꣳ सचा सुते मुहुरुक्था च शꣳसत ॥२४२॥

नकिष्टं कर्मणा नशद्यश्चकार सदावृधम् ।
इन्द्रं न यज्ञैर्विश्वगूर्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥२४३॥

---

(२४२।१) ॥ मैधातिथं दैवातिथं वा । मेधातिथिर्बृहतीन्द्रः ॥

माचिदन्यद्धोहाइ ॥ विशाऽ३ꣳसाता । सखायाऽ२होऽ१इ । माओऽ२हो । राइषाउवा ।
ण्याताउवा ॥ इन्द्रमित्स्तोतावृषणाओऽ३हो ॥ साचाउवा । सुताउवा ॥ मुहुरुक्थाओऽ३हो ।
चशा । ओहो । वाहोऽ२३४वा । साऽ५तोऽ६हाइ ॥ ( दी० ६ । प० १४ । मा० ११ ) १९ ( घा। ४०७ )

एकत्रिंशत्प्रथमः खण्डः ॥ १ ॥ दशतिः ॥ ५ ॥

( ॥ इति तृतीयस्य प्रथमोऽर्धः ॥ )

(२४३।१) ॥ वैखानसम् । वैखानसा बृहतीन्द्रः ॥

नकिष्टाऽ३०कर्मणानशात् ॥ यश्चाकारा । सदावृधाऽ२३म् । सदावृधाम् । इद्राञ्जया ।
ज्ञैर्विश्वगू । तर्माऽ२भ्वसाऽ२३म् । तमृभ्वसाम् ॥ अधाष्टंधा । ष्णुमोजसाऽ२३ ॥
ष्णुमोजसाऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( दी० ८ । प० १३ । मा० ६ ) २० ( डू । ४०८ )

(२४३।२) ॥ पौरुहन्मनं प्राकर्पं वा । पुरुहन्मा बृहतीन्द्रः ॥

नकिष्टंकर्मणानशत् । होऽ३४इ । यश्चकाऽ३रासदावृधाम् ॥ आइन्द्राऽ२न्नायाऽ२ ।
ज्ञैर्विश्वगूर्तामृभ्वासाऽ२म् ॥ अधाऽ२हो१ । ष्टाऽ२३०धृऽ३४ ॥ हाओवा ॥ ष्णुमोजसाऽ२३४५ ॥
( दी० ६ । प० ९ । मा० ६ ) २१ ( घू । ४०९ )

---

[साम-तन्त्र-सूत्राणि] [४०७]१९ माने ग्रामे ११.५.५; [४०८]२० श्रोढतम् ३.१.१०; गोहादुद्धृते ३.९.८; श्यण् ११.१.३; [४०९]२१ पृथक् सूत्राणि न सन्ति

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ८ । १ । १२ )

य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।सन्धाता सन्धिं मघवा पुरूवसुरिष्कर्ता विह्रुतं पुनः २४४

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८ । १ ।२४ )

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये । ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये २४५

य ऋते चिदभिश्रिषः पुरा जत्रुभ्य आतृदः ।
संधाता सन्धिं मघवा पुरूवसुर्निष्कर्ता विह्रुतं पुनः ॥२४४॥

आ त्वा सहस्रमा शतं युक्ता रथे हिरण्यये ।
ब्रह्मयुजो हरय इन्द्र केशिनो वहन्तु सोमपीतये ॥२४५॥

---

(२४४।१) ॥ सात्यम् । सत्यो बृहतीन्द्रः ॥

यऋताऽ२इचीदभिश्रिषा॥ पूराऽ२ जात्रूऽ२। भ्यआतृदाऽ३॥होवाऽ३हाइ। सा०धाऽ२तासाऽ२म्। धाइंमघवाऽ२पुरूवसुः । होवाऽ३हाइ॥ नाइष्काऽ२र्तावीऽ२ ॥ ह्रुतंपुनः । हो । वाऽ२ । हाऽ२३४ । औहोवा॥ ऊऽ२३४पा ॥ ( दी० ५ । प० १४ । मा० १२ ) २२ ( ग्वा । ४१० )

(२४५।१) ॥ भारद्वाजानिचत्वारि, भारद्वाजम् । चतुर्णांभरद्वाजो बृहतीन्द्रः ॥

आत्वासहा॥ स्रमाशाऽ१ताऽ२म् । यूक्तारथेहिरण्यये । ब्रह्मायूऽ१जाऽ२ः । हारयइ । द्रकाइशाऽ१इनाऽ२ः॥ वहा०तूऽ१सोऽ२३ ॥ माऽ२पाऽ२३४औहोवा॥ ताऽ२३४ये ॥

( दी० ७ । प० ९ । मा० ७ )२३ ( स्रे । ४११ )

(२४५।२) ॥ भारद्वाजं, कण्वबृहद्वा । कण्वोबृहतीन्द्रः ॥

औहोआत्वासहाऽ६ए॥ स्रमाशाऽ१ताऽ२३४म् । हाहोइ । यूक्तारथेहिरण्यये । ब्रह्मायूऽ१जाऽ२३४ः । हाहोइ । हारयइ । द्रकाइशाऽ१इनाऽ२३४ः । हाहोइ ॥ वहा०तूऽ१सोऽ२३४ । हाहो॥ मपीऽ३ । ताऽ२३४याइ । उहुवाऽ६हाउ॥ वा ॥

( दी० ११ । प० १५ । मा० १३ )२४ ( ङि । ४१२ )

(२४५।३) ॥ भारद्वाजे द्वे । द्वयोर्भारद्वाजो बृहतीन्द्रः ॥

आत्वासहस्रमाशतमा॥ युक्तारथेहिरण्यये । ब्रह्मयुजाहरयइन्द्रकेहोऽ२इ । शाइनाऽ२३ः । हाउवा॥ वहन्तुसोमपीहोऽ३ । हिमाऽ२॥ तयाऽ२इ । ओऽ२३४वा॥ ऊऽ२३४५ ॥

( दी० ६ । प० १० । मा० ६ )२५ ( हूं । ४१३ )

---

[साम-तन्त्र-सूत्राणि ] [४१०] २२ विम २.४.३; [४११]२३ [४१२]२४ [४१३]२५ पृथक् सूत्राणि न सन्ति

विश्वामित्रो गाथिनः । इन्द्रः । बृहती । ( ऋ० ३ । ४५ । १ )

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमभिः। मा त्वा के चिन्नि यमन्विं न पाशिनोऽति धन्वेव ताँ इहि२४६

गोतमो राहूगणः । इन्द्रः । बृहती । ( ऋ० १ । ८४ । १९ )

त्वमङ्ग प्र शंसिषो देवः शविष्ठ मर्त्यम् । न त्वदन्यो मघवन्नस्ति मर्डितेन्द्र ब्रवीमि ते वचः॥२४७

आ मन्द्रैरिन्द्र हरिभिर्याहि मयूररोमाभिः ।
मा त्वा के चिन्नि येमुरिन्न पाशिनोऽति धन्वेव ता२ इहि ॥२४६॥
त्वमङ्ग प्र श२ंसिषो देवः शविष्ठ मर्त्यम् ।
न त्वदन्यो मघवन्नस्तिमर्डितेन्द्र ब्रवीमि ते वचः ॥२४७॥

---

(२४५।४)

आत्वासहस्रमा । शताम् । आत्वासहा॥ स्रमाशतम् । आऽ२इहियाऽ२३४हाइ ।
युक्तारथेहिरण्ययें । ब्रह्मायूऽ१जाऽ२३ः। आऽ२इहियाऽ२३४हाइ। हारयइ। द्रकाइशाऽ१इनाऽ२३ः।
आऽ२इहियाऽ२३४हाइ॥ वहा०तूऽ१सोऽ२३ । आऽ२इहियाऽ२३४हाइ ॥
मपीताऽ२३याऽ३४३इ । ओऽ२३४५इ ॥डा॥  ( दी० ९ । प० १६ । मा० १७ ) २६ ( ते । ४१४ )

(२४६।१)  ॥ अग्नेर्वाम्राणि त्रीणि । त्रयाणां वम्रो बृहतीन्द्रः ॥

आमन्द्रैरा॥ द्रहरिभाइर्याहिमयूरऽ३र●माभाऽ३इः । मात्वाकाइचींत् । नियेमूऽ२३४रीत् ।
नपाशिनाः॥ अतिधान्वेऽ२॥ वताऽ२ऽ२३ । आऽ२इहाऽ२३४औहोवा॥ वाऽ२३४याः ॥
( दी० ७ । प० ९ । मा० १० ) २७ ( झौ । ४१५ )

(२४६।२)

आमन्द्रैरिन्द्रे । हाऽ५रिभाइः॥ याहिमयूररोमभाइः । मात्वाकाऽ२३इचींत् ।
नाइयेमुरित् । नपाशाऽ२३इनाः॥ अताइधाऽ२३न्वे॥ वताऽ२ऽ२३। आऽ२इहाऽ२३४औहोवा॥
वयोऽ३मीऽ२३४५ः ॥  ( दी० १० । प० १० । मा० १४ ) २८ ( मी ४१६ )

(२४६।३)

आमन्द्रैरिन्द्र । हाऽ५रिमीः॥ याहिमयूररोमभाउ । वाऽ२। मात्वाऽ२। केचिन्नियेमुरिन्नपाशिनाउ
वाऽ२॥ आतीऽ२॥ धन्वेवताऽ३१उवाऽ२३॥ ईऽ२३४ही ॥
( दी० ८ । प० १० । मा० ८ ) २९ ( णी । ४१७ )

(२४७।१)  ॥ गुङ्गोः साम, गौङ्गवम् वा । अग्निर्बृहतीन्द्रः ॥

त्वमाऽ३०गाप्रश२ंसिषाः॥ दाइवाऽ२ः । शविष्ठमाऽ३ । तायाम् । नत्वदन्योमघवाऽ२३नाऽ२ ॥
स्तिमाऽ२३र्डाइता॥ आइन्द्रब्र । वा । औऽ३हो॥ मितोऽ२३४वा । वाऽ५चोऽ६हाइ ॥
( दी० ११ । प० ११ । मा० ७ ) ३० ( के । ४१८ )

---

[साम-तन्त्र-सूत्राणि] [४१४]२६ भइन्वतः ४.१.१०; आत्वस्यै ४.१०.८; थि जि ८.२.९;
[४१५]२७ स्यादेः ३.७.७; सं णावति १०.२.८; द्वितीयी १०.७.१  [४१६]२८ स्वारे दीर्घम् ४.१.२
[४१७]२९ तन्निमात्रम् ५.१.१; ऋग्वाचि ५.१.२; ग्यचु गुरौ ५ ५.३; (इदं १.२.११; साम्निगतम् । अत्र केषुचित पुस्तकेषु; पुनः उल्लिखितं वर्तते) वरे गुरौ ५.१०.७;  [४१८]३० त्विनोः १.८.६; सण्योष्टगे ७.२.६;

नृमेध-पुरुमेधावांगिरसौ । इन्द्रः । बृहती । ( ऋ० ८ । ९० । ५. )

त्वमिन्द्र यशा अस्यृजीषी शवसस्पते । त्वं वृत्राणि हंस्यप्रतीन्येक इदनुत्ता चर्षणीधृता ॥२४८॥

त्वमिन्द्र यशा अस्यृजीषी शवसस्पतिः ।
त्वं वृत्राणि हꣳस्यप्रतीन्येक इत्पुर्वनुत्तश्चर्षणीधृतिः ॥२४८॥

---

(२४८।१) ॥ इन्द्रस्य यशाश्चत्वारि सामानि । इन्द्रो बृहतीन्द्रः ॥

त्वमिन्द्रा॥ यशाः । असाइ । ऋजीषीशवसः । पताइः ॥ त्वंवृत्राणीऽ३हꣳसिया ।
प्रतीनाएऽ२ । कइत्पूरूऽ२॥ अनूऽ२होऽ१ ॥ तश्च । षाऽ२णाऽ२३४औहोवा ॥ धाऽ२३४र्तीः॥
( दी० ७ । प० १२ । मा० ९ ) ३१ ( छो । ४१९ )

(२४८।२) ॥ साध्रम् । साध्रा बृहतीन्द्रः ॥

त्वमाऽ३इन्द्रायशाअसाइ॥ ऋजाइषीशाऽ२ । वसाऽ३४५ः । पाऽ२३४तीः ।
त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पु । रू ॥ आनाओऽ२३४वा । ताश्चाओऽ२३४वा ॥
षणाऽ५इधृतीः । होऽ५इ ॥डा॥ ( दी० ५ । प० ११ । मा० १२ )३२ (पा।४२०)

(२४८।३) ॥ ( समीचीनं ) साध्रम् वा । साध्रो बृहतीन्द्रः ॥

हाउत्वामिन्द्रा॥ याशाआऽ२३४सीऽ६ । हाउ । ऋजाइषीऽ२३४शा । वासस्पाऽ२३४तीऽ६ः ।
हाउ । त्वंवृत्रा । णीहꣳसिया । हाउ । प्रतीनाऽ२३४ए । कइत्पूऽ२३४रूऽ६ । हाउ ॥
अनुत्ताऽ२३४श्चाऽ६ । हाउ॥ षाऽ२णाऽ२३४औहोवा॥ धाऽ२३४र्तीः ॥
( दी० ४ । प० १६ । मा० १३ )३३ ( ति । ४२१ )

(२४८।४) ॥ ( प्राचीनं ) यशसी द्वे । द्वयोरिन्द्रो बृहतीन्द्रः ॥

हाउत्वमिन्द्रा॥ यशाअसि । होइ । होइ । होयेऽ३४ । हाऽउहाऽउहाऽउ । ऋजीषीशवसस्पातिः।
होइ । होइ । होयेऽ३४ । हाऽउहाऽउहाऽउ॥ त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पुरू । होइ । होइ ।
होयेऽ३४ । हाऽउहाऽउहाऽउ॥ अनुत्तश्चर्षणीधृतिः । होइ। होइ। होयेऽ३४। हाऽउहाऽउहाऽउवा॥
सुवर्महाऽ२३४५ः ॥ ( दी० ८ । प० २२ । मा० १६ )३४ ( टू । ४२२ )

(२४८।५)

होत्वमिन्द्रा॥ यशाअसि । होयेऽ३ । होऽ२३४५ । ऋजीषीशवसस्पातिः । होऽयेऽ३ ।
होऽ२३४५॥ त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पुरू । होयेऽ३ । होऽ२३४५॥ अनुत्तश्चर्षणीधृतिः ।
होयेऽ३ । होऽ२३४वाऽ६ । हाउवा॥ सुवर्मयाऽ२३४५ः ॥
( दी० ८ । प० १५ । मा० ६ ) ३५ ( णू । ४२३ )

॥ इति ग्रामे गेय-गाने षष्ठः प्रपाठकः ॥ ६ ॥

---

[साम-तन्त्र-सूत्राणि] [४१९]३१ पृथक् सूत्राणि न सन्ति [४२०]३२ ओवान् २.९.३; न प्रथमयुक्क्षायाः १०.२.७; गृण्यान्ताक्षरे १०.३.३; [४२१]३३ एनाक्षरेऽतुङि ४.९ ५; न णीहꣳसि ४.९.६; थि १०.१०.८; [४२२]३४ त्र्यभ्यस्त्वं च ५.१.३; दु ११.९.७; अवोः २.९.२; [४२३]३५ छावतो होः ११.६.८;

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३ । ५ )

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे । इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥२४९॥

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३ । ३ )

इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम । पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत२५०

इन्द्रमिद्देवतातय इन्द्रं प्रयत्यध्वरे ।
इन्द्रं समीके वनिनो हवामह इन्द्रं धनस्य सातये ॥२४९॥
इमा उ त्वा पुरूवसो गिरो वर्धन्तु या मम ।
पावकवर्णाः शुचयो विपश्चितोऽभि स्तोमैरनूषत ॥ २५० ॥

(२४९।१)　　॥ यौक्तस्रुचम् । युक्तस्रुक् बृहतन्द्रिः ॥

इन्द्रमिद्देवता ॥ तयाइ । इन्द्रंप्रयातियत्ध्वाऽ२३राइ। आइन्द्राऽ२म्। समीकेवनिनोहवामाऽ२३हाइ॥ आइन्द्राऽ२म् ॥ धानस्यसोऽ२३४वा ॥ ताऽ२३४यै ॥ ( दी० ५ । प० ८ । मा० ७ ) १ ( बे । ४२४ )

(२५०।१)　　॥ आत्राणि त्रीणि, वासिष्ठानि वा । त्रयाणां अत्रिर्बृहतीन्द्रः ॥

इमाउत्वापुरूवसोगिरः॥ एऽ५ । गिराः॥ वार्द्धन्तुयाममाऽ२३ । पावकवर्णाः । शुचयोवीऽ३पा । हिम्०ऽ३स्थिहिम् । चाऽ२३४इताः॥ अभिस्तोमैरनोऽ२॥ हुवाइ । होऽ३वा । पता । औऽ३होवा । होऽ५इ ॥ डा ॥　　( दी० ८ । प० १५ । मा० १० ) २ ( णौ । ४२५ )

(२५०।२)

इमाउत्वापुरूवसोहाउ॥ गिरोवर्द्धे । तूयाऽ१ममाऽ२ । इहाहाहोइ । इहोऽ२३४वा । पावकवर्णाःशुचयः । इहाहाहोइ । इहोऽ२३४वा॥ विपश्चि । तो । अभिस्तामैः । इहाहाहोइ । इहोऽ२३४वा॥ अनूऽ२३ । पाऽ२ताऽ२३४औहोवा॥ ऊऽ२३४पा ॥

( दी० १७ । प० १६ । मा० ८ )३ ( च्वै । ४२६ )

(२५०।३)

इमाउत्वापुरू । वसाऽ३उ । गाऽ२३४इ । रोवर्द्धतुयाः । ममा॥ पावकवर्णाःशुचयोविपश्चि । तां । औऽ३हो । आऔऽ३हो॥ अभिस्तोमैरनोऽ२॥ हुवाइ । होऽ३वा । पता । औऽ३होवा । होऽ५इ ॥ डा ॥　　( दी० १० । प० १६ । मा० ७ )४( पे । ४२७)

[ साम-तन्त्र-सूत्राणि ] [४२४]१ पृथक् सूत्राणि न सन्ति　　[४२५]२ तृतीये १.९.१०;
[४२६]३ अनु ७.११.४;　　[४२७]४ पृथक् सूत्राणि न सन्ति

मेध्यातिथिः काण्व. । इन्द्रः । बृहती । ( ऋ० ८ । ३ । १५ )

उदु त्ये मधुमत्तमा गिरः स्तोमास ईरते । सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव२५१

देवातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ४ । ३ )

यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् । आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब२५२

उदु त्ये मधुमत्तमा गिर स्तोमास ईरते ।
सत्राजितो धनसा अक्षितोतयो वाजयन्तो रथा इव ॥ २५१ ॥
यथा गौरो अपा कृतं तृष्यन्नेत्यवेरिणम् ।
आपित्वे नः प्रपित्वे तूयमा गहि कण्वेषु सु सचा पिब ॥ २५२ ॥✓

(२५१।१)　॥ वासिष्ठानि त्रीणि, आत्राणि वा । त्रयाणां वसिष्ठो बृहतीन्द्रः ॥

उदुत्यमा॥ धूमत्तमाऽ२३ः । गाइरस्तोऽ२३४मा । साईरतायेऽ३ । सात्राजाऽ२३४इताः । धानासाऽ२३४अ । क्षीतोतयाऽ२३ः॥ वाजायाऽ२३४०ताः॥ रथाऽ३आऽ५इवाऽ६५६॥

(२५१।२)　( दी० ६ । प० ९ । मा० १० )५ ( घौ । ४२८ )

उदुत्येमाऽ५धुमत्तमाः॥ गिरस्तोमासआऽ२ईराताऽ२इ । सत्राजितोधनाऽ२साआ॥ क्षितातायाऽ२ः॥ वाजयन्तोरथाऽ२१उवाऽ२३॥ ईऽ२३४वा ॥　( दी० ९ । प० ६ । मा० ७ । )६ ( ते । ४२९)

(२५१।३)

हुवेऽ२३४५ । उदुत्यमधुम । तमोऽ२३४हाइ॥ गाइराऽ२स्तोमाऽ२ । सआऽ३४५इ । राऽ२३४ते । सत्राजितोऽ२धनसाअक्षितोतयाऽ२३४५ः । हुवेऽ२३४५॥ वाजयन्तोरथाः । इवोऽ२३४हाइ ॥ वाजयन्तो रथाइ । वा । औऽ२होवा । होऽ५इ ॥ डा ॥ (दी० ११ । प० १५ । मा० १० )७(क्रौ।४३०)

(२५२।१)　॥ गौतमस्य मनाज्ये, गौराङ्गिरसस्य सामनी वा द्वे । द्वयोर्गोतमो बृहतीन्द्रः ॥

यथागौऽ२३रोअपाकृताम्॥ तृष्यन्नतियवेराऽ२३इणाम् । आपित्वेनःप्रपित्वेतूयमागाऽ२३ही ॥ कण्वेऽ२षुसूऽ२३॥ साऽ२चाऽ२३४औहोवा॥ पीऽ२३४वा ॥(दी० १२ । प० ६ । मा० ५)८(सु।४३१)

(२५२।२)

ओवाओऽ२३४वा । याथा॥ गौरोअऽ२पाकृतम् । ओऽ३४ । हाहोइ । तृष्यन्नतियऽ३वाइरिणम् । ओऽ३४ । हाहोइ । आऽ२३४पी । त्वेनःप्रपित्वेतूयामाऽ१गहि । ओऽ३४ । हाहोइ ॥ कण्वेऽ२षुसूऽ२३॥ साऽ२चाऽ२३४औहोवा॥ पिबाऽ३ईऽ२३४५ ॥　( क्रौ । ४३२)
( दी० ११ । प० १५ । मा० १० )९

पञ्चविंशः, द्वितीयः खण्डः ॥ २ ॥ दशतिः ॥६॥

[ साम-तन्त्र-सूत्राणि ] [४२८]५ रेफरे ५.३.३;　[४२९]६ पृथक् सूत्राणि न सन्ति
[४३०]७ यिवतो हि २.९.७;　[४३१]८ वे ११.१.७;　[४३२]९ गौरेऽम् ७.११.५;

भर्गः प्रागाथः । इन्द्रः । बृहती । ( ऋ० ८ । ६१ । ५ )

शग्ध्यू३षु शचीपत इन्द्र विश्वाभिरूतिभिः । भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि२५३

रेभः काश्यपः । इन्द्रः । बृहती । ( ऋ० ८ । ९७ । १ )

या इन्द्र भुज आभरः स्वर्वां असुरेभ्यः । स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः॥२५४

शग्ध्यू३षु शाचीपत इन्द्र विश्वाभिरूतिभिः ।
भगं न हि त्वा यशसं वसुविदमनु शूर चरामसि ॥२५३॥
या इन्द्र भुज आभरः स्ववाँ॰ असुरेभ्यः ।
स्तोतारमिन्मघवन्नस्य वर्धय ये च त्वे वृक्तबर्हिषः ॥२५४॥

---

(२५३।१) ॥ इन्द्रस्य हारयणानि, हारायणानि वा, त्रीणि । त्रयाणामिन्द्रो बृहतीन्द्रः ॥

शग्ध्यूषू॥ शचाइपताइ । ईऽ२३४०द्रा । विश्वाभिऽ३रूतिभाइः । भाऽ२३४गाम् ॥
नहित्वायशऽ३सा०वसू । वीऽ२३४दाम्॥ अनूऽ२३ । शूऽ२राऽ२३४औहोवा ॥
चराऽ२मसीऽ२३४५ ॥ ( दी० ९ । प० १० । मा० ७ ) १० ( ङे । ४३३ )

(२५३।२)

शग्ध्यूष्वौहोऽ६इशचीपताइ॥ आइन्द्रविश्वाभिरूतिभिः । भगान्नाऽ३ही । त्वायशसाम् ।
वसूऽ२हाइ॥ वाइदाऽ२म्॥ अनुशूरचरोवाऽ३ओऽ२३४वा । माऽ५सोऽ६हाइ ॥
( दी० ७ । प० ८ । मा० १० ) ११ ( जौ । ४३४ )

(२५३।३)

शग्ध्यूषुशची । पताई । शग्ध्यूषू॥ शचाइपते । आऽ२इहिमाऽ२३४हाः । आइन्द्राविश्वा ।
भिरूतिभिः । आऽ२इहिमाऽ२३४हाः । भागन्नहित्वायशसम् । वसूविदम् । आऽ२इहिमाऽ२३४हाः॥
अनूशूऽ१राऽ२३ । आऽ२इहिमाऽ२३४हाः॥ चरामाऽ२३साऽ३४३इ । ओऽ२३४५इ॥ डा ॥
( दी० ७ । प० १६ । मा० १६ )१२ ( चू । ४३५)

(२५४।१) ॥ वाम्राणि त्रीणि । त्रयाणां वाम्रो बृहतीन्द्रः ॥

याहोइ । ईऽ२३४०द्रा॥ भुजऽ३आभाऽ१राऽ२ः । सुवाऽ२३हा । वाँ॰असुऽ३राइभाऽ१याऽ२ः ।
स्तोताऽ३हा । रमिन्मघवन्नस्यावर्द्धायाऽ२॥ याइचाऽ३हाइ॥ त्वेवृक्तबर्हाऽ२३इषाऽ३४३ः ।
ओऽ२३४५इ ॥ डा ॥ ( दी० ३ । प० ११ । मा० ११ ) १३ ( ट । ४३६ )

---

[साम-तन्त्र-सूत्राणि] [४३३]१० ग्ध्यू तृतीये ६.५.४; डौ १०.१०.१; [४३४]११ तद्वि तखिट् ५.८.९;
[४३५]१२ [४३६]१३ पृथक् सूत्राणि न सन्ति

जमदग्निर्भार्गवः । मित्रावरुणादित्याः । बृहती । ( ऋ० ८ । १०१ । ५ )

प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो । वरूथ्यं वरुणे छन्द्यं वचः स्तोत्रं राजसु गायत ॥२५५॥

प्र मित्राय प्रार्यम्णे सचथ्यमृतावसो ।
वरूथ्ये३वरुणे छन्द्यं वचः स्तोत्रँ राजसु गायत ॥ २५५ ॥

---

(२५४।२)
याइन्द्रमुजआभाऽ६राः ॥ +सुवर्वा४अ । सुरेऽरभाऽ२३४याः । हा । औहोऽ२३४हा ।
स्तोतारमाइत् । माघवन्ना । स्यवाऽ२द्धाऽ२३४या । हा । औहोऽ२३४हा ॥
येचत्वाऽ२३इवृऽ३ । हा । औहोऽ२३४हा ॥ ऋबर्होऽ२३इषाऽ३४३ः । ओऽ२३४५इ ॥डा॥
( दी० ९ । प० १६ । मा० ११ )१४ ( त । ४३७ )

(२५४।३)
याइन्द्रमुजआभरः । उहुवाहाइ ॥ सुवर्वा४असुरेभ्यः । उहुवाऽ२३हाइ । स्तोतारमिन्मघवन्न ।
स्यावर्द्धायाऽ२। उहुवाऽ२३हाइ ॥ येचत्वाऽ२३इवृ । उहुवाऽ१३हा ॥ ऋबर्होऽ२३इषाऽ३४३ः ।
ओऽ२३४५इ ॥ डा ॥ ( दी० ७ । प० १२ । मा० १२ )१५ ( छा । ४३८ )

॥ वरुणसामानि त्रीणि । त्रयाणां वरुणो बृहतीविश्वेदेवाः ॥

(२५५।१)
प्रमित्रायप्राहाउ ॥ आऽ२र्यम्णाइ । सचाऽ२हो । थियोऽ२ । हुवाइ । आतावसाउ । वराऽ२हो ।
थियोऽ२ । हुवाइ । वरुणच्छा । दीयंवचाः ॥ स्तोत्राऽ२४होइ ॥ राजोऽ२ । हुवा ।
पूगायताऽ३१उवाऽ२३ ॥ ऊऽ३४पा ॥ ( दी० १० । प० १६ । मा० ८ )१६ ( घै । ४३९ )

(२५५।२)
प्रमित्रायप्रोहोवा ॥ आर्यम्णा । औहोऽ३४इ । औहोऽ३वा । साचथ्यम् । ऋतावासा ।
औहोऽ३४इ । औहोऽ३वा । वारूथ्यंवरुणेछ । दिया०वाचा । औहोऽ३४ इ । औहोऽ३वा ॥
स्तोत्र४राजा । औहोऽ३४इ । औहोऽ३वा॥ पूगायाता । औहोऽ३४इ । औहोऽ३वाऽ३४३ ।
ओऽ२३४५इ ॥डा॥ ( दी० १६ । प० २० । मा० ७ ) १७ ( डे । ४४० )

(२५५।३)
प्रमित्रायप्रार्यम्णवा । ओवा ॥ साचथ्यम् । ऋतावाऽ१साऽ२उ । वाऽ२३रू । थाऽ२३याइ ।
वरुणेछ । दायाऽ२३४हाइ । वचोऽ२आ ॥ स्तोत्र४राजसुगायत । स्तोऽ२३त्राम् ॥
राजसुगौऽ३ । होऽ३१२३४ । वा । याऽ५तोऽ६हाइ ॥ ( दी० ६ । प० १५ । मा० ७ )१८( डे । ४४१)

---

[ साम-तन्त्र-सूत्राणि ] [४३७]१४ नवु ७.३.३; [४३८]१५ पृथक् सूत्राणि न सन्ति
[४३९]१६ नम्णि ६.६.९; दिवाव्यन् (व्यम्) ७.९.१०; वा (षें)द्वैं त्रिवतः स्वरयोः ८.२.१; प्र ही ८.४.३;
[४४०]१७ वीतस्य ४.३.२; ओ सचु सर्वम् ६.२.३; गि ८.२.२; [४४१]१८ घोषचु चौ ८.७.८; खु ( त्या ) न्त्यादेः१०.८.५

+ सुवर्वा४अ

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८।३।७ )

अभि त्वा पूर्वपीतय इन्द्र स्तोमेभिरायवः।
समीचीनास ऋभवः समस्वरन् रुद्रा गृणन्त पूर्व्यम् ॥ २५६ ॥

नृमेध—पुरुमेधावाङ्गिरसौ । इन्द्रः । बृहती । ( ऋ० ८।८९।३ )

प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रं हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥ २५७ ॥

अभि त्वा पूर्वपीतये इन्द्र स्तोमेभिरायवः ।
समीचीनास ऋभवः समस्वरन्रुद्रा गृणन्त पूर्व्यम् ॥२५६॥
प्र व इन्द्राय बृहते मरुतो ब्रह्मार्चत ।
वृत्रँ हनति वृत्रहा शतक्रतुर्वज्रेण शतपर्वणा ॥२५७॥

---

( २५६।१ ) ॥ प्राजापतेः वषट्कारणिधनम् । प्रजापतिर्बृहतीन्द्रः ॥

अभित्वापूर्वपीतये । अभित्वाऽ३पूर्वपीतयाइ॥ इन्द्रस्तोमेभिऽ३रायवाऽरः । भिरायाऽ१वाऽ२३ः । ओमोऽ३वा॥ समीचीनासऋभवःसऽ३मास्वराऽरन् । समास्वाऽ१राऽ२३न् । ओमोऽ३वा॥ रुद्रागृणन्तऽ३पूर्वियाऽरम् । तपूर्वोऽ१याऽ२३म् । ओम् । ओऽ२ । वाऽ२३४ । औहोवा॥ ऊऽ२३४पा ॥( दी० १७ । प० १५ । मा० ९ )१९( ञ्वो।४४२)

(२५७।१) ॥ धूपतो मारुतस्य साम, मारुतम् वा । मारुतोबृहतीन्द्रः ॥

प्रवइन्द्रायबृहते । प्रवाः॥ इन्द्रायऽ२बृहाऽ१तेऽ२३ । ओमोऽ३वा। मरुतोब्रह्मऽ२आर्चाऽ१ताऽ२३। ओमोऽ३वा । वृत्रऽहाना । तिवृ । त्राहाऽ२३ । ओमोऽ३वा । शताक्रतुः॥ वाऽ२३४ज्रे ॥ णशाऽ२ । हाऽ३हा । तपाऽ५र्वणा । होऽ६इ॥डा॥ ( दी० ७ । प० १७ । मा० ५ )२० ( छु । ४४३ )

---

[ साम-तन्त्र-सूत्राणि ][४४२]१९ धसे ४.६.८; [४४३]२० पृथक् सूत्राणि न सन्ति

*

नृमेध—पुरुमेधावाङ्गिरसौ । इन्द्रः । बृहती । ( ऋ० ८ । ८९ । १ )

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् । येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥२५८॥

वसिष्ठो मैत्रावरुणिः, शक्तिर्वासिष्ठो वा । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । २६ )

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥ २५९ ॥

बृहदिन्द्राय गायत मरुतो वृत्रहन्तमम् ।
येन ज्योतिरजनयन्नृतावृधो देवं देवाय जागृवि ॥२५८॥
इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन्पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥२५९॥

---

॥ संश्रवसः, विश्रवसः, सत्यश्रवसः, श्रवसो वा, सैंशानानि चत्वारि सामानि ।
चतुर्णामिन्द्रो बृहती मरुतः ॥

(२५८।१)
सा०त्वाहिन्व । तिधाइताइभीऽ३ः । ताऽ२इ ॥ भाऽ२३४ । औहोवा ॥ सं२श्रवसेऽ३ ॥ दा १
सांत्वारिण । तिधाइताइभीऽ३ः । ताऽ२इ । भाऽ२३४ । औहोवा ॥ विश्रवसेऽ३ ॥ दा २
सांत्वातत । क्षुद्धाइताइभीऽ३ः । ताऽ२इ । भाऽ२३४ । औहोवा ॥ सत्यश्रवसेऽ३ ॥दा३+
( दी० ९ । प० १८ । मा० १२ )११ ( दा । ४४४ )

(२५८।२) ॥ इन्द्रस्य वाष्यानां वा, सँशानानि, वासिष्ठानि वाम्राणि वा त्रीणि ॥
सा०त्वाशिश । तिधाइताऽ१इभीऽ२ः ॥ ताइभीऽ२ः । बृहदिन्द्रायऽ३गायाऽ१ताऽ२ । याताऽ२ ॥
मरुतोवृत्रऽ३हा०ताऽ१माऽ२म् ॥ तामाऽ२म् । येनज्योतिरजनयन्नृऽ३तावाऽ१द्धोऽ२ः ।
वाद्धोऽ२ः ॥ देवंदेवायऽ३जागृऽ१वीऽ२ । गृवीऽ२ । सा०त्वाशिश । तिधाइताइभीऽ३ः ।
ताऽ२इ । भाऽ२३४ । औहोवा ॥ श्रवसेऽ२३४५ ॥ ( दी० ११ । प० १७ । मा० १३ )१२ (खि।४४५)

(२५९।१) वाम्रे द्वे । द्वयोर्वाम्रो बृहतीन्द्रः ॥
इन्द्राऔऽ३हो ॥ क्रतुन्नऽ३आभाऽ१राऽ२ । पिताऔऽ३हो । पुत्रेभिऽ३योयाऽ१थाऽ२ ।
शिक्षाऔऽ३हो । णोअस्मिन्पुरुहूतयामाऽ१नीऽ२ ॥ जीवाऽ२३ः ॥ ज्योऽ२ताऽ२३४औहोवा ॥
अशीमहीऽ२३४५ ॥ ( दी० ७ । प० ९ । मा० ७ )१३ ( ङ्मे । ४४६ )

---

[साम-तन्त्र-सूत्राणि][४४५]१२ [४४६]१३ पृथक् सूत्राणि न सन्ति [४४४]११ से।सि ३.३.६; इदन्त्वर्द्धं चायाम् ४.५.१०; +( प्रयोगे चतुर्थेन साम्नासह सन्त्वाहिन्वेत्यादिस्तोभमभ्यसेत् )

रेभः काश्यपः । इन्द्रः । बृहती । ( ऋ० ८ । ९७ । ७ )

मा नं इन्द्र परां वृणग्भवां नः सधमाद्यः ।
त्वं नं ऊती त्वमिन्न आप्यं मा नं इन्द्र परां वृणक् ॥ २६० ॥

मा न इन्द्र परा वृणग्भवा नः सधमाद्ये ।
त्वं न ऊती त्वमिन्न आप्यं मा न इन्द्र परा वृणक् ॥२६०॥

---

(२५९।२) ॥ क्रतु वासिष्ठम् ॥

इन्द्रक्रतूऽ५म्आभरा॥ पितापुत्रेभियोयथा । शिक्षाणोऽ२३आ । स्माइन्पुरुहू ।
तयामाऽ१नीऽ२ । औऽ२ । हौऽ२ । हुवाइ । औऽ३होऽ२३४वा॥ जीवाज्योऽ२३तीः॥
अशीमाऽ२३हाऽ३४३इ । ओऽ२३४५इ॥ डा ॥ ( दी० ८ । प० १३ । मा० ७ )२४ ( डे । ४४७ )

(२५९।३) ॥ वासिष्ठम् । वासिष्ठो बृहतीन्द्रः ॥

इन्द्रक्रतुम्आ । भराओऽ२३४वा॥ पितापूऽ३त्रेभियोयथा । हुऽ२३४५ । पितापुत्रेभियः ।
याथाऽ२३४हाइ । शाइक्षाणोआ । स्माइन्पुरुहूतया । मानोऽ२३४हाइ॥ जीवाज्योतीः ॥
अशोऽ२३४वा । माऽ५होऽ६हाइ ॥ ( दी० ८ । प० १२ । मा० १० ) २५ ( ठौ । ४४८ )

(२६०।१) ॥ आङ्गिरस्य आङ्गिरस्य वा, स्वपसः सामनी द्वे । आङ्गिरस्यस्वपासिः बृहतीन्द्रः ॥

मानइन्द्रा॥ परावाऽ२३णाक् । भवानःसधमाऽ१दीऽ३याइ॥ त्वम्ऊतीत्वमिन्नआपीऽ३याम्॥
मानइन्द्रपरावृणाऽ३१उवाऽ२३॥ ऊऽ२४पा... ( दी० ६ । प० ६ । मा० ८ )२६ ( क्यै । ४४९ )

(२६०।२)
मानइन्द्रपरा । वृणाक् । मानइन्द्रा॥ परावाऽ२३णाक् । भवाऽ२नःस । धमादाऽ२३याइ ।
त्वम्ऊतीऽ२ । त्वमिन्नाऽ२आपियाम्॥ मानाआऽ२३इन्द्रा॥ परावाऽ२३णाऽ३४३क् ।
ओऽ२३४५इ ॥डा॥ ( दी० १० । प० १२ । मा० १२ )२७ ( फा । ४५० )

---

[साम-तन्त्र-सूत्राणि] [४४७]२४ नीचे ७.१०.४; [४४८]२५ ह्र् ३ १.१; तस्मिन् ३.५.८;
उपत्तु ११.१.५; [४४९]२६ [४५०]२७ पृथक् सूत्राणि न सन्ति

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३३ । १ )

वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥ २६१ ॥

वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः ।
पवित्रस्य प्रस्रवणेषु वृत्रहन्परि स्तोतार आसते ॥२६१॥

---

(२६१।१) ॥ आष्कारणिधनं काण्वम् । कण्वो बृहतीन्द्रः ॥

वयंघाऽ३त्वासुतावन्ताः॥ आपोनवृ । क्तबाऽ२३र्हिषाउ । वाऽ३२ । पवित्रस्या । प्रस्रवणाइ । षुवृत्राऽ२३४हान् ॥ पाऽ२३री॥ स्तोतारः । आसाऽ२३४५ताऽ६५६इ ॥ आऽ२३४५ष् ॥

( दी० ६ । प० ११ । मा० ७ )२८ ( के । ४५१ )

(२६१।२) ॥ महावैष्टंभम् । वैष्टंभो बृहतीन्द्रः ॥

औहोवा । वयंघत्वासुतावन्तः । औहोवा ॥ औहोइ । आपोनवृक्तबर्हिषः । पवाइत्राऽ३स्या । प्रस्रवणेषुवाऽ१त्रौऽ२हान् । औहोऽ३इ । औहोइ॥ परिस्तोतारआसते । पराइस्तोऽ३ता ॥ रआसता । औऽ३होवा । होऽ५इ॥ डा ॥ ( दी० १७ । प० १५ । मा० ११ )२९ ( ञ । ४५२ )

(२६१।३) ॥ अभिनिधनं काण्वम् । कण्वो बृहतीन्द्रः ॥

औहोहोहाइ । आइही । वायाम्॥ घाऽ२३४त्वा । सुतावाऽ२३४०ताः । आपोनाऽ२३४वृ । क्ताबर्हिषाः । एहोइ । आऽ२३४इही । पावित्राऽ२३४स्या । प्रास्रावाऽ२३४णे । षूवृत्रहान् । ऐहोइ । आऽ२३४इही ॥ पारिस्तोऽ२३४ता ॥ रआऽ३सा५ताऽ६५६इ । आऽ२३४भी ॥

( दी० ५ । प० १७ । मा० १२ )३० ( फा । ४५३ )

(२६१।४) ॥ महावैष्टंभम् । वैष्टंभो बृहतीन्द्रः ॥

वयंघत्वोहाइ । सुतावन्तोवा ॥ आपोनवृ । क्तबाहोऽ१ईषाऽ२३ः । होवाऽ३हाइ । पवित्रस्यप्रस्रवणे । षुवात्रोऽ१हाऽ२३न् । होवाऽ३हाइ॥ पराइस्तोऽ१ताऽ२३ । होवाऽ३हा । रआऽ२३॥ साऽ२ताऽ२३४औहोवा॥ दीऽ२३४शाः ॥ (दी० ५ । प० १३ । मा० १०)३१ ( बौ ।४५४)

---

[साम-तन्त्र-सूत्राणि] [४५१]२८ नस्तो ६.११.४ [४५२]२९ [४५३]३० [४५४]३१ पृथक् सूत्राणि न सन्ति

शंयुर्बार्हस्पत्यः । इन्द्रः । बृहती । ( ऋ० ६ । ४६ । ७ )

यदिन्द्र नाहुषीष्वाँ ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥२६२॥

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३३ । १० )

सत्यमित्था वृषेदसि वृषजूतिर्नोऽवृतः ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥२६३॥

यदिन्द्र नाहुषीष्वा ओजो नृम्णं च कृष्टिषु ।
यद्वा पञ्च क्षितीनां द्युम्नमा भर सत्रा विश्वानि पौंस्या ॥२६२॥
सत्यमित्था वृषेदसि वृषजूतिर्नोऽविता ।
वृषा ह्युग्र शृण्विषे परावति वृषो अर्वावति श्रुतः ॥२६३॥

---

(२६२।१)　　॥ श्रौष्टीगवम् । श्रुष्टीगुर्बृहतीन्द्रः ॥

ओहाइ । यदिन्द्रना । हुषीषूऽ६वा ॥ ओजोऽ२नाम्र्णाऽ२म् । चकृष्टि । षूऽ ।
ऐऽ२हीऽ१आइहीऽ२ । हाऽ२ऊऽऊऽवाइ । याऽ१द्वाऽ२पा०चाऽ२ । क्षितीनाम् ।
ऐऽ२हीऽ१आइहीऽ२ हाऽ२ऊऽऊऽवाइ ॥ द्युम्नमाभ । रा । ऐऽ२हीऽ१आइहीऽ२ ।
हाऽ२ऊऽऊऽवाइ ॥ साऽ१त्राऽ२वाइश्वाऽ२ । निपौंऽ२सि । या । ऐऽ२हीऽ१आइहीऽ२ ।
हाऽ२ऊऽऊऽवाऽ२ । याऽ२३४औहोवा ॥ ऊऽ२३४पा ॥ 22-7-55

( दी० ९ । प० २३ । मा० २४ ) ३२ ( द्रौ । ४५५ )

त्रयोविंशतिस्तृतीयः खण्डः ॥ ३ ॥ दशतिः ॥ ७ ॥

(२६३।१)　　॥ इन्द्रस्य वृषकम् । इन्द्रो बृहतीन्द्रः ॥

सत्यमित्थावृ । षाऽ५इदसाइ ॥ वृषजूतिर्नोविताऽ२ । वृषाह्युग्राशृण्विषाऽ२इ । परावताइ ।
वृषोऽ२३र्वा ॥ वताइश्रूऽ२३ताऽ२४३ः । ओऽ२३४५इ ॥ डा ॥

( दी० ५ । प० ९ । मा० ७ ) ३३ ( भे । ४५६ )

॥ इति ग्रामे गेय-गाने सप्तमस्यार्द्धः प्रपाठकः ॥

---

**[साम-तन्त्र-सूत्राणि]** [४५५]३२ सन्ध्याग्रे ९.१.७; इणि १३.५.७;　　[४५६]३३ ऊष्मण्यघोषादिन्याम् ७.४.२;

( २६२।१ ) अत्र सर्वत्र ' हाऽ२ऊ ' एवं प्रेंखस्वरः कार्यः ।

रेभः काश्यपः । इन्द्रः । बृहती । ( ऋ० ८ । ९७ । ४ )

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥ २६४ ॥

वत्सः, (वशोऽश्व्यः) । इन्द्रः । बृहती (पिपीलिकमध्या) । ( ऋ० ८ । ४६ । १४ )

अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥ २६५ ॥

यच्छक्रासि परावति यदर्वावति वृत्रहन् ।
अतस्त्वा गीर्भिर्द्युगदिन्द्र केशिभिः सुतावाँ आ विवासति ॥२६४॥
अभि वो वीरमन्धसो मदेषु गाय गिरा महा विचेतसम् ।
इन्द्रं नाम श्रुत्यं शाकिनं वचो यथा ॥२६५॥

(२६४।१) ॥ द्यौते द्वे, द्वैगते वा । द्विगद्बृहतीन्द्रः ॥

यच्छक्राऽ३सीपरावती॥ यादर्वाव । तिवार्त्राऽ१हाऽ२न् । अताऽ३ः । हौऽ३होऽ३वा । त्वागीर्भिर्द्युगदिन्द्राकेऽ१शिभीऽ२ः॥ सुताऽ२३॥ वाऽ२ऽआऽ२३४औहोवा॥ एऽ३ । विवाँऽ२सतीऽ२३४५ ॥

( दी० ७ । प० १० । मा० ५ )१ ( शु । ४५७ )

(२६४।२)
यच्छक्रासिपरावातियदोहाइ॥ वांवऽ३ताइवृत्राहाऽ२३४न् । अताऽ३४स्त्वागाइ । भाइर्द्युगादि । द्राकेऽ१शिभीऽ२ः॥ सुताऽ२३॥ वाऽ२ऽआऽ२३४औहोवा॥ विवाँऽ२सतीऽ२३४५ ॥

( दी० ७ । प० ८ । मा० ८ )२ ( जै । ४५८ )

(२६५।१) ॥ कार्तयशं कार्तवेशं वा । कृतयशा बृहतीन्द्रः ॥
अभिवोवीरमन्धसाः॥ मदेषुऽ३गायाऽ२ । गिरामाहाऽ३ । वीचेताऽ२३४साम्॥ इन्द्रन्नामा ॥ श्रूत्यंऽशाकाऽ२इ । नाऽ२३४औहोवा॥ वचोउपाऽ२३४५ ॥

( दी० ८ । प० ८ । मा० ५ )३ ( कु । ४५९ )

---

[साम-तन्त्र-सूत्राणि] [४५७]१ पृथक् सूत्राणि न सन्ति [४५८]१ यत्तुच्चे ३.६.२; [४५९]३ शि १.१०.८; रा ६.३.१;

शंयुर्बार्हस्पत्यः। इन्द्रः। बृहती। ( ऋ० ६।४६।९)

इन्द्र॑ त्रि॒धातु॑ शर॒णं त्रि॒वरू॑थं स्वस्ति॒मत् ।
छ॒र्दिर्य॑च्छ म॒घव॑द्भ्यश्च॒ मह्यं॑ च या॒वया॑ दि॒द्युमे॑भ्यः ॥ २६६ ॥

नृमेध आंगिरसः। इन्द्रः। बृहती। ( ऋ० ८।९९।३ )

आ॒यन्त॑ इव॒ सूर्यं॒ विश्वेदिन्द्र॑स्य भक्षत ।
वसू॑नि जा॒ते जन॑मान॒ ओज॑सा॒ प्रति॑ भा॒गं न दी॑धिम ॥ २६७ ॥

पुरुहन्मा आंगिरसः। इन्द्रः। बृहती। ( ऋ० ८।७०।७ )

न सी॒मदे॑व आप॒दिषं॑ दी॒र्घायो॒ मर्त्यः॑ ।
एत॑ग्वा चि॒द्य एत॑शा यु॒योज॑ते॒ हरी॒ इन्द्रो॑ यु॒योज॑ते ॥२६८॥

इन्द्र त्रिधातु शरणं त्रिवरूथꣳ स्वस्तये ।
छर्दिर्यच्छ मघवद्भ्यश्च मह्यं च यावया दिद्युमेभ्यः ॥२६६॥
आयन्त इव सूर्यं विश्वेदिन्द्रस्य भक्षत ।
वसूनि जातो जनिमान्योजसा प्रति भागं न दीधिमः ॥२६७॥
न सीमदेव आप तदिषꣳ दीर्घायो मर्त्यः ।
एतग्वा चिद्य एतशो युयोजत इन्द्रो हरी युयोजते ॥२६८॥

(२६६।१) ॥ इन्द्रस्य शरणम्। इन्द्रो बृहतीन्द्रः ॥

इन्द्रात्रिधाऽ५तुशरणाम्॥ त्रिवरूथꣳसुवस्तयाइ । छर्दिर्याऽ२३छा । माघवद्भ्यः ।
चामह्याऽ२३०चा॥ यावयाऽ२३दी॥ द्युमेऽ२भिया । औऽ३होवा । हेऽ५इ ॥डा॥
( दी० २।प० १०।मा० ४ )४ ( जी । ४६० )

(२६७।१) ॥ आयन्तीयम्। आयन्तीयो बृहतीन्द्रः ( प्रजापतिः ) सूर्यः॥

आयन्तइवसूऽ४रायाम्॥ विश्वाऽ२इदिन्द्राऽ२ । स्यभाऽ२क्षाता । वासूनिजातोजनिमा ।
नियोजाऽ१साऽ२॥ प्रतिभागन्नदीऽ२धिमः । प्राऽ२३ती॥ भागान्नाऽ२३दा । हिम् ।
धिमाऽ३ः । ओऽ२३४वा॥ हेऽ२३४५ ॥ ( दी० ८।प० १२।मा० ६ )५ ( द्रू । ४६१ )

(२६८।१) ॥ वाम्रम् आक्षीलं वा। वाम्रो बृहतीन्द्रः ॥

नसीमदेवआ । हाऽ३हाऽ३इ । पाऽ२३४ । तत्पतोवा॥ इषꣳहोऽ२इ । दीर्घाहोऽ२ ।
योमर्तायाऽ२ः । आइतग्वाचित् । यआइताशो । युयाउवाऽ३ । ऊऽ२३४पा । जताऽ२इ ॥
आइन्द्रोऽ२हारीऽ२॥ युयोऽ२३ । जाऽ२ताऽ२३४औहोवा॥ ऊऽ२३४पा ॥
( दी० ७।प० १६।मा० १२ )६ ( प्ला । ४६२ )

[ साम-तन्त्र-सूत्राणि ] [४६०] ४ ( पृथक सूत्राणि न सन्ति ) [४६१]० [४६२]०

नृमेध-पुरुमेधावाङ्गिरसौ । इन्द्रः । बृहती । ( ऋ० ८ । ९० । १ )

आ नो विश्वासु हव्य इन्द्रः समत्सु भूषतु ।
उप ब्रह्माणि सवनानि वृत्रहा परमज्या ऋचीषमः ॥ २६९ ॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । १६ )

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि नकिष्ट्वा गोषु वृण्वते ॥ २७० ॥

आ नो विश्वासु हव्यमिन्द्र१ समत्सु भूषत ।
उप ब्रह्माणि सवनानि वृत्रहन् परमज्या ऋचीषम ॥२६९॥

तवेदिन्द्रावमं वसु त्वं पुष्यसि मध्यमम् ।
सत्रा विश्वस्य परमस्य राजसि न किष्ट्वा गोषु वृण्वते ॥२७०॥

---

शाकाणि, वा वैयश्वानि वा, आश्वानि वा, शौल्कानि वा, सुम्नानि वा, द्युम्नानि वा,
पृष्ठानि वा, यौक्ताश्वानि वा, सोम सामानि वा, वासिष्ठानि वा, इमानि त्रीणि ।

(२६९।१) त्रयाणां वसिष्ठो बृहतीन्द्रः ॥

आनः । एविश्वा ॥ सुहाव्याऽ२म् । आइन्द्र१ंसम । त्सुभूऽ१षाता । ऊऽ२३४पा ।
हाऽ३हाइ । ब्रह्माणिसवना । निवृत्रहान् ॥ परमाऽ२३ज्याः । आर्चीऽ३हाइ ॥ षमा ।
औऽ३होवा । होऽ५इ ॥डा॥

( दी० ३ । प० १५ । मा० ८ ) ७ ( णै । ४६३ )

(२६९।२)

आनोविश्वासुहाहाव्याम् ॥ इन्द्र१ंसमत्सुभूषतो । पब्राऽ२३ह्मा । णिसवना । निवृत्रहान् ॥
परमाऽ२३ज्याः । आर्चीऽ३हाइ ॥ षमा । औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० ६ । प० ११ । मा० ५ )८ ( कु । ४६४ )

(२६९।३)

आनाविश्वासुहाव्याम् ॥ इन्द्राम् । समत्सुभूषत । उपाब्राऽ१ह्माऽ२ । णिसवनानिवृत्रहन् ॥
परामाऽ१ज्याऽ२ः ॥ ऋचीषाऽ२३माऽ३४३ । ओऽ२३४इ ॥ डा ॥

( दी० ६ । प० ९ । मा० ५ )९ ( घु । ४६५ )

(२७०।१) ॥ प्रजापतेर्निधनकामम् । प्रजापतिर्बृहतीन्द्रः ॥

तवेदिन्द्राऽ५वमंवसू ॥ त्वंपुष्यसिमध्यमम् । सात्रावाऽ२३४इश्वा । स्यापरमस्याराजसि ॥
नकिष्ट्वाऽ२३४गो ॥ षूवृण्वाऽ२३ताइ । होवाऽ३होइ । होऽ । वाहाऽ३१ऊवाऽ२३४५ ॥

( दी० ३ । प० ९ । मा० ५ )१० ( दु । ४६६ )

---

[ साम-तन्त्र-सूत्राणि ] [४६३]७ ( पृथक् सूत्राणि न सन्ति ) [४६४]८ त्रह ८.३.१; तत्र ११.७.३;
[४६५]९ अण् ३.७.८; [४६६]१० ह्रस्वमघोषादि सस्वरे १.११.९; प्रहो: २.२.६;

मेधातिथि- मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८ । १ । ७ )

कैयथ केदसि पुरुत्रा चिद्धि ते मनः ।

अलर्षि युध्म खजकृत्पुरं प्र गायत्रा अगासिषुः ॥ २७१ ॥

कलिः प्रागाथः । इन्द्रः । बृहती । ( ऋ० ८ । ६६ । ७ )

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् । तस्मा उ अद्य समना सुतं भरा नूनं भूषत श्रुते॥२७२॥

कैयथ केदासि पुरुत्रा चिद्धि ते मनः ।

अलर्षि युध्म खजकृत्पुरंदर प्र गायत्रा अगासिषुः ॥२७१॥

वयमेनमिदा ह्योऽपीपेमेह वज्रिणम् ।

तस्मा उ अद्य सवने सुतं भरा नूनं भूषत श्रुते ॥२७२॥ ✓

(२७१।१) ॥ इन्द्रस्य प्रियाणि त्रीणि, वसिष्ठस्य वा । त्रयाणां इन्द्रो बृहतीन्द्रः ॥

कैयथा॥ कुवेदसाऽ२इ । औहोऽ२ । औहोइ । औऽ३होऽ२३४वा । पुरुत्राचाइत् । हिवेमनाऽ२ः । औहोऽ२ । औहोइ । औऽ३होऽ२३४वा । अलर्षियू । ध्माखजकृऽ२त् । औहोऽ२ । औहोइ । औऽ३होऽ२३४वा॥ पुरन्दरा । प्रगायात्राऽ२ः । औहोऽ२ । औहोइ । औऽ३होऽ२३४वा॥ अगाऽ३ । साऽ२इषूऽ२३४औहोवा॥ सुश३ऽसाऽ२३४५ः ॥

(२७१।२) ( दी० १२ । प० २३ । मा० १३ )११ ( जि । ४६७)

कुवाकुवा॥ याथा । कुवेदसाइ । ऊवाइ । औऽ३होऽ२३४५ । पुरुत्राचाइत् । हितेमनाः । ऊवाइ । औऽ३होऽ२३४५ । अलर्षियू । ध्माखजकृत् । ऊवाइ । औऽ३होऽ२३४५ ॥ पुरन्दरा । प्रगायात्राः । ऊवाइ । औऽ३होऽ२३४५॥ अगाऽ३ । साऽ२इषूऽ२३४औहोवा ॥ सुशाऽ३ऽसाऽ२३४५ः ॥ ( दी० ७ । प० २० । मा० १३ )१२ ( जि । ४६८ )

(२७१।३)

कैयथकूऽ३वाइदाऽ२३४सी॥ पुरुत्राचित् । हिताइमाऽ२३नाः । आलर्षि । युध्माखजकृऽ३त् । हाउवा॥ पुरंदाऽ२३रा । प्रगायात्राऽ२ः॥ अगाऽ२३ । साऽ२इषूऽ२३४औहोवा॥ ष्वूऽ२३४५ ॥ ( दी० ५ । प० ११ । मा० ९ )१३ ( गो । ४६९ )

(२७२।१) ॥ ऐन्द्राणि वासिष्ठानि वा, वैरूपाणि त्रीणि । त्रयाणां वसिष्ठो बृहतीन्द्रः ॥

वयमेनाम्॥ आऽ२इदाऽ२३४औहोवा । ह्योऽ२३४याः । अपीपमेहवाज्रिणम् । तास्माऽ२ऊवाऽ२ । द्यसवनाइ । सुतंभाराऽ२ । आनूनाऽ२३०भू॥ पातश्रुते । इडाऽ२३भाऽ३४३ । ओऽ२३४५ई ॥डा॥ ( दी० ९ । प० १२ । मा० ८ )१४ ( थै । ४७० )

[ साम-तन्त्र-सूत्राणि ] [४६७]११ [४६९]१३ (पृथक् सूत्राणि न सन्ति ) [४६८]१२ अणोऽन्त्य ६.७.१; [४७०]१४ नामि गप्रथमत्तु १.११.१०; यघोषे ३.३.२;

पुरुहन्मा आङ्गिरसः । इन्द्रः । बृहती । ( ऋ० ८ । ७० । १ )

यो राजा चर्षणीनां याता रथेभिरध्रिगुः । विश्वासां तरुता पृतनानां ज्येष्ठो यो वृत्रहा गृणे ॥२७३

यो राजा चर्षणीनां याता रथेभिरध्रिगुः ।
विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे ॥२७३॥

(२७२।२)
वयमेनाम्॥ इदाऽ२हायाः । अपौहोइ । पेमौहोइ । इ । हावज्रिणाम्॥ तस्माउवा । द्यासवनाइ । सुतंभरा॥ आनौहो । नेमौहो॥ षातश्रुताऽ२१उवाऽ२३ ॥ ऊऽ२३४पा ॥

( दी० १२ । प० १३ । मा० ८ )१५( ज्यै । ४७१ )

(२७२।३)
वयमेनमिदा । हियाओऽ२३४वा । ईयाहाइ॥ हुवेहोऽ२इ । अपीपेमहावज्रिणाऽ२म् । तस्माउवद्यसवनाइ । सुतंभाराऽ२ । ईऽ३या॥ आनूनाऽ२३४०भू॥ षताश्रूऽ२३४५ताऽ६५६इ ॥ श्रवाऽ२साऽ२३४५इ ॥

( दी० ८ । प० ११ । मा० ८ )१६ ( टै । ४७२ )

सप्तदश चतुर्थः खण्डः ॥४॥ दशतिः ॥८॥

(२७३।१) ॥ पौरुहन्मनम् । पुरुहन्मा बृहतीन्द्रः ॥
योराजाऽ३चर्षणाइनाम्॥ यातारथे । भिराध्राऽ१इगूऽ२ः । ध्राइगूऽ२ः । वाइश्वासाऽ३म् । तरुताऽ३ । तरुताऽ३ । पार्त्तानाऽ२३४नाम्॥ ज्याइष्ठंयोवा । त्रांहागाऽ२३४णाइ ॥ त्रहाऽ५गृणाइ॥ होऽ५इ ॥डा॥

( दी० ५ । प० १३ । मा० १३ )१७ ( बि । ४७३ )

(२७३।२) ॥ प्राकर्षम् । प्रकर्षो बृहतीन्द्रः ॥

योराजाच । पणाऽ३२३४इनाम्॥ यातारथेभिरध्राऽ२३इगूः । विश्वासान्तरुतापृतानाऽ२३नाम्॥ ज्याऽ२३इष्ठाम्॥ योवृत्रहोवाऽ३ओऽ२३४वा । गाऽ५र्णोऽ६हाइ ॥

( दी० ९ । प० ७ । मा० ९ )१८ ( थो । ४७४ )

[ साम-तन्त्र-सूत्राणि] [४७१]१५ [४७२]१६ [४७४] १८ ( पृथक् सूत्राणि न सन्ति )
[४७३] १७ स्तोत्रा १.६.५;

भर्गः प्रागाथः । इन्द्रः । बृहती । ( ऋ० ८ । ६१ । १३ )

यत इन्द्र भयामहे ततो नो अभयं कृधि । मघवञ्छग्धि तव तन्न ऊतिभिर्वि द्विषो वि मृधो जहि२७४

इरिम्बिठिः काण्वः । इन्द्रः, वास्तोष्पतिर्वा । बृहती । ( ऋ० ८ । १७ । १४ )

वास्तोष्पते ध्रुवा स्थूणांसत्रं सोम्यानाम् । द्रप्सो भेत्ता पुरां शश्वतीनामिन्द्रो मुनीनां सखा॥२७५॥

जमदग्निर्भार्गवः । सूर्यः । बृहती । ( ऋ० ८ । १०१ । ११ )

बण्महाँ असि सूर्य बळादित्य महाँ असि । महस्ते सतो महिमा पनस्यतेऽद्धा देव महाँ असि॥२७६

यत इन्द्र भयामहे ततो नो अभयं कृधि ।
मघवञ्छग्धि तव तन्न ऊतये वि द्विषो वि मृधो जहि ॥२७४॥

वास्तोष्पते ध्रुवा स्थूणा२ंसत्र२ं सोम्यानाम् ।
द्रप्सः पुरां भेत्ता शश्वतीनामिन्द्रो मुनीना२ं सखा ॥२७५॥

बण्महा२ं असि सूर्य बडादित्य महा२ं असि ।
महस्ते सतो महिमा पनिष्टम मह्ना देव महा२ं असि ॥२७६॥

(२७४।१)　॥ इन्द्रस्याभयङ्करम् । इन्द्रो बृहतीन्द्रः ॥

यतआऽ३इन्द्राभयामहाइ॥ ततोनोअभयंकाऽ२३र्धी । मघवञ्छग्धितवतन्नऊताऽ२३याइ ॥
विद्वाइषोऽ२३वी॥ मार्द्धोजहि । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० ५ । प० ८ । मा० ८ )१९( वै । ४७५ )

(२७५।१)　॥ कावषे द्वे । द्वयोः कवषो बृहतीन्द्रो वास्तोष्पतिः ॥

वास्ताष्पताइ॥ ध्रुवा । स्थूणाओऽ२३४वा । अ२ंसत्र२ंसोम्यानाऽ२म् ।
द्रप्सःपुरांभत्ताशश्वताऽ२३इनाम्॥ आऽ२३४इन्द्राः॥ मुनीऽ२ । नाऽ३१उवाऽ२३ ॥
साऽ२३४खा ॥

( दी० ९ । प० ९ । मा० ८) २० ( घै । ४७६ )

(२७५।२)

वास्तोष्पतेध्रुवा । स्थूणाऽ३ । आऽ२३४ । सत्र२ंसो । म्यानाम्॥
द्रप्सःपुरांभत्ताशश्वताऽ२३इनाम्॥ आऽ२३इन्द्राः॥ मुनीऽ२ । नोऽ२३४वा॥ साऽ२३४खा ॥

( दी० ११ । प० १० । मा० ५ )२१ ( कु । ४७७ )

(२७६।१)　॥ सूर्यसाम । सूर्यो बृहती सूर्यः ॥

बण्महा२ंऽ३असिसूर्या॥ बाडादित्य । महा२ंआऽ१साऽ२३४३ । महस्तसतामहिमापनि ।
ष्टाऽ३मा॥ मह्वादाऽ२३इवाऽ३॥ महोऽ२३४वा । आऽ५सोऽ६हाइ ॥

( दी० ६ । प० ८ । मा० ५ )२२( गु । ४७८)

[साम-तन्त्र-सूत्राणि] [४७५]१९ [४७६]२० [४७७]२१[४७८]२२ ( पृथक् सूत्राणि न सन्ति )

देवातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ४ । ९ )

अश्वी रथी सुरूप इद्गोमाँ इदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रो याति सभामुप ॥ २७७ ॥

पुरुहन्मा आङ्गिरसः । इन्द्रः । बृहती । ( ऋ० ८ । ७० । ५ )

यद् द्याव इन्द्र ते शतं शतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्रं सूर्या अनु न जातमष्ट रोदसी ॥ २७८ ॥

अश्वी रथी सुरूप इद्गोमा२ँ यदिन्द्र ते सखा ।
श्वात्रभाजा वयसा सचते सदा चन्द्रैयाति सभामुप ॥२७७॥
यद् द्याव इन्द्र ते शत२ँशतं भूमीरुत स्युः ।
न त्वा वज्रिन्त्सहस्र२ँ सूर्या अनु न जातमष्ट रोदसी ॥२७८॥

---

(२७७।१) ॥ वैश्वदेवे, आनूपे, वाष्यश्वे वा द्वे । आनूपो बृहतन्द्रिः ॥

अश्वीअश्वी ॥ रथीसुऽ२रूपाऽ१ईऽ२त् । गोमा२ँयदि । द्रातेऽ१साखाऽ२ । श्वात्राऽ२भाजाऽ२ । वयसासचतेसाऽ२३दा ॥ चन्द्राइयोऽ२तीऽ२ ॥ साऽ२३भाऽ३म् । ऊऽ३४५पोऽ६हाइ ॥

( दी० ४ । प० ९ । मा० ६ ) २३ ( धू । ४७९ )

(२७७।२)

अश्वीरथीसुरूपाऽ६ईत् ॥ गोमा२ँयदिन्द्रतेसखाउवाऽ२३होवाऽ२३हाऽ२ईया । श्वात्राभाजावयसासचतेसदाउवाऽ२३होवाऽ२३हाऽ२ईया ॥ चन्द्राइयोऽ१तीऽ२ । साभामुप । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० १३ । प० ८ । मा० ८ )२४( द्वै । ४८० )

(२७८।१) ॥ वैरूपम् । विरूपो बृहतीन्द्रः सूर्यः ॥

यद्यावाऽ२३इन्द्रतेशताम् ॥ शतंभूमीरुतस्यूऽ२ः । नत्वावज्रिन्त्सहस्र२ँसूर्याअनूऽ२ ॥ नाजाऽ२तामाऽ२३ ॥ ष्टरोऽ२३४वा । दाऽ५सोऽ६हाइ ॥

( दी० ७ । प० ६ । मा० ५ )२५ ( स्तु । ४८१ )

---

[साम-तन्त्र-सूत्राणि] [४७९]२३ ( पृथक् सूत्राणि न सन्ति ) [४८०]२४ न ञरे १.८.१०; ञभा ८.१.३; [४८१]२५ तात् ९.५.६;

देवातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ४ । १ )

यदिन्द्र प्रागपागुदङ् न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ २७९ ॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । १४ )

कस्तमिन्द्र त्वावसुमा मर्त्यो दधर्षति ।
श्रद्धा इत्ते मघवन्पार्ये दिवि वाजी वाजं सिषासति ॥२८०॥

यदिन्द्र प्रागपागुदग्न्यग्वा हूयसे नृभिः ।
सिमा पुरू नृषूतो अस्यानवेऽसि प्रशर्ध तुर्वशे ॥ २७९ ॥
कस्तमिन्द्र त्वा वसवा मर्त्यो दधर्षति ।
श्रद्धा हि ते मघवन्पार्ये दिवि वाजी वाज* सिषासति ॥२८०॥

---

(२७९।१) ॥ नैपातिथे द्वे । द्वयोर्निपातिथिर्बृहतीन्द्रः ॥

यदिन्द्रप्रागपाक्॥ उदाक् । न्यग्वाहूयसेनृभाऽ२इः । सिमापुरूनृषूतोअ । सियानवाऽ२इ ॥ आसीऽ२प्राशाऽ२॥ धतोवाऽ३ओऽ२३४वा । वोऽ५शोऽ६हाइ ॥

(दी० ८ । प० ८ । मा० ८ )२६( डै । ४८२ )

(२७९।२)

यदिन्द्रप्रागपागुदाऽ६गे॥ नायग्वाहू । यसाइनृभीऽ२ः । हा । औहोऽ२३४हा । सिमोऽ२पुरूनृषूताअ । सियानवेऽ२३ । हा । औहोऽ२३४हा॥ असाइप्राशाऽ३ । हा । औहोऽ२३४हा॥ धाऽ२तुऽ२३४औहोवा॥ वोऽ२३४शे॥ ( दी० १३ । प० १४ । मा० ५)२७(तु।४८३)

(२८०।१) ॥ कौमुदस्य बृहतः सामनी द्वे ।( द्वयोः कुमुदो बृहत् ) कौमुदस्य बृहद् बृहतीन्द्रः ॥

कस्तमिन्द्रा॥ त्वाऽ२वासाऽ२उ । आमर्त्योदधर्षताइ । श्रद्धाहाइतेऽ२ । माघवन्पा । रियाइदाऽ१इइवीऽ२॥ वाजीवाजाऽ२म्॥ सिषाऽ२३ । साऽ२ताऽ२३४औहोवा । ऊऽ३२३४पा ॥

( दी० ८ । प० १० । मा० ७ )२८( प्ले । ४८४ )

(२८०।२)

कस्तमिन्द्रत्वा । वसाऽ३उ । आऽ२३४ । मर्त्योदध । षताइ॥ श्रद्धाहाइतेऽ२। माघवन्पा । रियाइ । दाइवाओऽ२३४वा । ऊऽ२३४पा॥ वाजीवाजाऽ२म्॥ सिषाऽ२३ । साऽ२ताऽ२३४औहोवा॥ ऊऽ२३४पा ॥

( दी० ८ । प० १४ । मा० ८ )२९( द्वै । ४८५ )

---

[ साम-तन्त्र-सूत्राणि ] [४८२]२६ गा ७.१०.९; [४८३] २७[४८४]२८ ( पृथक् सूत्राणि न सन्ति ) [४८५]२९ न्याभे १०.७.१०

भरद्वाजो बार्हस्पत्यः । इन्द्राग्नी । बृहती । ( ऋ० ६ । ५९ । ६ )

इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्य ।

हित्वी शिरो जिह्वया वावदुच्चरत् त्रिंशत्पदा न्यक्रमीत् ॥ २८१ ॥

मेध्यः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ५३ । ५ )

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।

आ शन्तम शन्तमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥ २८२ ॥

इन्द्राग्नी अपादियं पूर्वागात्पद्वतीभ्यः ।

हित्वा शिरो जिह्वया रारपच्चरत्त्रिंशत्पदा न्यक्रमीत् ॥२८१॥

इन्द्र नेदीय एदिहि मितमेधाभिरूतिभिः ।

आ शंतम शंतमाभिरभिष्टिभिरा स्वापे स्वापिभिः ॥ २८२ ॥

---

(२८१।१) ॥ वाचस्साम । वाक्-बृहतीन्द्रः ॥

इन्द्राग्नीअपादियाऽ६मे॥ पूर्वागाऽ२त् । पद्वताइभाऽ१याऽ२ः । हित्वाशिरोऽ२जिह्वयारा ।
रापच्चाराऽ२त् ॥ त्रिंशत्पदा॥ नियाऽ२३ । क्राऽ२माऽ२३४औहोवा॥ ऊऽ३२३४पा ॥

( दी० १० । प० ९ । मा० ६ )३०( म्ह्र । ४८६ )

(२८२।१) ॥ वाम्रे आशलिे वा द्वे । द्वयोर्वम्रो बृहतीन्द्रः ॥

इन्द्रनेदीयएदि । हाइ । मितमे । धा॥ भिरूतिभिः॥ आशन्ताऽ२३मा ।
शन्तमाभिरभिष्टिभिः॥ आस्वाऽ२३पे॥ स्वाऔऽ३होऽ३ । पिभिरोऽ२३४५इ ॥डा॥

( दी० ८ । प० ११ । मा० ६ )३१( ह्र । ४८७ )

(२८२।२)

इन्द्रनेदीयएदि । हाऽइ । मितमे । धा । भिरूतिभाइः॥ आशन्तमशन्तमाऽ२भाइः ।
आभिष्टिभिः॥ आस्वाऽ२पाइस्वाऽ२३॥ हाऽ३ । पिभिरोऽ२३४५इ ॥डा॥

( दी० ८ । प० ११ । मा० ९ ) ३२ ( टो । ४८८ )

॥ षोडश पञ्चमः खण्डः ॥ ५ ॥ दशतिः ॥ ९ ॥

---

[ साम-तन्त्र-सूत्राणि ] [४८६]३० भिण्यां धर्मो ६.८.१; [४८७]३१ ( पृथक सूत्राणि न सन्ति )
[४८८]३२ आयायुक् १.८.१;

नृमेध आङ्गिरसः । इन्द्रः । बृहती । ( ऋ० ८ । ९९ । ७ )

इव ऊती वो अजरं प्रहेतारमप्रहितम् । आशुं जेतारं हेतारं रथीतममतूर्तं तुग्र्यावृधम् ॥२८३॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । १ )

मो षु त्वा वाघतश्चनारे अस्मन्नि रीरमन् । आरात्ताच्चित्सधमादं न आ गहीह वा सन्नुप श्रुधि२८४

इत ऊती वो अजरं प्रहेतारमप्रहितम् ।
आशुं जेतार॰ हेतारं रथीतममतूर्तं तुग्रियावृधम् ॥२८३॥

मो षु त्वा वाघतश्च नारे अस्मन्नि रीरमन् ।
आरात्ताद्वा सधमादं न आ गहीह वा सन्नुप श्रुधि ॥२८४॥

(२८३।१)　　॥ गौरीवितं, प्रहितौ द्वौ, वासुके वा । द्वयोर्गौरीविर्तिबृहतीन्द्रः ॥

इतऊती ॥ वोऽ३ओजाऽ३राम् । औऽ३होऽ३वा । प्रहेतारमप्राहीऽ३ताम् । औऽ३होऽ३वा ।
आशुंजेतारऽ३ ॰हाइताऽ३राम् । औऽ३होऽ३वा ॥ रथाइतममतूर्ताऽ२३४०तू ॥ ग्रियाऽ३ ।
वाऽ२वृद्धाऽ२३४औहोवा ॥ स्तुपेऽ१ ॥　　( दी० ९ । प० ११ । मा० ८ )३३( तै । ४८९ )

(२८३।२)

इतऊतोवाअजाऽ६राम् ॥ प्रहेतारमप्रहितमुहुवाऽ२३होइ । आशुंजतार॰हाइतारमुहुवाऽ२३हो ॥
रथी । तमाऽ२म् । अतूर्ताऽ२३४०तू ॥ ग्रियाऽ३ । वाऽ२वृद्धाऽ२३४औहोवा ॥
स्तौऽ३पाऽ२३४५इ ।　　( दी० १२ । प० ९ । मा० ८ )३४( झै । ४९० )

(२८४।१)　　॥ आत्रे द्वे । द्वयोरत्रिर्बृहतीन्द्रः ॥

मोपुत्वावा ॥ घाताऽ२३४५ः । चाऽ२३४ना । आरेअस्मन्निरीऽ२रमन् । आराऽ१त्ताद्वाऽ२ ।
साधमादाऽ२म् । नाआगहि ॥ आइहवासाऽ२न् ॥ ऊपश्रुधि । इडाऽ२३भाऽ३४३ ।
ओऽ२३४५इ ॥डा॥　　( दी० ६ । प० १२ । मा० ८ )३५( म्वै । ४९१ )

(२८४।२)

मोपुत्वावाघतश्चनाऽ६ए ॥ आरेअस्मन्निरीरमाऽ२न् । हाऽ२ऊऊवाऽ२इ । ऊ ।
आरात्ताद्वासधमादाऽ२म् । हाऽ२ऊऊवाऽ२इ । ऊऽ२ । नआगाऽ२३४ही ॥ आइह ।
वासौवाओऽ२३४वा ॥ उपश्रूऽ२३धाऽ३४३इ । ओऽ२३४५इ ॥डा॥
　　( दी० ११ । प० १३ । मा० १५ )३६( गु । ४९२ )

॥ इति ग्रामे गेय-गाने सप्तमः प्रपाठकः ॥ ७ ॥

---

क्रुष्टस्वरः=११; [ साम-तन्त्र-सूत्राणि ] [ ४८९ ]३३ मादयंभायाम् १.१०.१; [४९०] ३४ रेफोऽनुबपरे ११.८.२; स्तु१२.५.३;[४९१]३५ आर्चिकम् ४.८.६;उच्चयोतेः ५.१०.४;[४९२]३६ क्रुष्टं जिमिगोः ४.११ ८; हे ५.९.५;सर्वोन्तेः ७.६.४;

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । ८ )

सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे । पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥२८५॥

शंयुर्बार्हस्पत्यः । इन्द्रः । बृहती । ( ऋ० ६ । ४६ । ३ )

यः सत्राहा विचर्षणिरिन्द्रं तं हूमहे वयम् । सहस्रमुष्क तुविनृम्ण सत्पते भवा समत्सु नो वृधे२८६

सुनोत सोमपाव्ने सोममिन्द्राय वज्रिणे ।
पचता पक्तीरवसे कृणुध्वमित्पृणन्नित्पृणते मयः ॥२८५॥
यः सत्राहा विचर्षणिरिन्द्रं तꣳ हूमहे वयम् ।
सहस्रमन्यो तुविनृम्ण सत्पते भवा समत्सु नो वृधे ॥ २८६ ॥

---

(२८५।१) ॥ गौरीविते द्वे । द्वयोर्गौरीवितिर्बृहतीन्द्रः ॥

सुनोतसोमपान्नाऽ६ए॥ सोममिन्द्राऽ२३ । होवाऽ३हा । यवज्राऽ२३इणाइ । पचतापक्ताइरवसेक । णूऽ । ध्वाऽ१मीऽ२३द्धाइ॥ पृ । णान् । आइत्पृऽ३हा । णताइमाऽ२३याऽ३४३ः । ओऽ२३४५इ ॥डा॥ ( दी० ६ । प० १३ । मा० १० )१ ( गौ । ४९३ )

(२८५।२)
सुनोतसोमपा । आन्नाओऽ२३४वा । इयाहाइ॥ सोममिन्द्राऽ२ । हुवेऽ२ । हुवेऽ२हो । यावज्रिणाऽ२इ । पचातापक्ताइरवसेक । णू । ध्वाऽ१मीऽ२३द्धाइ॥ पृ । णान् । आइत्पृऽ३हा॥ णताइमाऽ२३याऽ३४३ः । ओऽ२३४५इ ॥डा॥
( दी० ७ । प० १६ । मा० १० )२( चौ । ४९४ )

(२८६।१) ॥ वामदेव्यम् । वामदेवो बृहतीन्द्रः ॥

यःसत्राहाविचर्षणिः । इन्द्रन्ताऽ३ꣳहूमहेवयाम्॥ इन्द्रन्तꣳहूमहेवाऽ२३याम् । सहस्रमन्योतुविनृम्णसत्पाऽ२३ताइ॥ भवासाऽ२३मा॥ त्सुनोवृधे । इडाऽ२३माऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( दी० १० । प० ९ । मा० ५ )३( सु ४९५ )

---

[ साम-तन्त्र-सूत्राणि ] [४९३]१ [४९५,३ ( पृथक् सूत्राणि न सन्ति ) [४९४]१ णि १०.९.१;

परुच्छेपो दैवोदासिः । अश्विनौ । बृहती ( ऋ० १ । १३९ । ५ )

शचींभिर्नः शचीवसू दिवा नक्तं दशस्यतम् । मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन२८७

शचीभिर्नः शचीवसू दिवा नक्तं दिशस्यतम् ।
मा वा९ रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥ २८७ ॥

वामदेवो गौतमः । इन्द्र. । बृहती । ( न ऋग्वेदीयः )

यदा कदा च मीढुषे स्तोता जरेत मर्त्यः ।
आदिद्वन्देत वरुणं विपा गिरा धर्त्तारं विव्रतानाम् ॥ २८८ ॥

---

(२८७।१) ॥ अश्विनोः साम । अश्विनौ बृहतीन्द्र अश्विनौ ॥

शचींभिर्नाऽ५ःशचीवसू॥ दिवानक्तंदिशस्यताम् । मावाऽ२म् । रातिरुपदसत्कदाचना ॥
आस्माऽ२त्॥ रातिःकदोऽ२३४वा । चाऽ५नोऽ६हाइ ॥

( दी० ५ । प० ७ । मा० ४ ) ४ ( फी । ४९६ )

(२८८।१)॥वसिष्ठस्य वासिष्ठस्य वा. पज्रस्य पाज्रस्य वा.पज्राणि त्रीणि । त्रयाणां वसिष्ठो बृहतीन्द्रावरुणाः॥

यदाकदा॥ चाऽ२माऽ२३४औहोवा । ढूऽ२३४षे । स्तोताजरेतमर्तियऽ३ः । आदिद्वन्द्वे ।
तावरुणाऽ२३४म् । विपाऽ३४गिरा॥ धात्तारांवीऽ२३॥ व्राऽ२ताऽ२३४औहोवा॥
नाऽ२३४५म् ॥

( दी० ९ । प० १० । मा० ५ )५( नु । ४९७ )

(२८८।२)

यदाकदाच्रमाहाउ॥ ढूषाऽ२इस्तोताऽ२ । जराइ । तमर्तियाः । आदिद्वन्दा । औहीऽ३हाऽ३ ।
हाऽ३इ । तावाऽ२रूऽ२३४णाम् । विपागिरा॥ धर्त्तारंव्या । औहोऽ३हाऽ३ । हाइ ॥
व्रातानाम् । इडाऽ२३भाऽ३४३ । औऽ२३४५इ ॥ डा ॥

( दी० १० । प० १६ । मा० ९ )६( पो । ४९८ )

(२८८।३)

यदाऽ४क । दाऽ४चमी । ढुषाऽ३इ । स्तोता॥ जराइ । तमार्त्तीयाऽ३ः ।
आदाइद्वन्दाऽ३इ । तावाऽ२रूऽ२३४णाम्॥ विपा । गिरौवाओऽ२३४वा । धर्त्ता ।
रंव्यौवाओऽ२३४वा॥ व्रताऽ५नाम् । होऽ५इ ॥ डा ॥ ( दी० ३ । प० १५ । मा० १० )७( णौ । ४९९)

---

[ साम-तन्त्र-सूत्राणि ] [४९६]४ त्रिपु १ १.५; मि ७.१०.२; इद्वति ८.२.७; (११.१.३१; इदं गाने न ... पुस्तके लिखितम् ) [४९७]५ ( पृथक् सूत्राणि न सन्ति ) [४९८]६ आदि १.४.१०;
[४९९]७ दित् ६.२.८;

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३३ । ४ )

पाहि गायान्धसो मद इन्द्राय मेध्यातिथे । यः संमिश्लो हर्योर्यः सुते सचा वज्री रथो हिरण्ययः २८९

भर्गः प्रागाथः । इन्द्रः । बृहती । ( ऋ० ८ । ६१ । १ )

उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः । सत्राच्या मघवा सोमपीतये धिया शविष्ठ आ गमत् २९०

पाहि गा अन्धसो मद इन्द्राय मेध्यातिथे ।
यः संमिश्लो हर्योर्यो हिरण्यय इन्द्रो वज्री हिरण्ययः ॥ २८९ ॥
उभयं शृणवच्च न इन्द्रो अर्वागिदं वचः ।
सत्राच्या मघवान्त्सोमपीतये धिया शविष्ठ आ गमत् ॥ २९० ॥

---

(२८९।१) ॥ सौभरे द्वे । सौभरिर्बृहतीन्द्रः ॥

पाहिगाआ ॥ धसोमाऽ२३दाइ । आइन्द्रायमे । धियाताऽ२३इथाइ । यःसंमिश्लाऽ२हरियोर्यः । हाइरण्यायाऽ२ः ॥ आइन्द्रोवाऽ३ज्रीऽ३ ॥ हिरोऽ२३४वा । ण्याऽ५योऽ६हाइ ॥

( दी० ८ । प० ९ । मा० १० ) ८ ( ठौ । ५०० )

(२८९।२)

पा । हौपाही ॥ गाअन्धसोमाऽ२३दाइ । आइन्द्रायमे । धियाताऽ२३इथाइ । यसंमिश्लोऽ२हरियोर्यः । हाइरण्यायाऽ२ः ॥ आइन्द्रोवाऽ३ज्रीऽ३ । हिरोऽ२३४वा । ण्याऽ५योऽ६हाइ ॥

( दी० ८ । प० १० । मा० १० ) ९ ( णौ । ५०१ )

(२९०।१) ॥ इन्द्रस्य वैयश्वम् । व्यश्वो बृहतीन्द्रः ॥

उभयं शृणवचनाऽ६ए ॥ आइन्द्राऽ२अर्वागिदंवचाऽ२३ः । होवाऽ३हाइ । सत्राचियामघवाऽ२न्नु । सो । मापाऽ३हाइ । ताऽ२३४याइ ॥ धियाशविष्ठआऽ२३होइ ॥ गमात् । औऽ२३होवा । होऽ५इ ॥ डा ॥

( दी०६ । प० १२ । मा० १२ ) १० ( खा । ५०२ )

---

[ साम-तन्त्र-सूत्राणि ] [५००]८ हात् ९.२.३; [५०१]९ ( पृथक् सूत्राणि न सन्ति )
[५०२]१० तालव्यम् २.७.४; रादेरवृद्धे २.८.३;

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८ । १ । ५ )

महे चन त्वामद्रिवः परा शुल्काय देयाम् ।

न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥२९१॥

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८ । १ । ६ )

वस्याँ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।

माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥२९२॥

महे च न त्वाद्रिवः परा शुल्काय दीयसे ।

न सहस्राय नायुताय वज्रिवो न शताय शतामघ ॥ २९१ ॥

वस्या२ इन्द्रासि मे पितुरुत भ्रातुरभुञ्जतः ।

माता च मे छदयथः समा वसो वसुत्वनाय राधसे ॥२९२॥

---

(२९१।१) ॥ सहस्रायुतीये, प्रजापतेर्महोविशीये वा द्वे । प्रजापतिर्बृहतीन्द्रः ॥

महेचनोवा ॥ त्वाअद्राऽ२३४इवाः । पराशुल्का । यऽ३दायासऽ३इ । नस । हस्राऽ३ ।
यानायुता । यवाज्राइवोऽ३ ॥ नश । तायाऽ३ ॥ शाऽ२३ताऽ३ । माऽ३४५घोऽ६हाइ ॥

( दी० ६ । प० १२ । मा० ६ )११ ( खू । ५०३ )

(२९१।२)

महेचाऽ३नत्वाआद्रिवाः ॥ पाराशुल्का । यदायाऽ१साऽ२इ । नसहस्राऽ२ ।
यनायुतायावज्रिऽरिः ॥ नशाताऽ२३या ॥ शताऽ२३ । माऽ२घाऽ२३४आहोवा ॥
महोविशेऽ१ ॥

( दी० ५ । प० ५ । मा० ५ )१२ ( भु । ५०४ )

(२९२।१) ॥ इन्द्राण्याःसाम । इन्द्राणी बृहतीन्द्रः ॥

वस्याऽइन्द्रासिमे । हाउपितूः ॥ उताभ्राऽ२३४तूः । अभूञ्जातौ । वाओऽ२३४वा ।
माताचामौ । वाओऽ२३४वा ॥ छदयथः । साऽ३मावासौ । वाओऽ२३४वा ॥ वसूत्वानौ ।
वाओऽ२३४वा ॥ यरोऽ२३४वा । धाऽ५सोऽ६हाइ ॥ ।-)-69

( दी० ४ । प० १४ । मा० १० )१३ ( धौ । ५०५ )

सप्तदश षष्ठः खण्डः ॥ ६ ॥ दशतिः ॥ १० ॥

इति तृतीयः प्रपाठकः ॥ ३ ॥

---

[ साम-तन्त्र-सूत्राणि ] [५०३]११[५०४]१२[५०५]१३ ( पृथक् सूत्राणि न सन्ति )

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । ४ )

इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।

ताँ आ मदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥२९३॥

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८ । १ । १० )

आ त्वा१द्य सबर्दुघां हुवे गायत्रवेपसम् ।

इन्द्रं धेनुं सुदुघामन्यामिषमुरुधारामरंकृतम् ॥२९५॥

इम इन्द्राय सुन्विरे सोमासो दध्याशिरः ।

ता३ आमदाय वज्रहस्त पीतये हरिभ्यां याह्योक आ ॥२९३॥

वामदेवो गौतमः । इन्द्रः । बृहती । ( न ऋग्वेदीयः )

इम इन्द्र मदाय ते सोमाश्चिकित्र उक्थिनः ।

मधोः पपान उप नो गिरः शृणु रास्व स्तोत्राय गिर्वणः ॥२९४॥

आ त्वा३द्य सबर्दुघा३ हुवे गायत्रवेपसम् ।

इन्द्रं धेनु३ सुदुघामन्यामिषमुरुधारामरङ्कृतम् ॥२९५॥

---

(२९३।१) ॥ सौभरम् । सुभरिर्बृहतीन्द्रः ॥

इमाऽ२३४इ । इमइ । द्राऽयसुन्वाऽ६इराइ ॥ सोमासोदध्याशिराः। ता३आमदायवज्रहस्तपीतायाइ ॥ हराऽ२३हो । भ्यायाऽ२३हो ॥ हियोऽ२३ । काऽ२आऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

( दी० १२ । प० १० । मा० ९ )१४ (ज्वो । ५०६)

(२९४।१) ॥ गार्त्समदम् । गृत्समदो बृहतीन्द्रः ॥

इमइन्द्राऽ५मदायताइ ॥ सोमाश्चिकित्रउक्थिनाः । माऽ१धोऽ२ःपापाऽ२ । नउपनोगिराःशाऽ१र्णूऽ२ ॥ रास्वस्तोऽ२३त्रा ॥ यगिर्वाऽ२३णाऽ३४३ः । ओऽ२३४५ इ ॥डा ॥

( दी० ५ । प० ८ । मा० ७ )१५ ( बे । ५०७ )

(२९५।१) ॥ वाचस्साम । वाग्बृहतीन्द्रः ॥

आत्वद्यासाऽ६बर्दुघाम् ॥ हुवाइगाऽ२यत्रवेऽ२पसम् । आइन्द्रधेऽ२नूम् । सुदुघाम् । आऽ । नियाऽ२माऽ२३४इषाम् ॥ उरुधाऽ२३राम् ॥ अरंकाऽ२३ताऽ३४३म् । ओऽ२३४५इ ॥ डा ॥

( दी० ५ । प० १० । मा० ११ )१६ ( म । ५०८ )

---

[ साम-तन्त्र-सूत्राणि ] [५०६]१४ [५०७]१५ ( पृथक् सूत्राणि न सन्ति ) [५०८]१६ आत्वा ८.६.७; अस्याम् ८.९.८;

नोधा गौतमः । इन्द्रः । बृहती । ( ऋ० ८ । ८८ । ३ )

न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीळवः ।

यद्दित्ससि स्तुवते मावते वसु नकिष्टदा मिनाति ते ॥२९६॥

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३३ । ७ )

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।

अयं यः पुरो विभिनत्योजसा मन्दानः शिप्र्यन्धसः ॥२९७॥

न त्वा बृहन्तो अद्रयो वरन्त इन्द्र वीडवः ।

यच्छिक्षसि स्तुवते मावते वसु न किष्टदा मिनाति ते ॥२९६॥

क ईं वेद सुते सचा पिबन्तं कद्वयो दधे ।

अयं यः पुरो विभिनत्योजसा मन्दानः शिप्रयन्धसः ॥२९७॥

वामदेवो गौतमः । इन्द्रः । बृहती । ( न ऋग्वेदीयः )

यदिन्द्र शासो अव्रतं च्यावया सदसस्परि ।

अस्माकमंशुं मघवन्पुरुस्पृहं वसव्ये अधि बर्हय ॥२९८॥

---

(२९६।१) ॥ बार्हदुक्थम् । बृहदुक्थो बृहतीन्द्रः ॥

नत्वाबृह । तोऽ५द्रयाः ॥ वरन्तइन्द्रवीडाऽ२३वाः । याछिक्षासीऽ२ । स्तूवताइमाऽ२ । वतेवसू ॥ नकिष्टाऽ२३दा ॥ मिनाताऽ२३इताऽ२३४३इ । औऽ२३४५इ ॥डा॥

( दी० ४ । प० १० । मा० ७ )१७( ने । ५०९ )

(२९७।१) नैपातिथम्. वाशम् वा । निपातिथिर्बृहतीन्द्रः ॥

कईवेदा ॥ सुताइसाऽ१चाऽ२ । पिबन्तंकद्वायोऽ१दाधाऽ२इ ।

अयंयःपुरोविभिनत्ताओऽ१जासाऽ२ ॥ मन्दानाऽ२३ःशीऽ३ ॥ प्राऽ२याऽ२३४औहोवा ॥

धाऽ२३४साः ॥ ( दी० ६ । प० ७ । मा० ६ ) १८( खू । ५१० )

(२९८।१) ॥ तौरश्रवसम् । तुरश्रवा बृहतीन्द्रः ॥

यदिन्द्राऽ२३शासोअव्रताम् ॥ च्यावयास । दाऽ३सास्पारी । वाऽ३२ । अस्माकामौ ।

वाऽ३२ । शुंमघवन् । पुरूस्पृहौ । वाऽ३२ ॥ वसाव्यायौ । वाऽ३२३ ॥ धिवोऽ२३४वा ।

हाऽ५योऽ६हाइ ॥ ( दी० ४ । प० १३ । मा० ४ )१९( दी । ५११ )

---

[ साम-तन्त्र-सूत्राणि ] [५०९]१७ ( पृथक् सूत्राणि न सन्ति ) [५१०]१८ उत्तप्रथमिभ्याम् १.८.२; [५११]१९ स्पृहिणी ६.४.७; अमवति ६.८.४; च्यावे १२.५.१;

श्रुष्टिगुः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ५१ । ७ )

कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥३००॥

मेध्यातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ३ । १७ )

युक्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ ३०१ ॥

वामदेवो गौतमः । बहुः । बृहती । ( न ऋग्वेदीयः )

त्वष्टा नो दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रामणं वचः ॥२९९॥
कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे ।
उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते ॥३००॥
युङ्क्ष्वा हि वृत्रहन्तम हरी इन्द्र परावतः ।
अर्वाचीनो मघवन्त्सोमपीतय उग्र ऋष्वेभिरा गहि ॥ ३०१ ॥

---

(२९९।१) ॥ त्वाष्ट्र्यास्साम । त्वाष्ट्री बृहतीन्द्रो विश्वेदेवाः ॥

त्वष्टाऽ३४ । नोदैवियम् ॥ वचाः । पर्जन्योब्रह्मणस्पाऽ२३तीः । पुत्रैर्भ्रातृभिरदितिर्नुपातूऽ२३नाः॥ दुष्टाराऽ२३०त्रा॥ मणंवाऽ२३चाऽ३४३ः । ओऽ२३४५इ ॥डा॥

( दी० ६ । प० ९ । मा० ६ )२० ( घू । ५१२ )

(३००।१) ॥ अदितेः साम । आदितिर्बृहतीन्द्रः ॥

कदाचनास्ताऽ६रीरसाइ॥ नेन्द्रासाऽ२३४श्चा । साइदाशूऽ२३४षाइ । उपोपेन्नुमघवन्भूयइत् । हाऽ२इनूऽ२३४ताइ॥ दानंदाऽ२३४इवा॥ स्यपोऽ२३४वा । च्याऽ५तोऽ६हाइ ॥

( दी० ६ । प० ८ । मा० ९ )२१ ( गो । ५१३ )

(३०१।१) ॥ आजीगर्तम् । अजीगर्तिर्बृहतीन्द्रः ॥

आइहीऽ२ । आइहिहाइ । युंक्ष्वाहिवाऽ३त्राऽ३हन्तम॥ हारीइन्द्र । परावाऽ१ताऽ२३४ः । अर्वाऽ३४चीनाः । माघवन्त्सो । मपाइताऽ१याऽ२३४इ ॥ उग्राऽ३४ऋष्वाऽ३इ॥ भिरोऽ२३४वा । गाऽ५होऽ६हाइ ॥

( दी० ४ । प० ११ । मा० ११ )२२ ( त । ५१४ )

---

[साम-तन्त्र-सूत्राणि] [५१२]२० ( पृथक् सूत्राणि न सन्ति ) [५१३]२१ दे नीचानाम् ३.५.४; सस्वरयोर नु १.१.३; उदि घोषि(षे) ११.२.१: [५१४]२२ ।र यचेः २.८.४; भः ६.९.४; मधोः ८.८.९;

नृमेध आङ्गिरसः । इन्द्रः । बृहती । ( ऋ० ८ । ९९ । १ )

त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहसामिह श्रुध्युप स्वसरमा गहि ॥३०२॥

वसिष्ठो मैत्रावरुणिः । उषा । बृहती । ( ऋ० ७ । ८१ । १ )

प्रत्यु अदर्श्यायत्युच्छन्ती दुहिता दिवः ।
अपो महि व्ययति चक्षसे तमो ज्योतिष्कृणोति सूनरी ॥३०३॥

त्वामिदा ह्यो नरोऽपीप्यन्वज्रिन्भूर्णयः ।
स इन्द्र स्तोमवाहस इह श्रुध्युप स्वसरमा गहि ॥३०२॥
प्रत्यु अदर्श्यायत्युच्छन्ती दुहिता दिवः ।
अपो मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी ॥३०३॥

(३०२।१) ॥ माधुच्छन्दसम् । मधुच्छन्दा बृहतीन्द्रः ॥

त्वामिदा । होइ । हियोनराऽ६ए॥ अपाइप्यन्वा । ज्राइन्भूर्णोऽ२३४याः ।
सइन्द्रस्तोमवाहसः। इहाश्रुधा । औहोऽ३४वाहाइ॥ उपास्वासा । औहोऽ३४वाहा ॥ ।८-११.५८
रमागाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥डा॥ ( दी० १० । प० १३ । मा० १० )१३( बौ । ५१५)

दश सप्तमः खण्डः ॥ ७ ॥ दशतिः ॥ १ ॥

(३०३।१) ॥ उषसस्साम । उषा बृहतीन्द्रः ॥

प्रताइ । इहा । आइ । इहा । उवद । शिऽ२आयती । आयती॥ उच्छा । इहा । आऽ।
इहा । तीदु । हिऽ३तादिवाऽ२ः । आदिवाऽ२ः ॥ अपो । इहा । ओऽ। इहा ।
माहीवृणुतेच । क्षुपातमाऽ२ः । आतमाऽ२ः॥ ज्योताइ । इहा । आइ । इहा ।
कृणो । तिऽ३सूनरीऽ२ । ओनरीऽ२३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ५ । प० २० । मा० १० )१४ ( मौ । ५१६ )

[ साम-तन्त्र-सूत्राणि ] [५१५] १३ ( पृथक् सूत्राणि न सन्ति ) [५१६]१४ प्रचु ९.३.११;
यरेऽ।रे १२.८.६;
सा०आ० ९।७ ...

वसिष्ठो मैत्रावरुणिः । अश्विनौ । बृहती । ( ऋ० ७।७४।१ )

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशं हि गच्छथः ॥३०४॥

प्रस्कण्वः काण्वः । अश्विनौ । बृहती । ( ऋ० १।४७।१ )

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा ।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे ॥३०६॥

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना ।
अयं वामह्वेऽवसे शचीवसू विशंविशꣳ हि गच्छथः ॥३०४॥

अश्विनी वैवस्वती । अश्विनौ । बृहती । ( न ऋग्वेदीयः )

कुष्ठः को वामश्विना तपानो देवा मर्त्यः ।
घ्नता वामश्नया क्षपमाणोऽꣳशुनेत्थमु आद्वन्यथा ॥३०५॥

अयं वां मधुमत्तमः सुतः सोमो दिविष्टिषु ।
तमश्विना पिबतं तिरो अह्न्यं धत्तꣳ रत्नानि दाशुषे ॥ ३०६ ॥

(३०४।१) ॥ अश्विनोः साम । अश्विनौ बृहतीन्द्रः ( अश्विनौ वा ) ॥

इमाउवांदिविष्टयाऽ२३४ऐही ॥ उस्राहवन्तेअश्विनाऽ२३४ऐही ॥
अयंवामह्वेवसेशचीवसूऽ२३४ऐही ॥ विशंविशꣳहिगच्छाथाऽ२३४ऐही । हौऽ५इ ॥ डा ॥
( दी० १२ । प० ६ । मा० ७ )१५ ( चे । ५१७ )

(३०५।१) ॥ अश्विनोः संयोजनम् । अश्विनौ बृहतीन्द्रः ( अश्विनौ वा ) ॥

कुष्ठःकोवामश्विनाआ ॥ तापानोदे । वामर्तायाऽ३ः । होवाऽ३हाऽ३४इ ।
घ्नताऽ३४वामाऽ१ । श्नायाऽ३ । होवाऽ२हाऽ३४इ । क्षपाऽ३४माणाः ।
आꣳशूनाऽ२ ॥ होवाऽ२हाऽ३४इ॥ इत्थाऽ२३४मुवाऽ२त् ॥ उवाऽ२न् ।
यथाऽ३४औहोवा ॥ ऊऽ२३४पा ॥ ( दी० १० । प० १४ । मा० ९ )१६( ञ्वो । ५१८ )

(३०६।१) ॥ अश्विनोः साम । अश्विनौ बृहतन्द्रिः ( अश्विनौ वा ) ॥

अयाऽ३४म् । अयंवाम ॥ धुमत्ताऽ६माः ॥ सुतःसोमोऽ२दिविष्टिषु । ओऽ३हा ।
ओऽ३हाऽ३४ । ओहा । तामश्विनापिबतंतिरोअह्नियम् । ओऽ३हा । ओऽ३हाऽ३४ ।
ओहा ॥ धताꣳराऽ१त्नाऽ२ । ओऽ३हा । ओऽ३हाऽ३४ । ओहा ॥ निदाऽ२३ ।
शूऽ२षाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥ ( दी० १० । प० १८ । मा० ५ )१७( ञ्वु । ५१९ )

[ साम-तन्त्र-सूत्राणि ][५१७] १५ ( पृथक् सूत्राणि न सन्ति ) [५१८]१६ सावां ३. १०. ६; ४ए (प) प्रथमे" ६.६.६;[क्वचित् पुस्तके "पप्रथमे" इति वर्तते तत्प्रमादादुल्लिखितम्)][५१९]१७ अन्त्ये १.२.२; ओये: ११.६.७;

मेधातिथि-मेध्यातिथी काण्वौ । इन्द्रः । बृहती । ( ऋ० ८ । १ । २० )

मा त्वा सोमस्य गल्दया सदा याचन्नहं गिरा ।
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥३०७॥

देवातिथिः काण्वः । इन्द्रः । बृहती । ( ऋ० ८ । ४ । ११ )

अध्वर्यो द्रावया त्वं सोममिन्द्रः पिपासति ।
उप नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥३०८॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । २४ )

अभी षतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्त्सनादसि भरेभरे च हव्यः ॥३०९॥

आ त्वा सोमस्य गल्दया सदा याचन्नहं ज्या
भूर्णिं मृगं न सवनेषु चुक्रुधं क ईशानं न याचिषत् ॥ ३०७ ॥
अध्वर्यो द्रावया त्व५ सोममिन्द्रः पिपासति ।
उपो नूनं युयुजे वृषणा हरी आ च जगाम वृत्रहा ॥ ३०८ ॥
अभीषतस्तदा भरेन्द्र ज्यायः कनीयसः ।
पुरूवसुर्हि मघवन्बभूविथ भरेभरे च हव्यः ॥ ३०९ ॥

---

(३०७।१) ॥ सोमसाम । सोमो बृहतीन्द्रः (सोमो वा )॥

आत्वासोमा । स्य । गल्दाऽ२याऽ२३४औहोवा । सदऽ२याचन्नहंजियाऽ२३ ।
भूर्णाओऽ२३४वा । मृगन्नसवनेषुचुक्रुधम् ॥ कईशाऽ२३नाम् ॥ नायाचिषत् ।
इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( दी० १० । प० ११ । मा० ७ )२८ ( पे । ५२० )

(३०८।१) ॥ आजमायवम् । अजमायुर्बृहतीन्द्रः ॥

अध्वर्योद्राऽ५वयातुवाम् ॥ सोमामिन्द्राऽ२ः । पिपासाऽ१तीऽ२ । उपोऽ२नूनंयुयुजेवृ ।
षाणाऽ१हारीऽ२ ॥ आचाजाऽ२३गा ॥ मवृत्रहा । औऽ३होवा । होऽ५इ ॥डा॥
( दी० ७ । प० १० । मा० ३ )२९ ( जि । ५२१ )

(३०९।१) ॥ समुद्रप्रैयमेधम् । प्रियमेधा बृहतीन्द्रः ॥

अभीषतस्तदाहाउ ॥ भरा । इन्द्रज्यायःकनीयाऽ२३साः । पुरूवसुर्हिमघवन्बभूवाऽ२३इथा ॥
मराइभाऽ२३रे ॥ चहव्यः । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ६ । प० ९ । मा० ६ )३० ( घू । ५२२ )

---

[ साम-तन्त्र-सूत्राणि ] [५२०]२८[५२१]२९[५२२]३० ( पृथक् सूत्राणि न सन्ति )

वसिष्ठो मैत्रावरुणिः । इन्द्रः । बृहती । ( ऋ० ७ । ३२ । १८ )

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दिधिषेय रदावसो न पापत्वाय रासीय ॥३१०॥

नृमेध आङ्गिरसः । इन्द्रः । बृहती । ( ऋ० ८ । ९९ । ५ )

त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता विश्वतूरसि त्वं तूर्य तरुष्यतः ॥३११॥

यदिन्द्र यावतस्त्वमेतावदहमीशीय ।
स्तोतारमिद्दधिषे रदावसो न पापत्वाय रꣳसिषम् ॥ ३१० ॥
त्वमिन्द्र प्रतूर्तिष्वभि विश्वा असि स्पृधः ।
अशस्तिहा जनिता वृत्रतूरसि त्वं तूर्य तरुष्यतः ॥३११॥

---

(३१०।१) ॥ वैरूपे द्वे । द्वयोरिन्द्रो बृहतीन्द्रः ॥

यादिन्द्राऽ२३यावतस्तुवाम् ॥ एतावदहमीशीया । स्तोताराऽ२३मीत् । दाधिषे ।
रदावाऽ१साऽ२उ ॥ नपापाऽ२३४त्वा ॥ यारोवाओऽ२३४वा । साऽ५इषोऽ६हाई ॥

( दी० ९ । प० ८ । मा० ६ )३१ ( दू । ५२३)

(३१०।२)
यदिन्द्रयावतस्तुवाम् ॥ आइताऽ३ । वादाऽ३हामी । शायाऽ३ऽऽ२ । स्तोतारामीऽ२३त् ।
दधिषेरदा । वासाऽ३ऽऽ२उ ॥ नापापात्वाऽ२३ ॥ यारोवाओऽ२३४वा । साऽ५इषोऽ६हाइ ॥

( दी० ८ । प० १० । मा० ७ ) ३२ ( ने । ५२४ )

(३११।१) ॥ वैश्वदेवम् । विश्वेदेवा बृहतीन्द्रः ॥

त्वमिन्द्रोहाइ । प्रतूर्तिष्वोवा ॥ अभिविश्वाः । असाइस्पाऽ१द्धाऽ२ः । अशास्तिहाजानितावृ ।
त्रातूऽ१रासाऽ२इ ॥ त्वा०तूऽ१र्याऽ२ ॥ तरुष्यता । औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० ४ । प० ११ । मा० ६ )३३ ( तू । ५२५ )

---

[ साम-तन्त्र-सूत्राणि ] [५२३]३१ शीयुक् ७.९.८; चात् ७.९.७; [५२४]३२ तन्त्रमक्षरं सास्वरे नर्चं चतुर्थप्रथमयोः १.७.३; [ ५२५ ]३३ ( पृथक् सूत्राणि न सन्ति )

नोधा गौतमः । इन्द्रः । बृहती । ( ऋ० ८ । ८८ । ५ )

प्र हि रिरिक्ष ओजसा दिवो अन्तेभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमनु स्वधां ववक्षिथ ॥३१२॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । त्रिष्टुप् । ( ऋ० ७ । २१ । १ )

असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा नः स्तोममन्धसो मदेषु ॥३१३॥

प्र यो रिरिक्ष ओजसा दिवः सदोभ्यस्परि ।
न त्वा विव्याच रज इन्द्र पार्थिवमति विश्वं ववक्षिथ ॥३१२॥
असावि देवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेमुवोच ।
बोधामासि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ॥३१३॥

---

(३१२।१) ॥ पूरीषम् । अथर्वा बृहतीन्द्रः ॥

प्रयोरिरिक्षओजसाऽ६ए॥ दिवःसदोऽ२भ्यस्परि । नत्वाविव्या । औहोऽ३वा । चा । रजः । औहोऽ३वाइ । द्रपार्थिवाम्॥ अतिवाऽ२३इश्वाम्॥ वावक्षिथ । इडाऽ२३भाऽ३४३ । ओऽ२३४५ इ ॥डा॥ 2·56 ( दी० ६ । प० १३ । मा० ८ )३४ ( गै । ५२६ )

एकादश अष्टमः खण्डः ॥ ८ ॥ दशतिः ॥२॥ ॥ इति बार्हतमैन्द्रम् ॥

(३१३।१) ॥ प्राकर्षम् । प्रकर्षः, त्रिष्टुबिन्द्रः ॥

असौहोवाऽ३हाइ । वीऽ२३४दे । वांगोऋ । जीकमन्धाः॥ न्यौहोवाऽ३हा । स्मीऽ२३४नी । द्रोजनु । षेमुवोचा॥ बोधौहोवाऽ३हाइ । माऽ२३४सी । त्वाहरि । अश्वयज्ञैः ॥ बोधौहोवाऽ३हाइ । नाऽ२३४स्तो । ममन्ध । सोऽ२४३ । माऽ३दाऽ५इषूऽ६५६ । ( दी० ११ । प० १७ । मा० ७ )३५ ( न्रे । ५२७ )

(३१३।२) ॥ निह्नवः निह्नवम् वा ॥ वसिष्ठस्त्रिष्टुबिन्द्रः ॥

आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाइ । असाविदेवंगोऋजीकऽ३मान्धाऽ३ः । आन्धाः । अन्धा । ओऽ२३४वा । हाइ॥ न्यस्मिन्निन्द्रोजनुषेमुऽ३ वोचाऽ३ । वोचा । वोचा । ओऽ२३४वा । हाइ॥ बोधामसित्वाहर्यश्वऽ३याज्ञैऽ३ः । याज्ञैः । यज्ञा । ओऽ२३४वा । हाइ॥ बोधानस्तोममन्धसोमऽ३दाइषूऽ३ । आइषू । एषुवा । ओऽ२३४वा । हाइ । आइहीऽ३ । आइही । एहिया । ओऽ२३४वा । हाऽ३४ । औहोवा॥ ईऽ२३४५॥ ( दी० १९ । प० ३२ । मा० १६ )३६ ( थू । ५२८ )

॥ इति ग्रामे गेयगानेऽष्टमस्यार्धः प्रपाठकः ॥

---

[साम-ब्राह्म-प्रमाणानि] [५२६]३४ए ७.१०.३; [५२७]३५ छायुक् नतिनः ११ ९.१,[५२८]३६ (पृथक् सूत्राणि न सन्ति)

वसिष्ठो मैत्रावरुणिः । इन्द्रः । त्रिष्टुप् । ( ऋ० ७ । २४ । १ )

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरुहूत प्र याहि ।

असो यथा नोऽविता वृधे च ददो वसूनि ममदश्च सोमैः ॥३१४॥

गातुरात्रेयः । इन्द्रः । त्रिष्टुप् । ( ऋ० ५ । ३२ । १ )

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाँ अरम्णाः ।

महान्तमिन्द्र पर्वतं वि यद्वः सृजो वि धारा अव दानवं हन् ॥३१५॥

योनिष्ट इन्द्र सदने अकारि तमा नृभिः पुरूहूत प्र याहि ।

असो यथा नोऽविता वृधश्चिद्ददो वसूनि ममदश्च सोमैः ॥३१४॥

अदर्दरुत्समसृजो वि खानि त्वमर्णवान्बद्बधानाऽ२अरम्णाः ।

महान्तमिन्द्र पर्वतं वि यद्वः सृजद्धारा अव यद्दानवान्हन् ॥३१५॥

(३१४।१)  ॥ योनिनी द्वे । द्वयोर्गृत्समदः त्रिष्टुबिन्द्रः ॥

योनीः । तआइ । द्राऽ२सद । नाअकारी ॥ तामा । नृभाइः । पुरुहूऽ३ । ताप्रयाही ॥

आसाः । यथा । नोऽ२अवि । तावृधश्चीत् ॥ दादाः । वसू । नीऽ२मम । दाऽ३४३ः ।

चाऽ२सोऽ६माऽ६५६इः ॥  ( दी० । नास्ति । प० १७ । मा० १३ ) १( यि । ५२९ )

(३१४।२)

योनिष्टआइ । द्रसदनाइ । होवा ॥ आकाऽ२ । राइतमानृभीः । होवा । पूऽ । रुहूऽ२ ।

ताप्रयाही । होवा । आसोयथा । नोअविता । होवा ॥ वाद्धोऽ२ः । चाइददोवसू ।

होवा ॥ नाइममदः । चसोमैः । होवा । होऽ५इ ॥ डा ॥

( दी० ६ । प० २१ । मा० १२ )२ ( का । ५३० )

(३१५।१)  ॥ औरुक्षये द्वे । द्वयोरुरुक्षयस्त्रिष्टुबिन्द्रः ॥

अदर्दरूत् ॥ समसृजोविखानि । त्वमर्णाऽ२३४वान् । बद्धधानाऽ२अराम्णाः ।

महान्ताऽ२३४मी । द्रपर्वतंवियाद्वः ॥ सृजाद्धाऽ२३४राः ॥ अवयद्दान । वाऽ२३न्हाऽ३४३न् ।

ओऽ२३४५इ ॥ डा ॥  ( दी० ५ । प० ११ । मा० ८ )३ ( पै । ५३१ )

[साम-तन्त्र-सूत्राणि][५२९]१ तोण् ८.९.६;  [५३०]१ ह२सिवंति ५.५.५; योनिः ७.७.२; ममत् ७.७.४;  [५३१]३ देदि घुम १.४.३; नोचं दचु नौष्ठयादिन्याम् २.३.८; देर्नामि ६.५.५;

पृथुर्वैन्यः । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । १४८ । १ )

सुष्वाणास॑ इन्द्र स्तुमसि॑ त्वा सस॒वांस॑श्च तुविनृम्ण॒ वाज॑म् ।
आ नो॑ भर सुवि॒तं यस्य॑ चा॒कन्त्मना॒ तना॑ सनुयाम॒ त्वोता॑ः ॥३१६॥

सुष्वाणास इन्द्र स्तुमसि त्वा सनिष्यन्तश्चित्तुविनृम्ण वाजम् ।
आ नो भर सुवितं यस्य कोना तना त्मना सह्यामा त्वोताः ॥ ३१६ ॥

(३१५।२)

अदर्दरुत्समसृजाः॥ विखानि । त्वमर्णवान्बद्बधानाँ२अराऽ२३म्णाः ।
महान्तमिन्द्रपर्वतंवियाऽ२३द्वाः॥ सृजाद्धाराऽ२ः॥ अवोऽ२यद्दान । वाऽ२ ।
याऽ२३४औहोवा॥ हाऽ२३४५न् । ( दी० १० । प० ९ । मा० ७ )४( भे । ५३२ )

(३१६।१) पार्थे द्वे । द्वयोः ( पृथी वैन्यः ) पार्थस्त्रिष्टुबिन्द्रः ।

सुष्वाणासाः॥ इन्द्रस्तु । मसित्वा । सनिष्यन्तश्चित्तुविनृ । म्णवाऽ२३४जाम् ।
आनः । भराओऽ२३४वा । सुवितंयस्यको । नाऽ॥ तानात्माना॥ सहिया । माऽ३४३ ।
तूऽ३वोऽ५ताऽ६५६ः ॥ ( दी० ३ । प० १३ । मा० ५ )५( हु । ५३३ )

(३१६।२)

ओऽ३होऽ३होइ । सूऽ२३४ष्वा । णासाः । इन्द्रस्तु । मसित्वा॥ ओऽ३होऽ३होइ ।
साऽ२३४नी । ष्यन्ताः । चीऽ३त्तुवि । नृम्णवाजाम्॥ ओऽ२होऽ३होइ ।
आऽ२३४नाः । भरा । सुवितऽ३म् । यस्यकोना॥ ओऽ३होऽ३होइ ।
ताऽ२३४ना । त्मना । सहिया । माऽ३४३ । तूऽ३वोऽ५ताऽ६५६ः ॥
( दी० २ । प० २१ । मा० १० )६( चौ । ५३४ )

---

[ साम-तन्त्र-सूत्राणि] [५३२]४ [५३४]६ ( पृथक् सूत्राणि न सन्ति ) [५३३]५ र्वे॰ सुष्वायाः ७.१.१०;

सप्तगुराङ्गिरसः । इन्द्रो वैकुण्ठः । त्रिष्टुप् । ( ऋ० १० । ४७ । १ )

जगृभ्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपतिं शूर गोनामस्मभ्यं चित्रं वृषणं रयिं दाः ॥३१७॥

जगृह्मा ते दक्षिणमिन्द्र हस्तं वसूयवो वसुपते वसूनाम् ।
विद्मा हि त्वा गोपति२ शूर गोनामस्मभ्यं चित्रं वृषण२ रयिं दाः ॥३१७॥

(३१७।१) ॥ सौपर्णे द्वे । द्वयोः सुपर्णस्त्रिष्टुबिन्द्रः ॥

जगृह्मातेदक्षिणमोहाओहाऽ६ए॥ इन्द्रहाऽ२३स्ताम् । वसूयवो । वसुपाऽ३ । ताइवसू ।
नाम् । ओऽ३ । हा । ओऽ३ । हाऽ३ए॥ विद्माहित्वा । गोपतीऽ३म् । शूरगो ।
नाम् । ओऽ३ । हा । ओऽ३ । हाऽ३ए॥ अस्मभ्यंचाइ । त्राऽ३०वृष । ण२रयिम् ।
दाः । ओऽ३ । हा । ओऽ३ । हाऽ३ए । रयाइन्दाऽ३रउवाऽ३ । ऊऽ३४पा ।
औहोऔहोवाऽ२३४५हाउ । वा॥ ईऽ२३४५॥ ( दी० । ११ । प० ३१ । मा० १७)७( के ।.५३५ )

(३१७।२)

जगृह्मातेदक्षिणम् । औहोहोवाहाइ॥ इन्द्राहाऽ२३४स्ताम् । वसूयवो । वसुपाऽ२ ।
ताइवसू । नौ । वाओऽ२३४वा । हाऽ३हाइ॥ विद्माहित्वा । गोपतीऽ३म् । शूरगो ।
नौ । वाओऽ२३४वा । हाऽ३हाइ । अस्मभ्यंचाइ । त्राऽ३०वृष । ण२रयिम् । दौ ।
वाओऽ२३४वा । हाऽ३हाऽ३४ । औहोवा॥ ईऽ२३४५ ॥

( दी० ६ । प० २३ । मा० १२ ) ८( द्रा । ५३६ )

(३१७।३) वात्सप्राणि त्रीणि । त्रयाणां वत्सप्रिस्त्रिष्टुबिन्द्रः । तृतीयं वात्सप्रम् ॥

होईऽ२ । होईऽ२ । होईऽ२ । जगृह्मातेदक्षिणम् । इन्द्रहास्ताऽ२म् । हास्ताऽ२म् । हास्ताऽ२म् ॥
वसूयवोऽ२वसुप । तेवसूनाऽ२म् । सूनाऽ२म्॥ सूनाऽ२म् । विद्माहित्वागोपतिम् ।
शूरगोनाऽ२म् । गोनाऽ२म्। गोनाऽ२म्। अस्मभ्यंचित्रंवृष । ण२रयाइन्दाऽ२ः । आइन्दाऽ२ः ।
आइन्दाऽ२ः । होईऽ२ । होईऽ२ । होयाऽ२ । वाऽ२३४औहोवा॥ ई२३४५ ॥

( दी० ११ । प० २४ । मा० २३ )९( घि । ५३७ )

[ साम-तन्त्र-सूत्राणि][५३५]७[५३६]८[५३७]९ ( पृथक् सूत्राणि न सन्ति )

वसिष्ठो मैत्रावरुणिः । इन्द्रः । त्रिष्टुप् । ( ऋ० ७ । २७ । १ )

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता शवसश्चकान आ गोमति व्रजे भजा त्वं नः ॥३१८॥

इन्द्रं नरो नेमधिता हवन्ते यत्पार्या युनजते धियस्ताः ।
शूरो नृषाता श्रवसश्च कामं आ गोमति व्रजे भजा त्वं नः ॥ ३१८ ॥

(३१७।४)
आओहोइ । आओहोइ । आओहोऽ६वा । औऽ३होइ । औऽ३होइ । औऽ२३होवा ।
जगृह्माताइ । दक्षिणाऽ३म् । इन्द्रहस्तम् । द्रहस्तम् । द्रहस्ताम् ॥ वसूयवो । वसूपाऽ३ ।
ताइवसूनाम् । वसूनाम् । वसूनाम् ॥ विद्माहित्वा । गोपतीऽ३म् । शूरगोनाम् । रगोनाम् ।
रगोनाम् ॥ अस्मभ्यंचाइ । त्राऽ३०वृष । णऽ२रयिन्दाः । रयिन्दाः । रयिन्दाः । आओहोइ ।
आओहोइ । आओहोऽ६वा । औऽ३होइ । औऽ३होइ । औऽ२३होवाऽ३४ । औहोवा ।
ईऽ२३४५ ॥ ( दी० १४ । प० ३४ । मा० ३१ )१०( घ्र । ५३८ )

(३१७।५) ॥ महावात्सप्रोत्तरम् ॥
हाउऽ(३)। ओ । होहोवा । ( द्वेत्रिः)। जगृह्माताइ । दक्षिणाऽ३म् । इन्द्रहस्तम् ।
द्रहस्तम् । द्रहस्ताम् ॥ वसूयवो । वसूपाऽ३ । ताइवसूनाम् । वसूनाम् । वसूनाम् ॥
विद्माहित्वा । गोपतीऽ३म् । शूरगोनाम् । रगोनाम् । रगोनाम् ॥ अस्मभ्यंचाइ ।
त्राऽ३०वृष । णऽ२रयिन्दाः । रयिन्दाः । रयिन्दाः । हाउऽ(३)। ओऽ । होहोवा । ओऽ। होहोवा।
ओऽ । हो । होऽ२ । वाऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥
( दी० १२ । प० ३८ । मा० २३ )११( त्रि । ५३९ )

(३१८।१) ॥ गौरीवितम् । गौरीवितस्त्रिष्टुबिन्द्रः ॥
इन्द्रन्नाऽ२३४रो । नेमाधाऽ२३४इता । हवन्ताऽ२३इ ॥ यत्पाराऽ२३४या: ।
यूनाजाऽ२३४ताइ । धियास्ताऽ२३ः ॥ शूरोनाऽ२३४षा । ताश्रावाऽ२३४साः ।
चकामाऽ२३इ ॥ आगोमाऽ२३४ती । व्रजाइभाऽ२३४जा । त्वन्नाऽ३२उवाऽ३ ।
एऽ३ । उपाऽ२३४५ ॥ ( दी० नास्ति । प० १४ । मा० ९ )१२ ( लो । ५४० )

[ साम-तन्त्र-सूत्राणि][५३८]१० ( पृथक् सूत्राणि न सन्ति ) [५३९]११ वरे दिप् ११.६.२;
[५४०]१२ ह ब.८.५; बृहायाः ६.१०.४; वारायाः प्ट्राभि १०.१०.४;

गौरिवीतिः शाक्त्यः । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । ७३ । ११ )

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥ ३१९ ॥

वेनो भार्गवः । वेनः । त्रिष्टुप् । ( १० । १२३ । ६ )

नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥३२०॥

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥३१९॥
नाके सुपर्णमुप यत्पतन्त२ हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ३२० ॥

---

( ३१९।१ )　　॥ वैदन्वतम् । विदन्वाँस्त्रिष्टुबिन्द्रः (सूर्यो वा) ॥

वयोहाहाउ॥ सुपर्णाउपसेदुराइन्द्रम् । प्रियमेधाऋषयोनाधमाऽ२३नाः । अपत्ध्वान्तमूर्णुहिपूर्धिचाऽ२३क्षूः॥ मुमुग्धि । औऽ३होऽ३इ॥ आऽ२१ । स्माऽ३न्निध । येऽ३४३ । वाऽ३वाऽ५द्धाऽ६५६न् ॥　　( दी० १० । प० १० । मा० ९ )१३ ( मो । ५४१ )

(३२०।१)　　॥ यामम् । यमस्त्रिष्टुबिन्द्रः (यमो वा) ॥

आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । नाकेसुपार्णमुपयात्पतन्ताम् । पतन्तम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२॥ आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । हृदावेनांतोअभ्यचाक्षतत्वा । क्षतत्वौऽ३ । होऽ३इ । आऽ२इ । ऊऽ२॥ आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । हिरण्यपाक्षंवरुणास्यदूताम् । स्यदूतम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२॥ आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । यमस्ययोनौशकुनांभुरण्यूम् । भुरण्युम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । आऽ२याम् । अयायम् । औऽ३होऽ३इ । आऽ२इ । ऊऽ२ । वाहाऽ३१उवाऽ२३ ॥ एऽ३ । दिवम् । एऽ३ । दिवम् । एऽ३ । दिवाऽ२३४५म् ।

( दी० १४ । प० ५२ । मा० ३९ )१४ ( थो । ५४२ )

---

सुहोत्रो भारद्वाजः । इन्द्रः । त्रिष्टुप् । ( ऋ० ६ । ३२ । १ )

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचांस्यासा स्थविराय तक्षम् ॥३२२॥

वसिष्ठो मैत्रावरुणिः, बृहस्पतिर्नकुलो वा । इन्द्रः । त्रिष्टुप । ( न ऋग्वेदीयः )

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥३२१॥
अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचाऽस्यस्मै स्थविराय तक्षुः ॥३२२॥

---

(३२१।१) ॥ ऋतुसामनी द्वे । ऋतुस्त्रिष्टुबिन्द्रः ( बृहस्पतिर्वा ) ॥

ब्रह्मा । ब्राऽ२३ह्मा । जज्ञानंप्रथमंपुरास्तात् ॥ विसाइ । वाऽ२३इसी ।
मतःसुरुचोवेनआवः ॥ सबू । साऽ२३बू । ध्नियाउपमाअस्यवाइष्ठाः ॥ सताः । साऽ२३ताः ।
चयोनिमसतश्चवाइवाऽ२३४३ः । ओऽ२३४५इ ॥ डा ॥

( दी० ६ । प० १४ । मा० १४ )१५ ( घी । ५४३ )

(३२१।२)

हुवेऽ३हाऽ३ई । हुवेऽ३हाऽ३इ । हिषाऽ३या । ब्रह्मजज्ञा । नाऽ३०प्रथ । मंपुरस्तात् ॥ विसीमताः ।
सुरुचः । वेनआवाः ॥ सबुध्नियाः । उपमाः । अस्यविष्ठाः ॥ सतश्चयो । नीऽ३मस ।
तश्चविवाः । हुवेऽ३हाऽ३इ । हुवेऽ३हाऽ३ई । हि । षाऽ२ः । आऽ२३४ । ओहोवा ॥ एऽ३ ।
ऋतममृतम् । एऽ३ । ऋतममृतम् । एऽ३ । ऋतममृताऽ२३४५म् ॥

( दी० ४ । प० २७ । मा० १७ ) १६ ( धे । ५४४ )

(३२२।१) ॥ वारवन्तीयम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

अपूर्व्याओहोहोहाइ ॥ पुरुत । मानियस्मै । महेवीरा । याऽ३तव । साइतुराया । विरप्शि ।
नाइवज्रिणे । शाऽ२३४३०तमानि ॥ वचाऽस्सिया । स्माऽ३इस्थवि । रायतक्षूः ॥
स्थविरायतक्षुः । स्थवि । राऽ२३४३ । याऽ३ताऽ५क्षूऽ६५६ः ॥ स्थविरायतक्षूऽ२३४५ः ॥

( दी० १० । प० १७ । मा० ९ )१७( फो । ५४५ )

॥ एकोनविंशति प्रथमः, नवमः खण्डः ॥ ९ ॥ दशतिः ॥ ३ ॥

---

[ साम-तन्त्र-सूत्राणि ] [५४३]१५ उरे ४.३.९; वेनस्य ६.७४; [५४४]१६ वि ५.६ १;
[५४५]१७ ऋता १.२.८; ओइन्नि ४.३ ५; णे ग्रु ७.८.५; नव्यो ठघरयोः १० २ १;

गौरिवीतिः शाक्त्यः । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । ७३ । ११ )

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥ ३१९ ॥

वेनो भार्गवः । वेनः । त्रिष्टुप् । ( १० । १२३ । ६ )

नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥३२०॥

वयः सुपर्णा उप सेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ।
अप ध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्य१स्मान्निधयेव बद्धान् ॥३१९॥
नाके सुपर्णमुप यत्पतन्तं हृदा वेनन्तो अभ्यचक्षत त्वा ।
हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम् ॥ ३२० ॥

---

( ३१९।१ ) ॥ वैदन्वतम् । विदन्वाँस्त्रिष्टुबिन्द्रः (सूर्यो वा) ॥

वयोहाहाउ ॥ सुपर्णाउपसेदुराइन्द्रम् । प्रियमेधाऋषयोनाधमा ऽ२३नाः ।
अपध्वान्तमूर्णुहिपूर्धिचा ऽ२३क्षूः ॥ मुमुग्धि । औ ऽ३हो ऽ३इ ॥ आ ऽ२१ । स्मा ऽ३न्निध ।
ये ऽ३४३ । वा ऽ२वा ऽ५द्धा ऽ६५६न् ॥ (दी० १० । प० १० । मा० ९ )१३ ( मो । ५४१ )

(३२०।१) ॥ यामम् । यमस्त्रिष्टुबिन्द्रः (यमो वा) ॥

आ ऽ२याम् । अयायम् । औ ऽ३हो ऽ३इ । आ ऽ२इ । ऊ ऽ२ । नाकेसुपार्णमुपयात्पतन्ताम् ।
पतन्तम् । औ ऽ३हो ऽ३इ । आ ऽ२इ । ऊ ऽ२ ॥ आ ऽ२याम् । अयायम् । औ ऽ३हो ऽ३इ ।
आ ऽ२इ । ऊ ऽ२ । हृदावेनांतोअभ्यचाक्षतत्त्वा । क्षतत्वौ ऽ३ । हो ऽ३इ । आ ऽ२इ । ऊ ऽ२ ॥
आ ऽ२याम् । अयायम् । औ ऽ३हो ऽ३इ । आ ऽ२इ । ऊ ऽ२ । हिरण्यपाक्षंवरुणास्यदूताम् ।
स्यदूतम् । औ ऽ३हो ऽ३इ । आ ऽ२इ । ऊ ऽ२ ॥ आ ऽ२याम् । अयायम् । औ ऽ३हो ऽ३इ ।
आ ऽ२इ । ऊ ऽ२ । यमस्ययोनौशकुनांभुरण्यूम् । भुरण्युम् । औ ऽ३हो ऽ३इ । आ ऽ२इ ।
ऊ ऽ२ । आ ऽ२याम् । अयायम् । औ ऽ३हो ऽ३इ । आ ऽ२इ । ऊ ऽ२ । वाहा ऽ३१उवा ऽ२३ ॥
ए ऽ३ । दिवम् । ए ऽ३ । दिवम् । ए ऽ३ । दिवा ऽ२३४५म् ।

( दी० १४ । प० ५२ । मा० ३९ )१४ ( थो । ५४२ )

---

[ साम-तन्त्र-सूत्राणि ] [५४१]१३ ताण्डम् १.११.४; [५४२]१४ नाके ७.१०.५; चतुर्थम् ७.१०.६;

सुहोत्रो भारद्वाजः । इन्द्रः । त्रिष्टुप् । ( ऋ० ६ । ३२ । १ )

अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचांस्यासा स्थविराय तक्षम् ॥३२२॥

वसिष्ठो मैत्रावरुणिः, बृहस्पतिर्नकुलो वा । इन्द्रः । त्रिष्टुप् । ( न ऋग्वेदीयः )

ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥३२१॥
अपूर्व्या पुरुतमान्यस्मै महे वीराय तवसे तुराय ।
विरप्शिने वज्रिणे शन्तमानि वचाँ३स्यस्मै स्थविराय तक्षुः ॥३२२॥

---

(३२१।१)　॥ ऋतुसामनी द्वे । ऋतुस्त्रिष्टुबिन्द्रः ( बृहस्पतिर्वा ) ॥

ब्रह्मा । ब्राऽ२३ह्मा । जज्ञानंप्रथमंपुरास्तात् ॥ विसाइ । वाऽ२३इसी । मतःसुरुचोवेनआवः ॥ सबू । बाऽ२३बू । भ्रियाउपमाअस्यत्राइष्ठाः ॥ सताः । साऽ२३ताः । च्योनिमसतश्चवाइवाऽ३४३: । ओऽ२३४५इ ॥ डा ॥

( दी० ६ । प० १४ । मा० १४ )१५ ( घी । ५४३ )

(३२१।२)

हुवेऽ३हाऽ३इ । हुवेऽ३हाऽ३इ । हिषाऽ३या । ब्रह्मजज्ञा । नाऽ३०प्रथ । मंपुरस्तात् ॥ विसीमताः । सुरुचः । वेनआवाः ॥ सबुध्नियाः । उपमाः । अस्यविष्ठाः ॥ सतश्चयो । नीऽ३मस । तश्चविवाः । हुवेऽ३हाऽ३इ । हुवेऽ३हाऽ३इ । हि । षाऽ२: । आऽ२३४ । औहोवा ॥ एऽ३ । ऋतममृतम् । एऽ३ । ऋतममृतम् । एऽ३ । ऋतममृताऽ२३४५म् ॥

( दी० ८ । प० २७ । मा० १७ ) १६ ( भे । ५४४ )

(३२२।१)　॥ वारवन्तीयम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

अपूर्व्याऔहोहोहाइ ॥ पुरुत । मानियस्मै । महवीरा । याऽ३तव । साइतुराया । विरप्शि । नाइवज्रिणे । शाऽ२३४३०तमानि ॥ वचाँ३सिया । स्माऽ३इस्थवि । रायतक्षुः ॥ स्थविरायतक्षुः । स्थवि । राऽ२३४३ । याऽ३ताऽ५क्षूऽ६५६: ॥ स्थविरायतक्षूऽ२३४५: ॥

( दी० १० । प० १७ । मा० ९ )१७ ( फो । ५४५ )

॥ एकोनविंशति प्रथमः, नवमः खण्डः ॥ ९ ॥ दशतिः ॥ ३ ॥

---

[ साम-तन्त्र-सूत्राणि ] [५४३]१५ उत्त ४.३.९; वेनस्य ६.७.४; [५४४]१६ वि ५.६.१; [५४५]१७ ऊता १.२.८; ओइत्रि ४.३.५; णे शु ७.८.५; नत्यो ठगरयोः १०.२.१;

तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः । इन्द्रः । त्रिष्टुप् । ( ऋ० ८ । ९६ । १३ )

अव द्रप्सो अंशुमतीमतिष्ठदियानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्तमप स्नेहितीर्नृमणा अधत्त ॥३२३॥

अव द्रप्सो अ२शुमतीमतिष्ठदीयानः कृष्णो दशभिः सहस्रैः ।
आवत्तमिन्द्रः शच्या धमन्तमपस्नीहितिं नृमणा अधद्राः ॥३२३॥

---

(३२३।१) ॥ क्षुरपविणी द्वे । इन्द्रस्त्रिष्टुबिन्द्रः ( इन्द्राबृहस्पती वा ) ॥

अवद्राऽ२३४प्साः॥ आ२शूमाऽ२३४तीम् । आतीऽ३ । ष्ठाऽ२३४५त्॥ ईयानाऽ२३४ःकृ । ष्णोदाशाऽ२३४भीः । साहाऽ३ । स्राऽ२३४५इः॥ आवत्ताऽ२३४मीं । द्राःशाचीऽ२३४या । धामाऽ३ । ताऽ२३४२म्॥ आपस्नीऽ२३४हीं । तिंनृमाऽ२३४णाः । अधाऽ२द्राऽ२३४औहोवा॥ अधाऽ३द्राऽ२३४५ः ॥ ( दी० २ । प० १६ । मा० १० ) १८ ( चौ । ५४६ )

(३२३।२)

अवद्रप्साऽ६ए॥ आ२शुमतीमतिष्ठाऽ२३त् । ईयानःकृष्णाः । दाशभिःसहस्राऽ२३इः॥ आवत्तमिन्द्राः । शाचियाधमन्ताऽ२३म्॥ अपास्नीहितीम् । नृमणाऽ२३ः । अधाऽ५द्राः । होऽ५इ ॥डा॥ ( दी० ५ । प० ११ । मा० ११ )१९ ( प । ५४७)

(३२३।३) ॥ स्यैमरश्मे द्वे । स्युमरश्मिस्त्रिष्टुबिन्द्रः ॥

अवद्रप्सोअ२शुमतीम् । औऽ३होऽ३४इ । औहोवा॥ आतीऽ३ष्ठात् । औऽ३होऽ३४इ । औहोवा । ईयानःकृष्णाः । औऽ३होऽ३४इ । औहोवा । दाश । भाइःसहस्रैः । औऽ३होऽ३४इ । औहोवा॥ आवत्तमिन्द्राः । औऽ३होऽ३४इ । औहोवा । शाऽचि । याधमन्ताम् । औऽ३होऽ३४इ । औहोवा॥ अपास्नीहितीम् । औऽ३होऽ३४इ । औहोवा । नृमाऽ२णाऽ२३४औहोवा॥ अधाऽ३द्राऽ२३४५ः ॥

( दी० २१ । प० २५ । मा० १८ )२० ( ङे । ५४८ )

(३२३।४)

अवद्रप्सोअ२शुमतीम् । एऽ३ । औऽ३होऽ५वाऽ॥ आताऽ२३४५इष्ठाऽ६५६त् । ईयानः कृष्णोदशभिस्सहस्रैः॥ आवत्तम् । आऽ३इ । द्राऽ३ःशचि । याधमंताम् ॥ अपस्नीहितिंनृमणाः । ओवा॥ अधद्राऽ३आऽ२३४५ ॥(दी० ९ । प० १२ । मा० १०)२१(थौ । ५४९)

---

[ साम-तन्त्र-सूत्राणि ] [५४६]१८ नह्य ११.१.३; [५४७]१९ [५४८]२० ( पृथक् सूत्राणि न सन्ति )
[५४९]२१ उच्चात् द्रामे३.८.१०; नौ ५.९.४;

तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः । इन्द्रः । त्रिष्टुप ( ऋ० ८ । ९६ । ७ )

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ३२४ ॥

बृहदुक्थो वामदेव्यः । इन्द्रः । त्रिष्टुप । ( ऋ० १० । ५५ । ५ )

विधुं दद्राणं समने बहूनां युवानं सन्तं पलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ॥ ३२५ ॥

वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः ।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि ॥ ३२४ ॥
विधुं दद्राणꣳ समने बहूनां युवानꣳ सन्तंपलितो जगार ।
देवस्य पश्य काव्यं महित्वाद्या ममार स ह्यः समान ।।३२५।।

(३२४।१) द्यौताने, धृषतो मारुतस्य सामनी वा द्वे । द्युतानास्त्रिष्टुबिन्द्रः ॥
हाऽ३ । ओऽ३हाऽ३ । ओऽ३हाऽ३ । हाइ । वृत्रस्यत्वा । श्वसथात् । ईषमाणाः ॥
विश्वेदेवाः । अजहूऽ३ः । येसखायाः॥ मरुद्भिराइ । द्राऽ३सखि । यन्तेअस्तू॥
अथेमावाइ । श्वाऽ३ःपृत । नाजयासी । हाऽ३ । ओऽ३हाऽ३ । ओऽ३हाऽ३ । हाऽ३४ ।
औहोवा॥ आओऽ२होऽ२३४५ ॥
( दी० ८ । प० २२ । मा० १० )२२( ठौ । ५५० )

(३२४।२ )
होयेऽ३ । हयायेऽ३ । हया । औहोऽ२३४वा । हाऽइ । वृत्रस्यत्वा । श्वसथात् ।
ईषमाणाः॥ विश्वेदेवाः । अजहूऽ३ः । येसखायाः॥ मरुद्भिराइ । द्राऽ३सखि ।
यन्तेअस्तू॥ अथेमावाइ । श्वाऽ३ः पृत । नाजयासी । होयेऽ३ । हयायेऽ३ । हया ।
औहोऽ२३४वा । हाऽ३४ । औहोवा॥ आओऽ३हो । आओऽ३होऽ२३४५ ॥
( दी० १० । प० २५ । मा० ११ )२३( म । ५५१ )

(३२५।१) ॥ सोमसामनी द्वे । द्वयोः सोमस्त्रिष्टुबिन्द्रः ( सूर्यो वा )॥
वीधूम् । दद्रादद्रा । णाऽ३ꣳसम । नाइबहूनाम्॥ यूवा । नꣳसानꣳसा ।
ताऽ३०पलि । तोजगारा॥ देवा । स्यपास्यपा । श्याऽ३काव्यि । यंमहित्वा ॥
आद्या । ममाममा । राऽ३सहि । याऽ३४३ः । साऽ३माऽ५नाऽ६५६ ॥
( दी० १ । प० १७ । मा० ४ )२४ ( खी । ५५२ )

[साम-तन्त्र-सूत्राणि] [५५०]२२ द्यादौहायाः ३ १०.१०; [५५१]२३ [५५२]२४ ( पृथक् सूत्राणि न सन्ति )

तिरश्चीराङ्गिरसो, द्युतानो वा मारुतः । इन्द्रः । त्रिष्टुप् । ( ऋ० ८ । ९६ । १६ )

त्वं ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूळ्हे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः ॥ ३२६ ॥

त्वꣳ ह त्यत्सप्तभ्यो जायमानोऽशत्रुभ्यो अभवः शत्रुरिन्द्र ।
गूढे द्यावापृथिवी अन्वविन्दो विभुमद्भ्यो भुवनेभ्यो रणं धाः॥३२६॥

---

(३२५।२)

हꣳऽ४ । आऽ४५ । हꣳ । हꣳऽ२३४५ । विधुंदद्रा । णाऽ२सम । नाइबहूनाम् ॥
युवानꣳसा । ताऽ३०पलि । तोजगारा॥ देवस्यपा । श्याऽ३कावि । यमहित्वा ॥
हꣳऽ४ । आऽ४५ । हꣳ । हꣳऽ२३४५ । अद्याममा । राऽ३सहि । याऽ३४३ः ।
साऽ३माऽ५नाऽ६५६ ॥ ( दी० ४ । प० २१ । मा० ३ )२५ ( ति । ५५३ )

(३२६।१) ॥ इन्द्रवज्रे द्वे । इन्द्रस्त्रिष्टुबिन्द्रः ॥

औहोइतुवाम् । हत्यत्सप्तभ्योजायमानाऽ२३४ः॥ औहोअशा । त्रुभ्योअभवःशत्रुरिन्द्राऽ२३४ ॥
औहोइगूढे । द्यावापृथिवीअन्वविन्दाऽ२३४ः॥ औहोइविभू । मद्भ्योभुवनेभ्योरणंधाऽ२३४५ः॥
( दी० ११ । प० ८ । मा० १० )२६ ( दौ । ५५४)

(३२६।२)

त्वोहाइ । हत्योवाओऽ२३४वा । सप्तभ्योजायमा । नोवाऽ३ । ओवाऽ२३४५ ॥
अशोहाइ । त्रुभ्योवाओऽ२३४वा । अभवःशत्रुरि । द्रोवाऽ३ । ओवाऽ२३४५॥ गूढोहाइ ।
द्यौवाओऽ२३४वा । पृथिवीअन्ववि । दोवाऽ३ । ओवाऽ२३४५ ॥ विभोहाइ ।
मद्भ्योवाओऽ२३४वा । भुवने । भ्योवाऽ३ । ओवाऽ२३४५ । रणा५०धाः । होऽ५इ ॥डा॥

( दी० ६ । प० २३ । मा० ११ )२७( गा । ५५५ )

---

[साम-तन्त्र-सूत्राणि ][५५३]२५ तृतीयो हि ४.९.१; [५५४]२६ विपरीत स्वराणाम् १.२.४; विनोभि २.२ ५, इयुक् ९ ६.१; [५५५]२७ जारागुम् १.६.३; रणंधिनि ३.१.४; हायां चतुर्थः ५.१.४; मान्द्रस्वान् ९.२.१०;

वसिष्ठो मैत्रावरुणिः । इन्द्रः । त्रिष्टुप ( विराट् ) ( ऋ० ७ । ३१ । १० )

प्र वो महे महिवृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चरा चर्षणिप्राः ॥ ३२८ ॥

वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् । ( न ऋग्वेदीय. )

मेडिं न त्वा वज्रिणं भृष्टिमन्तं पुरुधस्मानं वृषभꣳ स्थिरप्स्नुम् ।
करोष्यर्यस्तरुषीर्दुवस्युरिन्द्र द्युक्षं वृत्रहणं गृणीषे ॥३२७॥
प्र वो महे महे वृधे भरध्वं प्रचेतसे प्र सुमतिं कृणुध्वम् ।
विशः पूर्वीः प्र चर चर्षणिप्राः ॥ ३२८ ॥

---

(३२७।१) ॥ ऋषिप्रमाणपदगणिते अर्द्धेयः । सूर्यवर्चसो भृष्टिमतः सामनी द्वे । भृष्टिमांस्त्रिष्टुबिन्द्रः ॥
मेडीम् ॥ नत्वावज्रिणंभृष्टिमाऽ२३०ताम् । पुरुधस्मानंवृषभꣳस्थिराऽ२३प्स्नूम् ।
करोष्यर्यस्तरुषाइर्दुवाऽ२३स्यूः ॥ आइन्द्रद्युक्षम् ॥ वृत्राऽ२३ । हाऽ२णाऽ२३४औहोवा ॥
गृणीऽ३षेऽ२३४५ ॥ ( दी० ५ । प० ८ । मा० ८ )२८ ( बै । ५५६ )

(३२७।२)
मेडिन्नत्वा ॥ वाऽ३४औहो । ज्राइ । णंभाष्टाइमौ । वाऽ३२३४ । ताम् । पुराऽ३४औहो ।
धस्मानंवृ । षभꣳस्थाइरौ । वाऽ३२३४ । प्स्नूम् ॥ कराऽ३४औहो । षिअर्यस्त ।
रुषाइर्दुवौ । वाऽ३२३४ ॥ स्यूः । इंद्राऽ३४औहो । द्युक्षम् । वृत्राऽ२३ । हाऽ२णाऽ२३४औहोवा ॥
गृणीषेऽ२३४५ ॥ ( दी० ५ । प० २१ । मा० १४ )२९ ( पी । ५५७ )

(३२८।१) ॥ अंकुशौ द्वौ (वसिष्ठौ) । वसिष्ठस्त्रिष्टुबिन्द्रः ॥
प्रवाः ॥ माहेमहेवृधे । भराधूऽ३वाम् । प्रचाइतसाइ । प्रासुमाऽ२३४तीम् ॥ कृणुध्वम् ।
इहाऽ२वाऽ२३४इशाः ॥ पूऽ२३र्वीः । प्रचा । राऽ२३चा । षणाइ । प्रा । औऽ३होवा ।
होऽ५इ ॥डा॥ ( दी० ३ । प० १५ । मा० ११ ) ३०( ण । ५५८ )

(३२८।२)
हुꣳऽ२३४५ । प्रवोमहाइमाऽ२३४हे । वृधाऽ३४३इ । भराऽ२३४त्ध्वाम् ॥ हुꣳ२३४५ ।
प्रचेतासाइप्राऽ२३४सु । मताऽ३४३इम् । कृणूऽ२३४त्ध्वाम् ॥ हुꣳऽ२३४५ ।
विशःपूर्वाइःप्राऽ२३४चा । रचाऽ३४३ । षणाऽ२३४इप्राः ॥ हुꣳऽ२३४५ । हाउहौहोवाऽ६ ।
हाउवा ॥ ईऽ२३४५ ॥ ( दी० ५ । प० १६ । मा० १२ )३१( प्रा । ५५९ )

---

[ साम-तन्त्र-सूत्राणि] [५५६]२८ [५५९]३१ ( पृथक् सूत्राणि न सन्ति ) [५५७]२९ वृषन्तां त्र ३.३.७
[५५८]३० प्स्यचु ७.३.९;

विश्वामित्रो गाथिनः । इन्द्रः । त्रिष्टुप् । ( ऋ० ३ । ३० । २२ )

शुनं हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानाम् ॥ ३२९ ॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । त्रिष्टुप् । ( ऋ० ७ । २३ । १ )

उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
आ यो विश्वानि शवसा ततानोपश्रोता म ईवतो वचांसि ॥३३०॥

गौरिवीतिः शाक्त्यः । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । ७३ । ९ )

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥ ३३१ ॥

शुनꣳ हुवेम मघवानमिन्द्रमस्मिन्भरे नृतमं वाजसातौ ।
शृण्वन्तमुग्रमूतये समत्सु घ्नन्तं वृत्राणि संजितं धनानि ॥३२९॥

उदु ब्रह्माण्यैरत श्रवस्येन्द्रꣳ समर्ये महया वसिष्ठ ।
आ यो विश्वानि श्रवसा ततानोपश्रोता म ईवतो वचाꣳसि ॥३३०॥

चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चच्छद्यात् ।
पृथिव्यामतिषितं यदूधः पयो गोष्वदधा ओषधीषु ॥३३१॥

---

(३२९।१) ॥ भारद्वाजम् । भरद्वाजस्त्रिष्टुबिन्द्रः ॥

शुनꣳहुवेममघवानमिन्द्राम् ॥ अस्मिन्भरेनृतमंवाजसाऽ२३ताउ । शृण्वन्तमुग्रमूतयेसमाऽ२३त्सू ॥ घ्न । तंवाऽ२३त्राँऽ३ । होवाऽ३हा ॥ णिसंजितम् । धनाऽ२३नीऽ३ । होवाऽ३हाऽ२३४३इ । ओऽ२३४५इ ॥डा॥

( दी० ६ । प० ११ । मा० ५ )३२( क्रु । ५६० )

(३३०।१) ॥ वैश्वदेवम् । विश्वेदेवास्त्रिष्टुबिन्द्रः ॥

दिवया । ओवा । औऽ३होऽ३वा । उदुब्रह्मा । णीऽ२एर । तश्रवस्या ॥ इन्द्रꣳसमा । र्येऽ३मह । यावसिष्ठा ॥ आयोविश्वा । नीऽ२श्रव । साततानो ॥ दिवया । ओवा । औऽ३होऽ३वा । उपश्रोता । मईव । तोऽ३४२ । वाऽ३चाऽ५ꣳसाऽ६५६इ ॥

( दी० ७ । प० १९ । मा० ३ )३३ ( श्चि । ५६१ )

(३३१।१) ॥ पुरीषम् । अथर्वा त्रिष्टुबिन्द्रः ॥

चक्रंयदस्याप्सुवानिषत्ताम् ॥ उतोतदस्मैमध्विच्चछाऽ२३द्यात् । पृथिव्यामतिषितंयदूऽ२३धाः ॥ पयोगोऽ२३ष्वू । आदधाओषधीषु । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥डा॥

( दी० ९ । प० ८ । मा० ५ )३४( दु । ५६२ )

सप्तदश द्वितीयः, दशमः खण्डः ॥ १० ॥ दशतिः ॥ ४ ॥
इति ग्रामे गेय-गानेऽष्टमः प्रपाठकः ॥ ८ ॥

---

[साम-तन्त्र-सूत्राणि ] [५६०]३२ [५६१]३३ [५६२]३४ (पृथक् सूत्राणि न सन्ति )

अरिष्टनेमिस्तार्क्ष्यः । तार्क्ष्यः । त्रिष्टुप् । ( ऋ० १० । १७८ । १ )

त्यमू षु वाजिनं देवजूतं सहावानं तरुतारं रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुं स्वस्तये तार्क्ष्यमिहा हुवेम ॥ ३३२ ॥

गर्गो भारद्वाजः । इन्द्रः । त्रिष्टुप् । ( ऋ० ६ । ४७ । ११ )

त्रातारमिन्द्रमवितारमिन्द्रं हवेहवे सुहवं शूरमिन्द्रम् ।
ह्वयामि शक्रं पुरुहूतमिन्द्रं स्वस्ति नो मघवा धात्विन्द्रः ॥ ३३३ ॥

त्यमू षु वाजिनं देवजूतꣳ सहोवानं तरुतारꣳ रथानाम् ।
अरिष्टनेमिं पृतनाजमाशुꣳ स्वस्तये तार्क्ष्यमिहा हुवेम ॥ ३३२ ॥
त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् ।
हुवे नु शक्रं पुरुहूतमिन्द्रमिदꣳ हविर्मघवा वेत्विन्द्रः ॥ ३३३ ॥

(३३२।१)　　॥ तार्क्ष्यसामनी द्वे । तार्क्ष्यस्त्रिष्टुबिन्द्रः ( तार्क्ष्यो वा ) ॥

त्यमूषु ॥ वाजि । नाऽ२३४५म् । देवजूताऽ२३४म् । सहोवानंता । रुताऽ३ । र२रथानाम् ।
अरिष्टनाऽ२३४इमीम् । पृतनाऽ३४३जमाशुम् ॥ स्वस्त । याइ ॥ तार्क्ष्यमिहाऽ२४३ ।
हूऽ३वाऽ५ईमाऽ६५६ ॥　　( दी० ८ । प० १३ । मा० ८ )१( दै । ५६३ )

(३३२।२)

ईयइयाऽ३हाइ । त्यमूषुवाजिनाऽ३०देऽ३वजूतम् ॥ ईऽ४यइया । हाऽ२३४इ । सहोवानंता ।
रुताऽ३ । र२रथानाम् ॥ ईयइयाऽ३हाइ । अरिष्टऽ२ । नाइ । मीऽ३०पृत ।
नाजमाशुम् ॥ ईऽ४यइया । हाऽ२३४५इ । स्वस्त । याइ । तार्क्ष्यमिहाऽ२४३ ।
हूऽ३वाऽ५ईमाऽ६५६ ॥　　( दी० १० । प० १८ । मा० १४ )२( बी । ५६४ )

(३३३।१)　　॥ इन्द्रस्य त्रातम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

त्रातारमिन्द्रमविता । रमीऽ२३०द्राम् ॥ हवेहवेसुहव२शू । रमीऽ२३०द्राम् ॥
हुवाइनुशक्रंपुरुहू । तमीऽ२३०द्राम् ॥ इद२ह । वाइः । मघवा । वाऽ३४३इ ।
तूऽ३वाऽ५इन्द्राऽ६५६ः ॥　　( दी० ५ । प० ११ । मा० ९ )३( पो । ५६५ )

---

[साम-तन्त्र-सूत्राणि] [५६३]१ रथारान् १.४.७;तृतीये ९.३.६;　　[५६४]२ ए रि २.५.१;अवृद्धयोः ८.१ १०; य हि ८.४.१; अन्तरिथ यरे ९.७.८;　　[५६५]३ वोदेऽस्थे १२.८.१;

विमद ऐन्द्रः, प्राजापत्यो वा, वसुकृद्वा वासुकः । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । २३ । १ )

यजामह इन्द्रं वज्रदक्षिणं हरीणां रथ्यं१ विव्रतानाम् ।

प्र श्मश्रु दोधुवदूर्ध्वथा भूद्वि सेनाभिर्दयमानो वि राधसा ॥ ३३४ ॥

वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् । ( ऋ० ४ । १७ । ८ )

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभं सुवज्रम् ।

हन्ता यो वृत्रं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥३३५॥

यजामह इन्द्रं वज्रदक्षिणं हरीणा३ं रथ्य३ंविव्रतानाम् ।

प्र श्मश्रुभिर्दोधुवदूर्ध्वधा भुवद्वि सेनाभिर्भयमानो वि राधसा ॥ ३३४ ॥

सत्राहणं दाधृषिं तुम्रमिन्द्रं महामपारं वृषभ३ं सुवज्रम् ।

हन्ता यो वृत्र३ं सनितोत वाजं दाता मघानि मघवा सुराधाः ॥ ३३५ ॥

---

(३३४।१) ॥ वार्त्रतुरम् । वृत्रतुरस्त्रिष्टुबिन्द्रः ॥

यजामहोवा ॥ आइन्द्रंवज्र । दक्षाऽ२३इणाम् । हरीणा१ंरथ्यंवि । व्रताऽ२३नाम् ।

प्रश्मश्रुभिर्दोधुवत् । ऊऽ । र्ध्वाधाभूऽ२३४वात् ॥ विसाइ । नाऽ । भिर्भयमानाऽ२३ः ॥

वाऽ२३इराऽ३ । धाऽ२३४५सोऽ६हाइ ॥ ( दी० ४ । प० १३ । मा० १० )४ ( दी । ५६६ )

(३३५।१) ॥ मारुतस्य धृषतः सामनी द्वे । धृषत्त्रिष्टुबिन्द्रः ॥

सत्रा । हणाऽ२३४औहोवा ॥ दाधृषींतू । म्रमिन्द्राओऽ२३४वा । महामपारंवृषभ१ंसुवज्राऽ२३म् ॥

हन्ताऽ२योऽ२३४वृ ॥ त्रा१ंसनि । तोऽ२३४३ । ताऽ३वाऽ५जाऽ६५६म् ॥

दातामघानिमघवाऽ२सुराधाऽ२३४५ः ॥ ( दी० ११ । प० १० । मा० ५ )५( डु । ५६७ )

(३३५।२)

सत्राहणंदाधृषिम् । तूऽ२३४३०म्रमिन्द्रम् ॥ महामपारंवृषभ१ंसुवज्राऽ२३म् ॥

हन्तायोऽ२३४वृ ॥ त्रा१ंसनि । तोऽ२३४३ । ताऽ३वाऽ५जाऽ६५६म् ॥

दातामघानिमघवाऽ२सुराधाऽ२३४५ः ॥ ( दी० ९ । प० ८ । मा० ५ )६ ( डु । ५६८ )

---

[ साम-तन्त्र-सूत्राणि ] [५६६]४ इओ ह्व नीचानाम् २.२.७; [५६७]५ जिदीर्घं मन्द्रान्ते ३.३.७;

[५६८]६ ( पृथक् सूत्राणि न सन्ति )

वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् । ( न ऋग्वेदीयः )

यो नो वनुष्यन्नभिदाति मर्त उगणा वा मन्यमानस्तुरो वा ।
क्षिधी युधा शवसा वा तमिन्द्राभी ष्याम वृषमणस्त्वोताः ॥३३६॥

वामदेवो गौतमः । इन्द्रः । त्रिष्टुप् । ( न ऋग्वेदीयः )

यं वृत्रेषु क्षितय स्पर्धमाना यं युक्तेषु तुरयन्तो हवन्ते ।
यं शूरसातौ यमपामुपज्मन्स्थिरं विप्रासो वाजयन्ते स इन्द्रः ॥३३७॥

(३३६।१)　　॥ आत्रम् । आत्रिस्त्रिष्टुबिन्द्रः ॥

योनोवनुष्यन्नभिदा । तिमाऽ३२३४र्ताः॥ उगणावामन्यमानस्तुरोऽ२३वा ।
क्षिधीयुधाशवसावातमाऽ२३इन्द्रा॥ अभाइष्याऽ३मा ॥ वृषामाऽ३णाऽ३ः ।
त्वोऽ२३ताऽ३४३ः । ओऽ२३४५इ॥ डा ॥　　( दी० १० । प० ९ । मा० ६ )७ ( भू । ५६९ )

(३३७।१)　　॥ गृत्समदस्य मदौ द्वौ गार्त्समदे वा द्वे । गृत्समदस्त्रिष्टुबिन्द्रः ॥

हाउयंवृत्रेषू । क्षितयाऽ३ः । स्पर्द्धमानाः। धमानाऽ३ः । ईऽ२३४यइया ॥
हाउयंयुक्तेषू । तुरयऽ३ । तोहवन्ताइ । हवन्ताऽ३इ । ईऽ२३४यइया ॥
हाउय शूरसा । ताऽ३उयम । पामुपज्मान् । उपज्माऽ३न् । ईऽ२३४यइया ॥
हाउयंविप्रासाः । वाऽ३जय । ताइसइन्द्राः । सइन्द्राऽ३ः । ईऽ२३४य । इयाऽ६ ।
हाउवा॥ ईऽ२३४५ ॥　　( दी० १२ । प० २३ । मा० २२ )८ ( त्रा । ५७० )

(३३७।२)

यंयंया । हाउयंवृत्रेषू । क्षितयाऽ३ः । स्पर्द्धमानाः । धमानाः । यंयंयंऽ२०याम् ॥
यंयंया । हाउयंयुक्तेषू । तुरयऽ३ । तोहवंताइ । हवन्ते । यंयंयंऽ२०याम् ॥
यंयंया । हाउय शूरसा । ताऽ३उयम । पामुपज्मान् । उपज्मन् । यंयंयंऽ२०याम् ॥
यंयंया । हाउयंविप्रासाः । वाऽ३जय । ताइसइन्द्राः । सइन्द्रः। यंयंयंऽ२०याम् ।
यंयंयाऽ६ । हाउवा॥ ईऽ२३४५ ॥　　( दी० १५ । प० २७ । मा० १२ )९ ( फ्रा । ५७१ )

---

[साम-तन्त्र सूत्राणि] [५६९]७ णः ८.१०.८;　[५७०]८ ह्वास्तंयन ३.१.७.　[५७१]९ यं णाग ३.७.९;

विश्वामित्रो गाथिनः । इन्द्रापर्वतौ । त्रिष्टुप् । ( ऋ० ३ । ५३ । १ )

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहतं सुवीराः ।
वीतं हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिळया मदन्ता ॥ ३३८ ॥

रेणुर्वैश्वामित्रः । इन्द्रः । त्रिष्टुप् । ( ऋ० १० । ८९ । ४ )

इन्द्राय गिरो अनिशितसर्गा अपः प्रेरयं सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रिया शचीभिर्विष्वक्तस्तम्भ पृथिवीमुत द्याम् ॥ ३३९ ॥

इन्द्रापर्वता बृहता रथेन वामीरिष आ वहत९ सुवीराः ।
वीत९ हव्यान्यध्वरेषु देवा वर्धेथां गीर्भिरिडया मदन्ता ॥ ३३८ ॥
इन्द्राय गिरो अनिशितसर्गा अपः प्रैरयत्सगरस्य बुध्नात् ।
यो अक्षेणेव चक्रियौ शचीभिर्विष्वक्तस्तंभ पृथिवीमुत द्याम् ॥ ३३९ ॥

---

(३३८।१)　॥ वैश्वामित्रम् । विश्वामित्रस्त्रिष्टुबिन्द्रः ( इन्द्रापर्वतौ वा ) ॥

इन्द्राहाउ । हाहोइ । पर्वताबृहतारथाऽ२इनाऽ२उवाऽ३ । ऊऽ३४पा ॥ वामीहाउ ।
हाहोइ । इषआवहत९सुवाऽ२इराऽ२उवाऽ३ । ऊऽ३४पा ॥ वीत९हाउ । हाहोइ ।
हव्यान्यध्वरेषुदाऽ२ईवाऽ२उवाऽ३ । ऊऽ३४पा ॥ वर्द्धाहाउ । हाहो ।
थांगीर्भिरिडयामदाऽ२०ताऽ२उवाऽ३ ॥ ऊऽ३२३४पा ॥( दी० १४। प० १६ । मा० १५)१०(त्लु।५७२)

(३३९।१)　॥ सावित्राणि पद्सामानि (सावित्रम्) । षण्णां सविता त्रिष्टुबिन्द्रः ॥

हाऽ३ । हाइ । इन्द्रायगाइ । राऽ३आनि । शीतसर्गाः ।१। असाउ । असाउ ।
इन्द्रायगाइ । राऽ३आनि । शीतसर्गाः ।२। कुवा । कुवा । इन्द्रायगाइ । राऽ३अनि ।
शीतसर्गाः ।३। अयाम् । अयाम् । अपःप्रैरा । याऽ३त्सग । रस्यबुध्नात् ।४। अविदाऽ३त् ।
अविदत् । योअक्षेणाइ । वाऽ३चक्रि । यौशचीभीः ॥५। इहाऽ२३ । ईऽ३४हा ।
विष्वक्तस्ता । भाऽ२पृथि । वीऽ३४३म् । ऊऽ२ताऽ५द्याऽ६५६म् ॥

( एवं षट् सामानि ) ( दी० ६ । प० ३१ । मा० २२ )११ ( का । ५७३ )

---

[ साम-तन्त्र-सूत्राणि ][५७२]१० धा ११.७.७;　　[५७३]११ निषु घु ७.६.३;

यमी वैवस्वती । यमो वैवस्वतः । त्रिष्टुप् । ( ऋ० १० । १० । १ )

ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।
पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥ ३४० ॥

गोतमो राहूगणः । इन्द्रः । त्रिष्टुप् । ( ऋ० १ । ८४ । १६ )

को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ३४१ ॥

मधुच्छन्दा वैश्वामित्रः । इन्द्रः । अनुष्टुप् । ( ऋ० १ । १० । १ )

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः । ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ ३४२ ॥

आ त्वा सखायः सख्या ववृत्युस्तिरः पुरू चिदर्णवां जगम्याः ।
पितुर्नपातमा दधीत वेधा अस्मिन्क्षये प्रतरां दीद्यानः ॥ ३४० ॥
को अद्य युङ्क्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्नेषामप्सुवाहो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ ३४१ ॥
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥ ३४२ ॥

(३४०।१) ॥ कुलीपाद वैरूपस्य साम । विरूपस्त्रिष्टुबिन्द्रः ॥

आत्वासखायःसख्याववृत्युः॥ तिरःपुरूचिदर्णवांजगाऽ२म्यौ । हौहोऽ२वा ।
पितुर्नपातमादधीतवाऽ२इधौ । हौहोऽ३वा॥ अस्मिन्क्षयेप्रतरांदीदियाऽ२नौ ।
हौहोऽ३वा । औहोऽ२॥ इहाऽ२३४५ ॥ ( दी० १९ । प० ९ । मा० १२ )१२ ( भा । ५७४ )

(३४१।१) ॥ आमहीयवम् । अमहीयुस्त्रिष्टुबिन्द्रः ॥

कोअद्ययुङ्क्तेधुरिगाऽऋतस्याऽ६ए॥ शिमीवतोभामिनोदुर्हृणाऽ२३यून् ॥
आसन्नेषामप्सुवाहोमयोऽ२३भून् । यएषांभृत्यामृणधत्सजाइवाऽ२उवा३॥ ऊऽ२३४पा ॥
( दी० १५ । प० ५ । मा० ८ )१३ ( रुयै । ५७५ )

॥ त्रयोदश तृतीयः, एकादशः खण्डः ॥ ११ ॥ दशतिः ॥५॥
॥ इति त्रैष्टुभमैन्द्रम् ॥

(३४२।१) ॥ शैखण्डिने द्वे । द्वयोः शिखण्ड्यनुष्टुबिन्द्रः ॥

गायाऽ३१ । तित्वाऽ३१२३४ । गाय । त्राऽ३इणाः॥ अर्चाऽ३१ । तियाऽ३१२३४ ।
कम । काऽ३इणाः॥ ब्रह्माऽ३१ । णस्त्वाऽ३१२३४ । शत । क्राऽ३ताऽउ॥ उद्वाऽ३१ ।
शमाऽ३१२३इ । वयाऽ५इमिराइ । होऽ५इ ॥डा॥ ( दी० २ । प० १७ । मा० ९ )१४ ( छो । ५७६)×

[ साम-तन्त्र-सूत्राणि ][५७४]१२ न वृद्धवति ९.१.१०; [५७५] १३ ( पृथक् सूत्राणि न सन्ति )
[५७६]१४ कृष्णम् ४ ६.९.५ उद्वि. १० १ ९.; × ( विधानामिनिः । ३.८.५ इदं सामतन्त्रभाष्यरीत्या अत्र निर्दिष्टम् । )

जेता माधुच्छन्दसः । इन्द्रः । अनुष्टुप् । ( ऋ० १ । ११ । १ )

इन्द्रं॒ विश्वा॑ अवीवृधन्त्समु॒द्रव्य॑चसं॒ गिरः॑ ।
र॒थीत॑मं र॒थीनां॒ वाजा॑नां॒ सत्प॑तिं॒ पति॑म् ॥ ३४३ ॥

इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः ।
रथीतमꣳ रथीनां वाजानाꣳसत्पतिं पतिम् ॥ ३४३ ॥

(३४२।२)
गायन्तित्वोहाइ ॥ गायात्रीऽ२३४णाः । अर्चन्त्यर्कमाऽ१र्कीऽ३णाः ।
अर्चन्तियोऽ२३४हा । कमार्कीऽ२३४णाः ॥ ब्रह्माणस्त्वाशताऽ१क्राऽ३तो ।
ब्रह्माणस्त्वोऽ२३४हाइ ॥ शताक्राऽ२३४ताउ । उद्वꣳशमिवयाऽ१इमीऽ३रे ।
उद्वꣳशमोऽ२३४हाइ । वयाऽ३इमाऽ५इराऽ६५६इ ॥ ( दी० ५ । प० ११ । मा० ११)१५( प । ५७७)

(३४२।३) ॥ औद्वꣳशीयम् । उद्वꣳशीयम् । विश्वेदेवानुष्टुबिन्द्रः ॥

गायन्तित्वागायत्रिणआ ॥ अर्चन्त्यर्कमर्काऽ२३इणाः । ब्रह्माणस्त्वाऽ२होऽ१इ ।
शतक्राऽ२३ताउ । उद्वꣳशामिवयाऽ१इमोऽ३रे ॥ उद्वꣳशाऽ२३४मी ॥ वायाऽ३२उवाऽ३ ।
उप् । माऽ२इरोऽ३५हाइ ॥ ( दी० ४ । प० ९ । मा० १० )१६ ( धौ । ५७८ )

(३४३।१) ॥ शैखण्डिनानि त्रीणि । त्रयाणां शिखण्ड्यनुष्टुबिन्द्रः ॥

इन्द्रंविश्वाः ॥ आवीऽ२वृधान् । सामुद्रव्या । चासंगिराः । राथीतमाऽ३१उवाऽ२ ।
रथाइनाऽ२म् ॥ वाजानाऽ२३ꣳसात् ॥ पातिंपतिम् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ३ । प० ११ । मा० ९ ) १७( टो । ५७९ )

(३४३।२)
ओइन्द्रंविश्वाः ॥ अवी । वृधान् । साऽ१मूऽ२द्राव्याऽ२ । चसम् । गिराः ॥
राऽ१थीऽ२तामाऽ२म् । रथी । नाम् । वाजाऽ२नाꣳसाऽ२त ॥ पतिंपाऽ२३तीऽ३४३म् ।
ओऽ२३४५इ ॥ डा ॥ ( दी० २ । प० १३ । मा०१० )१८ ( जौ । ५८० )

[ साम-तन्त्र-सूत्राणि ] [५७७]१५ [५७८]१६ [५८०]१८( पृथक् सूत्राणि न सन्ति )
[५७९]१७ घम.४.९.१०;

(३४३।३)

इन्द्रंविश्वाअवीवृधन् । समूद्राऽ२३४व्या ॥ चाऽ३सांगीऽ३रा: । राथीतमाऽ२म् ।
ऊऽ२ । हाऽ२इ । ऊऽ२ । रथाइनाम् ॥ वाजानाऽसाऽ२ । ऊऽ२ । हाऽ२इ । ऊऽ२ ॥
पतिंपाऽ२३तीऽ३४३म् । ओऽ२३४५इ ॥ डा ॥ ( दी० ५ । प० १५ । मा० १० )१९ ( मौ । ५८१ )

(३४३।४) ॥ आष्टाद‍ंष्ट्रे द्वे । द्वयोरष्टादंष्ट्रोऽनुष्टुबिन्द्रः ॥

इन्द्रंविश्वाअवीवृधन् । ऐयाहाइ ॥ समूद्राऽ१व्याऽ२ । चसांगाऽ१इराऽ२३: ।
ऐयाऽ२३हाइ ॥ रथाइताऽ१माऽ२म् । रथाइनाऽ२३म् । ऐयाऽ२३हाइ ॥
वाजानाऽ१साऽ२त् । पताइंपाऽ१तीऽ२३म् । ऐयाऽ२३हाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥

(३४३।५) ( दी० ६ । प० १३ । मा० १६ )२० ( गू । ५८२ )

इन्द्रंविश्वाअवीवृधन्नैयादौ । होऽ६वा ॥ समुद्रव्यचसम् । गाइराऽ२३: । ऐयाऽ२३त् ।
औऽ२३होवा ॥ रथाइतमऽर । थाइनाऽ२३म् । ऐयाऽ२३त् । औऽ२३होवा ॥
वाजानाऽसत्पतिम् । पातीऽ२३म् । ऐयाऽ२३त् । औऽ२३होवाऽ३४३ ।
ओऽ२३४५इ ॥डा॥ ( दी० १४ । प० १६ । मा० १३ )२१ ( ति । ५८३ )

(३४३।६) ॥ महावैश्वामित्रे द्वे । द्वयोः विश्वामित्रोऽनुष्टुबिन्द्रः ॥

हयाइ । हयाऽ३ । ओहाओहा । (त्रीणित्रिः )। इन्द्रंविश्वाः । अवीवाढ्ढीऽ२न् ॥
समुद्रव्या । चसंगाइराऽ२: ॥ रथीतमम् । रथाइनाऽ२म् ॥ वाजानाऽसात् ।
पतिंपातीऽ२म् । हयाइ । हयाऽ३ । ओहाओहा ॥ (त्रीणित्रिः )। होऽ४इडा ।
होऽ४इडा । होऽ२३४५इ । डा ॥ ( दी० ५ । प० ३० । मा० २४ )२२ ( मी । ५८४ )

(३४३।७)

हयायेऽ३ । हयायेऽ३ । हयाऽ२३४५ । हऽ२३ । आऽ२३४ई । द्रंविश्वाअवी ।
वृधाऽ३न् । साऽ२३४ । मुद्रव्यचसम् । गिराऽ३: ॥ राऽ२३४ । थीतमऽरथी ।
नाऽ३म् ॥ वाऽ२३४ । जानाऽसत्पतिम् । पताऽ३इम् । हयायेऽ३ । हयायेऽ३ ।
हयाऽ२३४५ । हऽ२३४५ ॥ होऽ४इडा । होऽ४इडा । होऽ२३४५इ । डा ॥

( दी० ६ । प० २४ । मा० १२ )२३ ( घा । ५८५ )

---

[ साम-तन्त्र-सूत्राणि] [५८१]१९ तृतीयेऽत्रुद्धात् ५.३.४; [५८२]२० इ मिनि पतिः ४.७.३;
[५८३]२१ ( पृथक् सूत्राणि न सन्ति) [५८४]२२ जिह्विवतः पते ७.६.५; घे प्रथमि ११.६.५; दुसृप्वा ११.८.१०;
[५८५]२३ देया हि ४.४.१०;

गोतमो राहूगणः । इन्द्रः । अनुष्टुप् । ( ऋ० १ । ८४ । ४ )

इमर्मिन्द्र सुतं पिब ज्येष्ठममर्त्यं मर्दम् ।
शुक्रस्यं त्वाभ्यंक्षरन्धारां ऋतस्य सार्दने ॥ ३४४ ॥

इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् ।
शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥ ३४४ ॥

---

(३४४।१) ॥ वसिष्ठस्य प्रियाणि चत्वारि । वसिष्ठोऽनुष्टुबिन्द्रः ॥

इममाऽ२३४इन्द्रा॥ सुतम् । पाऽ२इबाऽ२३४औहोवा । ज्येष्ठममाऽ२र्तियमदम् । शुक्रा ॥ स्यत्वाभिऽ३यांऽ२३॥ क्षाऽ२राऽ२३४औहोवा॥ धाराऽ२ऋतस्यसादनेऽ२३४५ ॥

( दी० १० । प० ८ । मा० ७ )२४ ( बे । ५८६ )

(३४४।२) ॥ गौतमम् । गोतमोऽनुष्टुबिन्द्रः ॥

इममिन्द्रसुतंपिबा॥ ज्येष्ठाममा । तिर्यमदाऽ२म् । शुक्रा । औहोऽ२३४वा । स्यत्वाभ्यक्षरन्॥ धारा । औहोऽ२३४वा । ऋता । औहोऽ२३४वा॥ स्यसाऽ५दनाइ । होऽ५इ॥ डा ॥

( दी० ६ । प० १३ । मा० ४ ) २५( गी । ५८७ )

(३४४।३) ॥ वसिष्ठस्य प्रिये द्वे । द्वयोर्वसिष्ठोऽनुष्टुबिन्द्रः ॥

इममिन्द्राऽ५सुतंपिबा॥ ज्येष्ठममऽ२र्त्तायमादाऽ२म् । औऽ२ । होऽ२ । हुवाइ । औऽ२होऽ२३४वा । शुक्रस्यत्वाऽ२भायक्षाराऽ२न् । औऽ२ । होऽ२ । हुवाइ । औऽ३होऽ२३४वा॥ धाराऽ१ऋताऽ२ । औऽ२ । हौऽ२ । हुवाइ । औऽ३होऽ२३४वा ॥ स्यसादाऽ२३नाऽ३४३इ । ओऽ२३४५इ ॥डा ॥

( दी० ३ । प० १९ । मा० ८ ) २६ ( है । ५८८ )

(३४४।४) ॥ वसिष्ठस्यप्रियम् ॥

इममीऽ२३ । द्रसुतंपिब । ज्येष्ठाम्॥ अमऽ२र्त्तीयमादाऽ२म् । शुक्रास्यत्वाऽ३ । भियाऽ२क्षाऽ२३४रान्॥ धाराओऽ२३४वा । आर्त्ताओऽ२३४वा॥ स्यसाऽ५दनाइ । होऽ५इ ॥ डा ॥

( दी० नास्ति । प० ११ । मा० ७ )२७ ( हे । ५८९ )

---

[ साम-तन्त्र-सूत्राणि ] [५८६]२४ मात् २.४.१; इण् १०.९.४; [५८७]२५ [५८८]२६ [५८९]२७
( पृथक् सूत्राणि न सन्ति )

अत्रिर्भौमः । इन्द्रः । अनुष्टुप् । ( ऋ० ५।३९।१ )

यदिन्द्र चित्र मेहनास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ३४५ ॥

यदिन्द्र चित्र म इह नास्ति त्वादातमद्रिवः ।
राधस्तन्नो विदद्वस उभयाहस्त्या भर ॥ ३४५ ॥

---

(३४५।१)　　　॥ वींकानिचत्वारि, वींङ्के द्वे । द्वयोः गृत्समदोऽनुष्टुबिन्द्रः ॥

यदिन्द्रोहाइ ॥ चित्रमइहनाऽ२३ । आऽ२३४ । स्तित्वादा । हाऽ३इ । तमद्राइवाऽ२३ः ॥
राऽ२३४ । धस्तन्नोविदा । हाऽ३ । वाऽ । साउ ॥ उभयाहाऽ२३ ॥ स्तियाउवाऽ३४३ ।
भाऽ३४५रोऽ६हाइ ॥

( दी० ४ । प० १४ । मा० ८ )२८ ( धै । ५९० )

(३४५।२)

यदिन्द्रचित्रमौहोवा ॥ हाऽ२३४ना । अस्तित्वादातमोवाऽ३ । ओवा । द्राऽ२३४इवाः ।
राधस्तन्नोविदोवाऽ३ । ओवा । वाऽ२३४साउ ॥ उभयाहस्तियोवाऽ३ । ओवाऽ३४३ ।
भाऽ३४५रोऽ६हाइ ॥

( दी० ६ । प० ११ । मा० ४ ) २९ ( की । ५९१ )

(३४५।३)　　　॥ आकूपारं आकूपारमनादेशं वा । आकूपारोऽनुष्टुबिन्द्रः ॥

यदिन्द्राऽ२३चित्र । मइहाऽ२३४ना ॥ अस्ताऽ२इत्वादा । तमद्राइवो ।
राधस्तान्नाऽ२ः । विदद्वसाउ ॥ उभयाहाऽ२३ ॥ स्ताऽ२३याऽ३ । भाऽ३४५रोऽ६हाइ ॥

( दी० २ । प० ९ । मा० ६ ) ३०( श्रु । ५९२ )

(३४५।४)　　　॥ वींकम् ॥

यदिन्द्रचित्रमइ । हनाऽ३ । आस्ती ॥ त्वादातमद्रिवः ॥ राधस्ताऽ२३न्नाः । वीवीऽ२ ।
दद्वसाउ ॥ उभयाऽ२३हा ॥ स्तायाऽ२३ । भाऽ२३राऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० ३ । प० १२ । मा० ५ )३१ ( दु । ५९३ )

5-11-75

॥ इति ग्रामे गेय-गाने नवमस्यार्धः प्रपाठकः ॥

---

[ साम-तन्त्र-सूत्राणि][५९०]२८ णीथ ६.७ ३; रि तनोः ८.८.४; अनित्यं रत. ११.४.१; अ०रे ११.९.२,
[५९१]२९ [५९२]३० ( पृथक सूत्राणि न सन्ति )　　[५९३]३१ गाद्रि ८.९ २,

तिरश्चीराङ्गिरसः । इन्द्रः । अनुष्टुप् । ( ऋ० ८ । ९५ । ४ )

श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महाँ असि ॥ ३४६ ॥

गोतमो राहूगणः । इन्द्रः । अनुष्टुप् । ( ऋ० १।८४।१ )

असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विन्द्रियं रजः सूर्यो न रश्मिभिः ॥ ३४७ ॥

श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति ।
सुवीर्यस्य गोमतो रायस्पूर्धि महा२ऽअसि ॥ ३४६ ॥
असावि सोम इन्द्र ते शविष्ठ धृष्णवा गहि ।
आत्वा पृणक्त्विन्द्रिय२ रजः सूर्यो न रश्मिभिः ॥ ३४७ ॥

(३४६।१) ॥ तैरश्च्ये द्वे । द्वयोः तिरश्च्यनुष्टुबिन्द्रः ॥

श्रुधी॥ हावाऽ२ऽहावाऽ२म्। तिराश्चियाः। इन्द्रयाऽ२३स्त्वा। सपौऽ३हो। यतीऽ३या॥
सुवीर्यस्यगोमताः॥ रायास्पूऽ२३र्धी॥ महा२ऽ२३। असियाऽ३४३॥ ओऽ२३४५ इ॥ डा॥

( दी० ३ । प० १२ । मा० ४ )१( ठी । ५९४ )

(३४६।२)

श्रुधीहाऽ३वंतिरश्चियाः॥ इन्द्रायस्त्वा। सपर्यतायेऽ३४॥ सुवी। रिया।
स्याऽ२३४गो। माताऽ२ः॥ रायास्पूर्द्धीऽ३। हाऽ३हाइ॥ महा२ऽ५असीऽ। होऽ५इ॥ डा॥

( दी० २ । प० १२ । मा० ५ )२ ( छु । ५९५ )

(३४७।१) ॥ महावैश्वामित्रम् । विश्वामित्रोऽनुष्टुबिन्द्रः सूर्यो वा ॥

असाविसोमइन्द्रते। शाविष्ठाऽ२३४धृ॥ ष्णोऽ३अगाऽ३ही॥ आत्वापृणाऽ२३हाऽ३।
क्तुईऽ२०द्राऽ२३४याम्॥ रजाः। सूर्योवाओऽ२३४वा॥ नराऽ५श्मिभीः॥ होऽ५इ॥ डा॥

( दी० ४ । प० १० । मा० ८ )३ ( नै । ५९६ )

[साम-तन्त्र-सूत्राणि] [५९४]१ ( पृथक् सूत्राणि न सन्ति ) [५९५]२ आयः ६.२.५;
[५९६]३ विनः ण्ण ५.४.५;

गोतमो राहूगणः । इन्द्रः । पंक्तिः । ( ऋ० १ । ८० । ७ )

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यम् ॥ ४१२ ॥

गोतमो राहूगणः । इन्द्रः । पंक्तिः । ( ऋ० १ । ८० । ३ )

प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यंसते ।
इन्द्र नृम्णं हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ४१३ ॥

इन्द्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यम् ।
यद्ध त्यं मायिनं मृगं तव त्यन्माययावधीरर्चन्ननु स्वराज्यम् ॥ ४१२ ॥
प्रेह्यभीहि धृष्णुहि न ते वज्रो नि यꣳसते ।
इन्द्र नृम्णꣳ हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वराज्यम् ॥ ४१३ ॥

(४१२।१) ॥ स्वाराज्यम् । इन्द्रः पंक्तिरिन्द्रः ॥

इन्द्रतुभ्यमिदद्रिवाऽ६ए॥ आनुत्तंवज्रिन्वीरियम् ॥ यद्धात्याऽ१म्माऽ२ । याइनंमृगम् । तवात्याऽ१न्माऽ२ । यायावधीः॥ अर्चानाऽ१नूऽ२॥ स्वाराजियम् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥ ( दी० ४ । प० ११ । मा० ७ )२६ ( तं । ७२३ )

(४१३।१) ॥ संवेशीयम्, धृष्णुसाम । कश्यपः पंक्तिरिन्द्रः ॥

प्राइहीऽ२ । अभीहिधृष्णुहाऔऽ३हो॥ नाताऽ२इ । वज्रोनियꣳसताऔऽ३हो । आइन्द्राऽ२ । नृम्णꣳहितेशवाऔऽ३हो॥ हानाऽ२ः । वृत्रंजयाअपाऔऽ३हो ॥ आर्चाऽ२नानूऽ२ । स्वाराजियम् । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥
( दी० ५ । प० १३ । मा० ११ )२७ ( ब । ७२४ )

[साम-तन्त्र-सूत्राणि][७२३]२६ [७२४]२७ ( पृथक् सूत्राणि न सन्ति )

गोतमो राहूगणः । इन्द्रः । पंक्तिः । ( ऋ० १ । ८१ । ३ )

यदुदीरत आजयो धृष्णवे धीयते धना ।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इन्द्र वसौ दधः ॥ ४१४ ॥

गोतमो राहूगणः । इन्द्रः । पंक्तिः । ( ऋ० १ । ८२ । २ )

अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ४१५ ॥

यदुदीरत आजयो धृष्णवे धीयते धनम् ।
युङ्क्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्मा इन्द्र वसौ दधः ॥ ४१४ ॥
अक्षन्नमीमदन्त ह्यव प्रिया अधूषत ।
अस्तोषत स्वभानवो विप्रा-नविष्ठया मती योजा न्विन्द्र ते हरी ॥ ४१५ ॥

---

(४१४।१)    ॥ संवेशीयम् । मरुतः पंक्तिरिन्द्रः ॥

यदुदीराऽ५तआजयाः॥ धृष्णवऽ२धी । यताइधाऽ१नाऽ२म् । युंक्ष्वामदच्युताऽ३ । हारी । कऽहनःकंवसाऽ३उ । दाधाः॥ अस्माऽआऽ२३इन्द्रा ॥ वसौदाऽ२३धाऽ३४३ः । ओऽ२३४५इ ॥ डा ॥

( दी० ७ । प० ११ । मा० १० )१८ ( चौ । ७२५ )

(४१५।१)    ॥ यामे द्वे । यमः पंक्तिरिन्द्रः, चित्रा वा । ( पितरो वा पूर्वस्य ) ॥

अक्षन्नमीमद । तहीऽ३ । आऽ२३४ । वप्रियाअधू । षता ॥ अस्तोपतस्वभानवः । विप्रानाऽ२३वी । ष्ठायामती॥ योजानूऽ३वाऽ३इ॥ द्राऽ२ताऽ२३४औहोवा ॥ हाऽ२३४री ॥

( दी० ११ । प० ११ । मा० ४ )२९( कौ । ७२६)

---

[साम-तन्त्र-सूत्राणि][७२५]२८ युङ्क्ष्वा ६.५.६;    [७२६]२९ ( पृथक् सूत्राणि न सन्ति )

गोतमो राहूगणः । इन्द्रः । पंक्तिः । ( ऋ० १ । ८२ । १ )

उपो षु शृणुही गिरो मघवन्मातथाइव ।

यदा नः सूनृतावतः कर आदर्थयास इद्योजा न्विन्द्र ते हरी ॥ ४१६ ॥

त्रित आप्त्यः कुत्स आङ्गिरसो वा । विश्वेदेवाः । पंक्तिः । ( ऋ० १ । १०५ । १ )

चन्द्रमा अप्स्वन्तरा सुपर्णो धावते दिवि ।

न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ४१७ ॥

उपो षु शृणुही गिरो मघवन्मातथा इव ।

कदा नस्सूनृतावतः कर इदर्थयास इद्योजा न्विन्द्र ते हरी ॥ ४१६ ॥

चन्द्रमा अप्स्वा३न्तरा सुपर्णो धावते दिवि ।

न वो हिरण्यनेमयः पदं विन्दन्ति विद्युतो वित्तं मे अस्य रोदसी ॥ ४१७ ॥

---

(४१६।१) ॥ यामम् । यमः पंक्तिरिन्द्रः ॥

उपोषुशृणुहीगिरः । एऽ३ । औऽ३होऽ५वा ॥ माघवन्मा । तथाआऽ१इवाऽ२३४ ।
कदाऽ३४नस्सू । नार्त्तावतः । करइद । थायाऽ१साईऽ२३४त् ॥
योजाऽ३४नुवाऽ३इ ॥ द्राऽ२ताऽ२३४औहोवा ॥ हाऽ२३४री ॥

( दी० ७ । प० १२ । मा० ९ )३०( छो । ७२७ )

(४१७।१) ॥ त्रैतानि त्रीणि । त्रितः पंक्तिरिन्द्रो विश्वेदेवाः ॥

चन्द्रमाआउवा । प्सुवान्ताराउवा । सुपर्णोधाउवा ॥ वतोदिवि । नवोहिराउवा ।
ण्यनाइमायाउवा । पदंविन्दाउवा । तिविद्युताः ॥ वित्तम्माआउवा ।
स्यरोदाऽ२३साऽ३४३इ । ओऽ२३४५इ ॥ डा ॥ ( दी० ५ । प० १२ । मा० १३ )३१( फि । ७२८ )

(४१७।२)

चन्द्रमाआ ॥ प्सूऽ३आन्ताऽ३रा । सूपर्णोधाव । ताऽ२३इ । दिवियो ।
नवोऽ२हिरण्यनेमयःपदंविन्द । तिविद्युतोऽ२३४हाइ ॥ वित्त२होइ । मआऽ२३हो ॥
स्यरोदाऽ२३साऽ३४३इ । ओऽ२३४५इ ॥ डा ॥ ( दी० ६ । प० १२ । मा० ८ ) ३१ ( खै । ७२९ )

---

[साम-तन्त्र-सूत्राणि ][७२७]३० प ( ए ) पूर्वात् ४.८.५; [७२८]३१ चं प्सुण्यादेः ६.१.२; मे ६.१.३; ( इद्वति ) ८.२.७; ( इदं क्वचित्पुस्तके अत्रापि लिखितं । ८.१.४; गाने च लिखितम् )
[७२९]३१ ओरि घोषे २.२.२; नी सु ज्यन्ते ५.९.१;

अवस्युरात्रेयः । अश्विनौ । पंक्तिः । ( ऋ० ५ । ७५ । १ )

प्रति प्रियतमं रथं वृषणं वसुवाहनम् ।

स्तोता वामश्विनावृषिः स्तोमेन प्रति भूषति माध्वी मम श्रुतं हवम् ॥ ४१८ ॥

प्रति प्रियतमꣳ रथं वृषणं वसुवाहनम् ।

स्तोता वामश्विनावृषि स्तोमेभिर्भूषति प्रति माध्वी मम श्रुतꣳ हवम् ॥ ४१८ ॥

---

(४१७।३)

चन्द्रमाऽ३आप्सुवन्तरा ॥ सुपर्णोधा । वताइदाऽ१इवीऽ२ ।

नवोऽ२हिरण्यनेमयःपदंविन्द । तिविद्यूताऽ२३ः॥ वित्तꣳहोइ । मआऽ२३हो ॥

स्यरोदाऽ२३साऽ३४३ई । ओऽ२३४५इ ॥ डा ॥ ( दी० ५ । प० १० । मा० ८ )३३ ( मै । ७३० )

(४१७।४) ॥ सौपर्णे द्वे । द्वयोः सुपर्णः पंक्तिरिन्द्रो विश्वेदेवाः ॥

चन्द्रमाअप्सुवा ॥ तरा । सुपर्णोधावतेदाऽ२३इवी । नवाऽ२३होइ ।

हिरण्यनेमयःपदंविन्द । तिविद्यूताऽ२३ः॥ वित्तꣳहोइ । मआऽ२३हो ॥

स्यरोऽ२३ । दाऽ२साऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

(४१७।५) ( दी० ७ । प० ११ । मा० ७ )३४ ( च्ले । ७३१ )

चन्द्राहोमाअप्सुवन्तरा । ओऽ६वा ॥ सुपर्णोधावतेदाइवायेऽ३ । होवाऽ३होऽ२इ ।

हुवाऽ२३४५इ । नवोहाइरण्यनाइमायाऽ२३ः । होवाऽ३होऽ२इ ।

हुवाऽ२३४५इ ॥ पदंविन्दन्तिवाइद्यूताऽ२३ः । होवाऽ३होऽ२इ । हुवाऽ२३४५इ ॥

वित्तम्मेअस्यरोदासायेऽ३ । होवाऽ३होऽ२इ । हुवाऽ३ओऽ५वाऽ६५६ ॥ ऊऽ३२३४पा ॥

( दी० १० । प० १५ । मा० १६ ) ३५ ( म्लु । ७३२ )

(४१८।१) ॥ लौशम् । लुशः पंक्तिरश्विनौ ॥

प्राऽ२३४ । तिप्रियतमम् । राथाम् ॥ वार्षणंव । सुवाहाऽ२३नाम् ।

स्तोतावाऽ३माऽ३ । श्विनाऽ२वाऽ२३४र्षीऽ३ः । स्तोमाइभीऽ३भूऽ३ ।

षातिप्राऽ२३४ती ॥ माध्वाइमाऽ३माऽ३ ॥ श्रूऽ२३ताऽ३म् । हाऽ३४५वोऽ६हाइ ॥

( दी० ४ । प० १२ । मा० ८ )३६ ( थै । ७३३ )

एकाविंशति चतुर्थः, सप्तमः खण्डः ॥ ७ ॥ दशतिः ॥ ४ ॥

॥ इति ग्रामे गेय-गाने एकादशस्यार्द्धः प्रपाठकः ॥

6-11-79

---

[ साम-तन्त्र-सूत्राणि] [७३०]३३[७३३]३६ ( पृथक्सूत्राणि न सन्ति ) [७३१]३४ चं वृद्धे ३.६.१; [७३२]३५ ओवान् कया ३.९.३; द्रसेशातिनि ४.५.४;

वसुश्रुत आत्रेयः । अग्निः । पंक्तिः । ( ऋ० ५ । ६ । ४ )

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषं स्तोतृभ्य आ भर ॥ ४१९ ॥

विमद ऐन्द्रः, प्राजापत्यो वा, वसुकृद्वा वासुकः । अग्निः । आस्तारपंक्तिः । ( ऋ० १० । २१ । १ )

आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
यज्ञाय स्तीर्णबर्हिषे वि वो मदे शीरं पावकशोचिषं विवक्षसे ॥ ४२० ॥

आ ते अग्न इधीमहि द्युमन्तं देवाजरम् ।
यद्ध स्या ते पनीयसी समिद्दीदयति द्यवीषऽ स्तोतृभ्य आ भर॥ ४१९॥

आग्निं न स्ववृक्तिभिर्होतारं त्वा वृणीमहे ।
शीरं पावकशोचिषं वि वो मदे यज्ञेषु स्तीर्णबर्हिषं विवक्षसे ॥ ४२० ॥

14-2-80

(४१९।१) ॥ संजये द्वे । द्वयोरिन्द्रः पंक्तिरग्निः ॥

आऽ२३४ । तेअग्नइधी । माहाइ॥ द्युमन्तंदेवऽ३ । आऽ२३ । जरमा ।
यद्धास्याऽ३ताऽ३इ । पानीऽ२याऽ२३४सी । समिद्दीऽ२दय । ताऽ२३इ ।
द्यविया॥ इषाऽस्तोऽ३तृऽ३॥ भ्याऽ२३आऽ३ । भाऽ३४ऽरोऽ६हाइ ॥

(४१९।२) ( दी० ४ । प० १४ । मा० ७ )१ ( धे । ७३४ )

आतेअग्नइधी । माऽ३हाइ । द्युमन्ताऽ३०देवअजरम् ॥ यद्धस्यातेपनीयसी ।
समिद्दीदयताइ । हिम्ऽ३हिम् । द्याऽ२३४वी॥ इषऽस्तोतृभ्याऽ३आ ॥
हिऽ३म्हिऽ२४३म् । भाऽ३४ऽरोऽ६हाइ ॥ ( दी० १० । प० १० । मा० १२ )२ ( मा । ७३५)

(४२०।१) ॥ उत्सेधः, उत्सेधम् वा । अंगिरसः पंक्तिरग्निः ॥

हाउ । औहोऽ२३४वा । आग्निन्नस्ववृक्तिभीऽ२३४५॥ हाउ । औहोऽ२३४वा ।
होतारन्त्वावृणीमहेऽ२३४५ । हाउ । औहोऽ२३४वा । शीरंपावकशोचिषम् ।
विवोमाऽ२३४दाइ॥ हाउ । औहोऽ२३४वा । यज्ञाइषुस्तीर्णबर्हिषाऽ२३४ऽम्॥
हाउ । औहोऽ२३४वा॥ विवक्षसेऽ२३४५ ॥ (दी० ९ । प० १६ । मा० १० )३( नौ । ७३६ )

[ साम-तन्त्र-सूत्राणि ][७३४]१ ( पृथक् सूत्राणि न सन्ति ) [७३५]२ रं गि ७ ४ ६,
[७३६]३ तेर्वि २.५.२; इणः स्वारिणि ११.३.१२;

सत्यश्रवा आत्रेयः । उषाः । पंक्तिः । ( ऋ० ५ । ७९ । १ )

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयः सत्यश्रवसि वाय्ये सुजाते अश्वसूनृते ॥ ४२१ ॥

विमद ऐन्द्रः, प्राजापत्यो वा, वसुकृद्वा वासुकः । सोमः । आस्तारपंक्तिः ( ऋ० १० । २५ । १ )

भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अधा ते सख्ये अन्धसो वि वो मदे रणन्गावो न यवसे विवक्षसे ॥ ४२२ ॥

महे नो अद्य बोधयोषो राये दिवित्मती ।
यथा चिन्नो अबोधयस्सत्यश्रवासि वाय्ये सुजाते अश्वसूनृते ॥ ४२१ ॥
भद्रं नो अपि वातय मनो दक्षमुत क्रतुम् ।
अथा ते सख्ये अन्धसो वि वो मदे रणा गावो न यवसे विवक्षसे ॥ ४२२ ॥

(४२०।२) ॥ निषेधः, निषेधम् वा । अंगिरसः पंक्तिरग्निः ॥

आग्निन्नस्ववृक्तिभिर्हइहाहाइ ॥ होतारन्त्वावृणीमहइहाऽ३ । हाइ ।
शीरंपावकशोचिषमिहइहाऽ३ । हाइ । विवोमाऽ२३४दाइ ॥
यज्ञाइपुस्तीर्णबर्हिषमिहइहाऽ३ ॥ हाऽ२इ ॥ वाऽ२इवाऽ२३४औहोवा ॥ क्षाऽ२३४से ॥

( पं० १२ । प० १० । मा० १३ )४( जि । ७३७ )

(४२१।१) ॥ सत्यश्रवसः वाय्यस्य साम । सामसत्यश्रवाः पंक्तिरुषा ॥

महाऽ३४इ । महेनोअद्य । बोधाऽ६या ॥ उषोराये । दिवित्माऽ२३ती ।
यथाचीऽ३न्नाऽ३ः । आबोधाऽ२३४याः । सत्याश्राऽ२वाऽ३ ।
सिवाऽ२याऽ२३४याइ ॥ सुजाताऽ३आऽ३ । श्वाऽ२३सूऽ३ । नाऽ३४५तोऽ६हाइ ॥

( दी० ६ । प० १२ । मा० ७ )५ ( खे । ७३८ )

(४२२।१) ॥ पौषम् । पूषा पंक्तिः सोमः ॥

भद्रन्नोऽ२३अपिवातया ॥ मनाऽ२द । क्षाम् । ऊतक्राऽ२३४तूम् ॥ आथाते ।
सा । ख्यअन्धसाऽ२ः । विवोमाऽ२३४दाइ । रणाऽ२गावोऽ२नय ॥
वसायेऽ३ ॥ वाऽ२इवाऽ२३४औहोवा ॥ क्षाऽ२३४से ॥ ( दी० १० । प० १२ । मा० ८)६ ( फै । ७३९)

---

[साम-तन्त्र-सूत्राणि][७३७]४ न हन्नु ९.७.७; नेरि ११.१०.३; [७३८]५ ति १०.८.६;
[७३९]६ ( पृथक् सूत्राणि न सन्ति )

गोतमो राहूगणः । इन्द्र । पंक्तिः । ( ऋ० १ । ८१ । ८ )

क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥ ४२३ ॥

गोतमो राहूगणः । इन्द्रः । पंक्तिः । ( ऋ० १ । ८२ । ८ )

स घा तं वृषणं रथमधि तिष्ठाति गोविदम् ।
यः पात्रं हारियोजनं पूर्णमिन्द्र चिकेतति योजा न्विन्द्र ते हरी ॥४२४॥

क्रत्वा महा२ँ अनुष्वधं भीम आ वावृते शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसम् ॥४२३॥
स घा तं वृषण२ँ रथमधि तिष्ठाति गोविदम् ।
यः पात्र२ँ हारियोजनं पूर्णमिन्द्र चिकेतति योजान्विन्द्र ते हरी ॥ ४२४ ॥

---

(४२३।१) ॥ औपसम् । उपा पंक्तिरिन्द्रः ॥

क्रत्वामहा२ँअनुष्वधाऽ६मे ॥ भीमआवावृऽ३ताइशाऽ१वाऽ२ः । श्रियऋष्वाऽ३ः ।
ऊपाकाऽ२३४योः । निशिप्रीहरिऽ३वान्दाऽ१धाऽ२इ ॥ हस्तायोऽ३र्वाऽ३ ॥
ज्रमोऽ२३४वा । याऽ५सोऽ६हाइ ॥ ( दी० ६ । प० ८ । मा० ९ )७ ( गो । ७४० )

(४२४।१) ॥ ओंशम् । स्तुशा । पंक्तिरिन्द्रः ॥

सघातंवृषणम् । रथाऽ३४औहोवा ॥ आधितिष्ठा । तिगोवाऽ१इदाऽ२म् ॥
यःपात्र२ँहा । रियोऽ२जाऽ२३४नाम् । पूर्णमि । द्रा । चीकेताऽ२३४ता ॥
योजानूऽ२वाऽ२इ ॥ द्राऽ२ताऽ२३४औहोवा ॥ हाऽ२३४री ॥
( दी० ९ । प० १२ । मा० ७ )८ ( ऐ । ७४१ )

---

[ साम-तन्त्र-सूत्राणि][७४०]७ [७४१]८ ( पृथक् सूत्राणि न सन्ति )

वसुश्रुत आत्रेयः । अग्निः । पंक्तिः । ( ऋ० ५ । ६ । १ )

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषं स्तोतृभ्य आ भर ॥ ४२५ ॥

कुल्मल बर्हिषः शैलूषिः, अंहोमुग्वा वामदेव्यः । विश्वेदेवाः । उपरिष्टाद् बृहती ( ऋ० १० । १२६ । १ )

न तमंहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयन्ति वरुणो अति द्विषः ॥ ४२६ ॥

अग्नयो धिष्ण्या ऐश्वराः । पवमानः सोमः । द्विपदा विराट् । ( ऋ० ९ । १०९ । १ )

परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥४२७॥

अग्निं तं मन्ये यो वसुरस्तं यं यन्ति धेनवः ।
अस्तमर्वन्त आशवोऽस्तं नित्यासो वाजिन इषꣳ स्तोतृभ्य आ भर ॥ ४२५ ॥
न तमꣳहो न दुरितं देवासो अष्ट मर्त्यम् ।
सजोषसो यमर्यमा मित्रो नयंति वरुणो अति द्विषः ॥ ४२६ ॥
परि प्र धन्वेन्द्राय सोम स्वादुर्मित्राय पूष्णे भगाय ॥ ४२७ ॥

---

(४२५।१) ॥ निषेधस्साम । अंगिरसः पंक्तिरग्निः ॥

अग्निंताऽ३०मन्येयोवसूः॥ अस्तंयंयाऽ३ । तीधेनाऽ२३४वाः । अस्तमर्वाऽ३ ।
ताआऽ२शाऽ२३४वाः । अस्तान्नित्याऽ३ । सोवाऽ२जाऽ२३४इनाः॥
इषाꣳस्तोऽ३तृऽ३४ । हाहोऽ२३४हा॥ भ्याऽ२३आऽ३ । भाऽ३४५रोऽ६हाइ ॥

( दी० ४ । प० ११ । मा० ८ )९ ( तैं । ७४२ )

(४२६।१) अꣳहोमुचस्साम, गौराङ्गिरसस्य साम वा । अꣳहोमुग्बृहती विश्वेदेवाः ॥

नतमꣳहोनदुरितम् । ईयइयाहाइ॥ दाइवाऽ२सोअष्टमर्तियमी । यइयाऽ२३हाइ ।
सजोषसोयमर्यमाई । यइयाऽ२३हाइ॥ माइत्रोनायाऽ३॥ तिवाऽ२रूऽ२३४५णाऽ६५६ः ॥
अतिद्विषाऽ२३४५ः ॥

( दी० ८ । प० ९ । मा० १३ ) १०( दि । ७४३ )

दश पञ्चम , अष्टमः खण्डः ॥ ८ ॥ दशतिः ॥ ४ ॥

॥ इति पंक्तिः ॥

(४२७।१) ॥ इन्द्रस्य संक्रमे द्वे । द्वयोरिन्द्रः पंक्तिरिन्द्रसोमौ ॥

परिप्रधन्वा॥ इन्द्रायसोमास्वाऽ१दूऽ२३४ः । हाइ । मित्राया॥
पूष्णेभाऽ२३४हाइ॥ गाऽ२३४योऽ६हाइ । ( दी० ५ । प० ६ । मा० ८ )११ ( पी । ७४४ )

---

[साम-तन्त्र-सूत्राणि][७४२]९[७४३]१०[७४४]११ ( पृथक् सूत्राणि न सन्ति )

त्र्यरुणस्त्रैवृष्णः, त्रसदस्यु पौरुकुत्स्यः । पवमानः सोमः । पिपीलिकामध्या अनुष्टुप् । ( ऋ॰ ९ । ११०।१ )

पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईयसे ॥ ४२८ ॥

पर्यू षु प्र धन्व वाजसातये परि वृत्राणि सक्षणिः ।
द्विषस्तरध्या ऋणया न ईरसे ॥ ४२८ ॥

(४२७।२)
परिप्रधन्वा॥ इन्द्रायसोमा । ओऽ३हा । ओऽ३हा॥ स्वादुर्मित्राया ।
ओऽ३हा । ओऽ३हा॥ पूष्णाऽ३४ओहोवा॥ भगाऽ३याऽ२३४५ ॥
( दी॰ ७ । प॰ ९ । मा॰ १ )१२ ( झ । ७४५ )

(४२७।३) ॥ सौहविषाणि त्रीणि (स्वर्निधनं सौहविषम् ) । त्रयाणां सुहविः पंक्तिरिन्द्रसोमौ ॥
परीऽ३होइ । प्रधाऽ२३४न्वा॥ इन्द्राऽ३हो । यसोऽ२३४मा ।
स्वादूऽ३होइ । मित्राऽ२३४या । पूष्णोऽ३होइ । भगाऽ२३४या॥ पूष्णेभगाय॥
पूष्णेऽ३४३ । होऽ३४३इ । भाऽ३गाऽ५याऽ६५६ ॥ एऽ३ । सुववर्तऽ२३४५ ॥
(४२७।४) ( दी॰ ६ । प॰ १८ । मा॰ ४ )१३( घी । ७४६ )
हाऽ३हाइ । परिप्रऽ३धान्वा । एऽ२३४हिया । हाऽ३हाइ॥ हाऽ३हाइ ।
इन्द्रायऽ३सोमा । एऽ२३४हिया । हाऽ३हाइ॥ हाऽ३हाइ । स्वादुर्मिऽ३त्राया ।
एऽ२३४हिया । हाऽ३हाइ॥ हाऽ३हाइ । पूष्णेभऽ३गाया । एऽ२३४हिया ।
हाऽ३हाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥ ( दी॰ ८ । प॰ १८ । मा॰ ९ )१४( दो । ७४७ )
(४२७।५) ॥ वाङ्निधनं सौहविषम् ॥
प । येपारी॥ प्रधन्वा । होवाऽ३होइ । इन्द्रायसोमा । होवाऽ३होइ ।
स्वादुर्मित्राया । होवाऽ३होयेऽ३॥ पूष्णोवाओऽ२३४वा॥ भगाऽ५याउ ॥ वा ॥
( दी॰ ५ । प॰ ११ । मा॰ ८ )१५ ( पी । ७४८ )
(४२८।१) ॥ वाकानि त्रीणि । त्रयाणां वकोऽनुष्टुप् सोमः ॥
पर्यूषुप्रधन्वावाजऽ३सा॥ तायाइ । ओइ । पारी । ओइ । वृत्राणि ।
सक्षाणिः॥ द्वाइषस्ताराऽ२॥ धियाऽ२इ । अर्णायाऽ२ः । नाऽ२ः ।
ईरासाऽ२३इ । ओयेऽ३ । रसाऽ३४३इ । ओऽ२३४५इ ॥ डा ॥
( दी॰ ५ । प॰ १६ । मा॰ ११ )१६( प । ७४९ )

[ साम-तन्त्र-सूत्राणि ][७४५]१२ [७४७]१४ [७४८]१५ ( पृथक् सूत्राणि न सन्ति)
[७४६]१३ सु ९.८.१; अन्तस्थामाणि १२.८.५; [७४९]१६ रवत्तु ३ १० ५; जोदये ८.६.३; प ६ ५ ३)
न्वा ८.१।४; ऋणि सार्वायाः १२ १ ७; डिक्षरणि अतायाम् १२.७ ३;

अग्नयो धिष्ण्या ऐश्वराः । पवमानः सोमः । द्विपदा विराट् । ( ऋ० ९ । १०९ । ४ )

पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ ४२९ ॥

अग्नयो धिष्ण्या ऐश्वराः । पवमानः सोमः । द्विपदा विराट् । ( ऋ० ९ । १०९ । १० )

पवस्व सोम क्रत्वे दक्षायाश्वो न निक्तो वाजी धनाय ॥४३०॥

पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥ ४२९ ॥

पवस्व सोम महे दक्षायाश्वो न निक्तो वाजी धनाय ॥ ४३० ॥

---

(४२८।२)

पर्यूषू॥ प्रधन्वावाऽ३ । जासाताऽ२३४याइ । परिवृत्राणिसक्षाणिः ।
द्विषास्ताऽ३रा॥ धियाऋणयाऽ१नाऽ३ई॥ हिम् । राऽ३४५सोऽ६हाइ ॥

( दी० ४ । प० ८ । मा० ६ )१७ ( दू । ७५० )

(४२८।३)

प । र्येपारी ॥ ऊषुप्रधन्वावाजसातयेपरिवृत्राणिसक्षणिर्द्वीऽ२३इपाः ।
ताऽ२३रा॥ धियाऋणयानओवाऽ३ओऽ२३४वा॥ राऽ५सोऽ६हाइ ॥

( दी० ८ । प० ६ । मा० ६ )१८( दू । ७५१ )

(४२९।१) ॥ धर्म धाम सामनी वा द्वे । द्वयोः प्रजापतिः पंक्तिस्सोमः ॥

पवस्वसोमा॥ माहान्त्समुद्राः । पितादेऽ२वानाऽ२३म्॥ वाऽ२इश्वाऽ२३४औहोवा॥
भिधामाऽ२३४५ ॥

( दी० ८ । प० ५ । मा० ४ )१९( गी । ७५२ )

(४२९।२)

औहोऽ६वा । औहोऽ३वा । औहोऽ२वाऽ२३४औहोऽ६वा । पवस्वसोम ।
महान्त्समुद्रः॥ पितादेऽ२वानाऽ२म्॥ विश्वाभिधामाऽ२३४ । औहोऽ६वा ।
औहोऽ३वा । औहोऽ२वाऽ२३४औहोऽ६वा॥ एऽ३ । धर्माऽ२३४५ ॥

( दी० १६ । प० १२ । मा० ४ )२०( ग्वी । ७५३ )

(४३०।१) ॥ विधर्म सामनी द्वे । द्वयोः प्रजापतिःपंक्तिस्सोमः ॥

औहोऽ६वा । औहोऽ३वा । औहोऽ२वाऽ२३४औहोऽ६वा । पवस्वसोम ॥
महेदक्षाय॥ अश्वोननिक्तः॥ वाऽ२जीधनाऽ२याऽ२३४ । औहोऽ६वा॥
औहोऽ३वा । औहोऽ२वाऽ२३४औहोऽ६वा॥ एऽ३ । विधर्माऽ२३४५ ॥

( दी० १५ । प० १२ । मा० ३ )२१ ( फि । ७५४ )

---

[साम-तन्त्र-सूत्राणि][७५०]१७ यि १०.६.२; [७५४]२१ नोहण् २.१.८; [७५१]१८
[७५२]१९ [७५३]२० ( पृथक् सूत्राणि न सन्ति )

अग्नयो धिष्ण्या ऐश्वराः । पवमानः सोमः । द्विपदा विराट् । ( ऋ० ९ । १०९ । १३ )

इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ४३१ ॥

त्र्यरुणस्त्रैवृष्णः, त्रसदस्युः पौरुकुत्स्यः । पवमानः सोमः । पिपीलिकामध्या अनुष्टुप् ( ऋ० ९ । ११० । २ )

अनु हि त्वा सुतं सोम मदामसि महे समर्यराज्ये ।

वाजाँ अभि पवमान प्र गाहसे ॥ ४३२ ॥

वसिष्ठो मैत्रावरुणिः । मरुतः । द्विपदा विराट् । ( ऋ० ७ । ५६ । १ )

क ईं व्यक्ता नरः सनीळा रुद्रस्य मर्या अधा स्वश्वाः ॥ ४३३ ॥

इन्दुः पविष्ट चारुर्मदायापामुपस्थे कविर्भगाय ॥ ४३१ ॥

अनु हि त्वा सुतꣳ सोम मदामसि महे समर्यराज्ये ।

वाजाꣳ अभि पवमान प्र गाहसे ॥ ४३२ ॥

क ईं व्यक्ता नरस्सनीडा रुद्रस्य मर्या अधा स्वश्वाः ॥ ४३३ ॥

---

(४३०।२) ॥ घनसाम ॥

पवस्वसोमा ॥ महेदऽ३क्षायाऽ२ ॥ अश्वोननिक्तोऽ२३ ॥ वाजाऽ३४ ।
ओहोवा । धनाऽ३याऽ२३४५ ॥ ( दी० ६ । प० ६ । मा० नास्ति )२२ ( कृ । ७५५ )

(४३१।१) ॥ भागम् । भगः पंक्तिस्सोमः ॥

इन्दुःपविष्टाम्भि चाऽ२३रू ॥ मदाया ॥ अपामुपाऽ२३स्थाऽ३इ ॥
काऽ२वाऽ२३४ओहोवा ॥ भगाऽ३याऽ२३४५ ॥ ( दी० ८ । प० ६ । मा० ३ )२३ ( ति । ७५६ )

(४३२।१) ॥ वाजिनाꣳसाम । वाजिनोऽनुष्टुप्सोमः ॥

अनु । अनू ॥ हाइत्वासुतꣳसोममदामसि । मदामसायेऽ३ । महाऽ३४३इ ।
साऽ३४मा ॥ यराज्य । वाजाꣳअभिपवमान । पवमाना ॥ प्रागाहसा ।
औऽ३होवा । होऽ५इ ॥ डा ॥ ( दी० ११ । प० १२ । मा० ४ )२४ ( गी । ७५७ )

(४३३।१) ॥ हिकम् । प्रजापतिः पंक्तिर्मरुतः ॥

कईव्यऽ५क्ताः ॥ नरस्सऽ३नाइडाऽ२: ॥ रुद्रस्यमर्याऽ२३: ॥ आऽ२थाऽ२३४औहोवा ॥
सुवऽ३श्वाऽ२३४५: ॥ ( दी० ३ । प० ५ । मा० ७ )२५ ( णे । ७५८ )

(४३३।२) ॥ चिकम् । प्रजापतिः पंक्तिर्मरुतः ॥

कईऽ३४३०वियक्ताः ॥ नराऽ३४३स्सनीडाः ॥ रुद्रस्यामर्याऽ२३: ॥
आऽ२थाऽ२३४औहोवा ॥ सुवऽ३श्वाऽ२३४५: ॥ ( दी० ५ । प० ५ । मा० ६ )२६ ( मू । ७५९ )

---

[साम-तन्त्र-सूत्राणि ][७५५]२२ [७५६]२३ [७५८]२५ [७५९]२६ ( पृथक् सूत्राणि न सन्ति )
[७५७]२४ अनुन्यामस्थाजिज २.४.७; दावति नुपे २.६.७;

वामदेवो गौतमः । अग्निः । पदपंक्तिः । ( ऋ० ४ । १० । १ )

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रं हृदिस्पृशम् ।ऋध्यामा त ओहैः ॥ ४३४ ॥

अग्नयो धिष्ण्या ऐश्वराः । पवमानः सोमः । द्विपदा विराट् । ( ऋ० ९ । १०९ । ७ )

पवस्व सोम द्युम्नी सुधारो महामवीनामनु पूर्व्यः ॥४३६॥

अग्ने तमद्याश्वं न स्तोमैः क्रतुं न भद्रꣳ हृदिस्पृशम् । ऋध्यामा त ओहैः ॥ ४३४ ॥

ऋण-त्रसदस्यू । वाजिनः । पुरउष्णिक् । ( न ऋग्वेदीयः )

आविर्मर्या आ वाजं वाजिनो अग्मन्देवस्य सवितुस्सवम् ।

स्वर्गाꣳ अर्वन्तो जयत ॥ ४३५ ॥

पवस्व सोम द्युम्नी सुधारो महाꣳ अवीनामनु पूर्व्यः ॥ ४३६ ॥

(४३३।३) ॥ निकम् । प्रजापतिः पंक्तिर्मरुतः ॥

काइम् । वियाऽ२३ । ओवाऽ३ । आक्काः ॥ नाराः । सनाऽ२३ । ओवाऽ३ ।

आइडाः॥ रूद्रा । स्यमाऽ२३ । ओवाऽ३ । आर्याः ॥ आथा । सुवाऽ२३ ।

ओवाऽ३ । आश्वाः । होऽ५इ ॥ डा ॥

( दी० नास्ति । प० १८ । मा० ९ )२७( रो । ७६० )

(४३४।१) ॥ आश्वे द्वे । द्वयोरश्वः पंक्तिरग्निः ॥

अग्नेतमाद्या ॥ अश्वन्नस्तोमाइः । क्रतुन्नऽ३भाद्राऽ२म् ॥ हार्दिस्पृशाम् ॥

ऋध्याऽ२माऽ२३४औहोवा ॥ तओहाऽ२३४५इः ॥ ( दी० ५ । प० ६ । मा० ८ )२८( पै । ७६१ )

(४३४।२)

अग्ने । होऽ२४३इ । तमद्य ॥ अश्वन्नस्तोमाइः । क्रतुन्नऽ३भाद्राऽ२म् ॥

हार्दाऽ३आइ ॥ स्पृशम् । ऋध्याऽ२माऽ२३४औहोवा ॥ तओहाऽ२३४५इः ॥

( दी० ५ । प० ९ । मा० ११ )२९( भ । ७६२ )

(४३५।१) ॥ वाजिनाꣳसाम । वाजिनोष्णिक् सविता ॥

आविर्माऽ२३४र्याः ॥ आवाजंवाजिनोअग्मान् । देवस्यस ॥ वितुस्साऽ२३४वाम् ॥

स्वर्गाꣳअर्वाऽ२३४५न्ताऽ६५६ः॥ जयताऽ२३४५ ॥ ( दी० ६ । प० ६ । मा० ६ ) ३०( कू । ७६३ )

(४३६।१) ॥ पवित्रम् । आदित्याः पंक्तिस्सोमः ॥

पवस्वसोमा ॥ द्युम्नीऽ३४३सुधारः । माहाꣳअवीनाम् ॥ अनुपू ॥ वियो३४५इ ॥ डा ॥

( दी० ५ । प० ६ । मा० ४ )३१ ( पी । ७६४ )

॥ एकविंशति षष्ठः, नवमः खण्ड. ॥ ९ ॥ दशतिः ॥ ५ ॥

[ साम-तन्त्र-सूत्राणि ][७६०]२७ रां सुनावतः १०.४.१० [७६१]२८ [७६२]२९ [७६३]३०

[७६४]३१ ( पृथक् सूत्राणि न सन्ति )

त्रसदस्युः । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीयः )

**विश्वतोदावन्विश्वतो न आ भर यं त्वा शविष्ठमीमहे ॥ ४३७ ॥**

त्रसदस्युः । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीयः )

**एष ब्रह्मा य ऋत्विय इन्द्रो नाम श्रुतो गृणे ॥ ४३८ ॥**

(४३७।१) ॥ आभरे द्वे । द्वयोरिन्द्रः पंक्तिरिन्द्रः ॥

विश्वतोहाउ॥ दावान्विश्वतोनाः । ओऽ३ । हा । ओऽ२३४हाइ । आ ।
भरा । भाऽ२३रा॥ यान्त्वाशविष्ठमाइ॥ माहा । ओहोऽ२३४वा॥ एहीयेहीऽ१ ॥

(४३७।२) ( दी० ९ । प० १२ । मा० ४ )३२ ( थी । ७६५ )+

विश्वतोदावन्विश्वतोनआ॥ भरा । भाऽ२३रा॥ यान्त्वाशविष्ठमाइम ॥
हाऽ । औऽ३होवा । होऽ५इ ॥ डा ॥ ( दी० ५ । प० ८ । मा० ३ )३३( थि । ७६६ )

(४३८।१) ॥ वासुमन्दे द्वे । द्वयोर्वसुमन्दो गायत्रीन्द्रः ॥

एषाः॥ ब्राह्मायआऽ३१उवाऽ२३ । एऽ३ । त्वियआ॥ आऽ२३इन्द्राः ॥
नामश्रुताऽ३१उवाऽ२३॥ एऽ३ । गृणआ ॥ ( दी० १ । प० ८ । मा० ८ ) ३४ ( गै । ७६७ )

(४३८।२)

एषाएषाः ॥ ब्राह्माऽ२ब्राह्माऽ२ । यऋत्वियोवा । ओवा॥ आइन्द्राऽ२आइन्द्राऽ२ः ॥
नामश्रुतोवा । ओवा । गृणा । औऽ३होवा । होऽ५इ॥ डा ॥

( दी० १ । प० ११ । मा ८ )३५ ( कै । ७६८ )

(४३८।३) ॥ कावषाणि त्रीणि । त्रयाणां कवषो गायत्रीन्द्रः ॥

एषाः । औ । ओवा॥ ब्राह्मायाः । ऋत्वियाऽ२ः । आइन्द्रोऽ३हाऽ३इ ॥
नाऽ३मा॥ श्रूऽ२३तो । गृणा । औऽ३होवा । होऽ५इ ॥ डा ॥

(४३८।४) ( दी० १ । प० १२ । मा० ६ )३६( ग्वृ । ७६९)

ओऽ३हाऽ३४३ । ओऽ३४हा । एषाब्राह्माऽ३४३॥ याऽ३४ः ।
ऋत्वियाः॥ ओऽ३हाऽ३४३ । ओऽ३४हा । इन्द्रोनामाऽ३४३ । श्रूऽ३४ ।
तोगृणाइ॥ ओऽ३हाऽ३४३ । ओऽ३४५हाऽ६५६ ॥ एऽ३ । सुववतेऽ२३४५ ॥

( दी० २ । प० १४ । मा० ३ )३७ ( ख्रि । ७७० )

[साम-तन्त्र-सूत्राणि] [७६५]३२ ओष्ठनेमि २.७.७; व्यंछिवनि ६.५ ७;+( सामतन्त्रभाष्यानुसारेण )
[७६६]३३ भरतवौ साणि८.६.५, [७६७]३४ [७६८]३५[७६९]३६ ( पृथक् सूत्राणि न सन्ति )
[७७०]३७ अडिनोऽविषुद्यत ६.२.७;

अवस्युरात्रेय. । इन्द्रः । त्रिष्टुप् । ( ऋ० ५ । ३१ । ४ उत्तरार्धः )

ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४३९ ॥

अवस्युरात्रेयः । इन्द्रः । त्रिष्टुप् । ( ऋ० ५ । ३१ । ४ पूर्वार्धः )

अनवस्ते रथमश्वाय तक्षन्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥४४०॥

ब्रह्माण इन्द्रं महयन्तो अर्कैरवर्धयन्नहये हन्तवा उ ॥ ४३९ ॥

अनवस्ते रथमश्वाय तक्षुस्त्वष्टा वज्रं पुरुहूत द्युमन्तम् ॥ ४४० ॥

---

(४३८।५)

एषब्रह्मौहो ॥ याऋत्वियाः ॥ इन्द्रोनामौहो ॥ श्रुतोगृणाऽ३१उवाऽ२३ ॥

ऊऽ३४पा ॥

( दी० ८ । प० ५ । मा० ३ ) ३८ ( णिय । ७७१ )

॥ इति ग्रामे गेय-गाने एकादशः प्रपाठकः ॥ ११ ॥

(४३९।१) ॥ श्लोके द्वे । द्वयोः प्रजापतिस्त्रिष्टुबिन्द्रः ॥

हाउस्वरता ॥ ब्रह्माणाऽ२ः । इन्द्रम् । आऽ । महयाऽ२०तोऽ२३४ । कैः ॥

अवाऽ२र्द्धयान् । अहयेह । तवाऽ२३४५इ । ऊ६५६ ॥ श्लोकयताऽ२३४५ ॥

( दी० ३ । प० ११ । मा० ६ )१ ( हू । ७७२ )×

(४३९।२)

हाउ । अभि । स्वरता ॥ ब्रह्माणआइन्द्राऽ२म् । महयाऽ२०तोऽ२३४ । कैः ।

अवर्द्धायाऽ२न् ॥ अहयेहन्तवाऽ२३४५ऊऽ६५६ ॥ श्लोऽ२३४काः ॥

( दी० ३ । प० ९ । मा० ८ )२ ( है । ७७३ )

(४४०।१) ॥ अनुश्लोके द्वे । द्वयोः प्रजापतिस्त्रिष्टुबिन्द्रः त्वष्टा वा ॥

हाउस्वरता । स्वरतस्वराऽ२३ता । आनवस्तेरथम । श्वायाताऽ१क्षूऽ२३४ः ॥

हाउस्वरता । स्वरतस्वराऽ२३ता । त्वष्टावज्रंपुरुहू । ताद्युमान्ताऽ२३४म् ॥

हाउस्वरता । स्वरतस्व । राऽ२ । ताऽ२३४ । औहोवा ॥ स्वराऽ३ताऽ२३४५ ॥

( दी० ९ । प० १४ । मा० ५ )३ ( धु । ७७४ )

---

[साम-तन्त्र-सूत्राणि] [७७१]३८ इको हौ ११.७.२; [७७२]१ न तिनः ९.८.३; ×"सामतन्त्रभाष्यरीत्या नेदमुदाहरणं। क्वचित्पुस्तकेऽत्रालिखितम्" [७७३]२ पिबा १.३.२; द्रगो ६.७.१०; [७७४]३ मिंद्रां नेदन्तायाम् ९.८.४

संवर्त आङ्गिरसः । उषाः । द्विपदा विराट् । ( ऋ० १० । १७२ । १ )

आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ ४४३ ॥

त्रसदस्युः । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीय· )

शं पदं मघं रयीषिणे न काममव्रतो हिनोति न स्पृशद्रयिम् ॥ ४४१ ॥

त्रसदस्युः । विश्वेदेवाः । द्विपदा विराट । ( न ऋग्वेदीयः )

सदा गावः शुचयो विश्वधायसः सदा देवा अरेपसः ॥ ४४२ ॥

आ याहि वनसा सह गावः सचन्त वर्तनिं यदूधभिः ॥ ४४३ ॥

त्रसदस्युः । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीय· )

उप प्रक्षे मधुमति क्षियन्तः पुष्येम रयिं धीमहे त इन्द्र ॥ ४४४ ॥

(४४१।१)

औहोइ । शम्पदाम् ॥ मघश्रया ऽ३१२३४इ । षिणाइ । नकाममव्रतोहिनोतिनस्पृशत् ॥

रयिमोऽ२३४५ इ ॥ डा ॥ ( दी० ४ । प० ७ । मा० ६ )४ ( थू । ७७५ )

(४४२।१) ॥ वाचः सामनी द्वे । द्वयोर्वाग्पङ्क्तिर्वाक् ॥

सादा ॥ गावश्शुचयोविश्वधायाऽ२३साः ॥ साऽ२३४दा ॥ दाइवाअरोऽ२३४वा ॥

पाऽ२३४साः ॥ ( दी० ४ । प० ५ । मा० ४ )५ ( नी । ७७६ )

(४४३।१)

औहोऽ३इ । आयाही ॥ वनाऽ२सासहा । गावःसच । तावर्त्तानीऽ२म् ॥

यात् । ऊऽ२३ ॥ धभिरोऽ२३४५इ ॥ डा ॥ ( दी० २ । प० ९ । मा० ४ )६ ( झी । ७७७ )

(४४४।१) ॥ माधुछन्दसम् । मधुछन्दा त्रिष्टुभ्मरुतः ॥

ओवा । उपप्रक्षेमधुमतिक्षियन्तः । ओवा ॥ ओइ । पुष्येमरयिन्धीमहेतआऽ२३इन्द्रा ॥

ओ । वाओवा ॥ ओ । वाहाऽ३१उवाऽ२३ ॥ ऊऽ२३४पा ॥

( दी० ५ । प० १० । मा० ६ )७ ( म्यू । ७७८ )

[साम-तन्त्र-सूत्राणि][७७५]४[७७६]५[७७७]६[७७८]७ ( पृथक् सूत्राणि न सन्ति)

पृषध्रः काण्वः । अग्निसूर्यौ । पङ्क्तिः ( ऋ० ८ । ५६ । ५ पूर्वार्धः )

अचेत्यग्निश्चिकितुर्हव्यवाट् स सुमद्रथः ॥ ४४७ ॥

त्रसदस्युः । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीयः )

अर्चन्त्यर्कं मरुतः स्वर्का आ स्तोभति श्रुतो युवा स इन्द्रः ॥ ४४५ ॥

त्रसदस्युः । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीयः )

प्र व इन्द्राय वृत्रहन्तमाय विप्राय गाथं गायत यं जुजोषते ॥ ४४६ ॥

अचेत्यग्निश्चिकितिर्हव्यवाड्न सुमद्रथः ॥ ४४७ ॥

---

(४४५।१) ॥ मारुतम् । मरुतस्त्रिष्टुब्मरुतः ॥

अर्चन्तिया॥ कम्मरुतःसुवाऽ२३र्काः॥ आस्तोभताइ॥ श्रुतोयुवासआइन्द्रोऽ३इवोऽ३॥

ऊऽ२३४पा ॥ ( दी० ३ । प० ५ । मा० ५ )८ ( णु । ७७९ )

(४४६।१) ॥ उद्वांशं साम । उद्वंशपुत्रःप्रजापतिस्त्रिष्टुबिन्द्रो वृत्रहा ॥

प्रवाः॥ आइन्द्रायवृत्रहान्तमाऽ२३या॥ वाइप्रायगाथंगाऽ१याऽ२ता॥

यांजुजौवाऽ३। उप्। पाऽ२तौऽ३५हाइ॥ ( दी० ३ । प० ६ । मा० ५ )९ ( टु । ७८० )

षोडश सप्तमः, दशमः खण्डः ॥ १० ॥ दशतिः ॥ ७ ॥

॥ इति प्रथमोऽर्धः प्रपाठकः ॥

(४४७।१) ॥ आग्नेये द्वे । द्वयोर्धुरो गायत्र्यग्निः ॥ णा णा

अचेतौ॥ अग्निः । चिकाऽ२३इतोऽ३ः॥ हाऽ२३व्याऽ३ । वाऽ२डेनाऽ२३४औहोवा ॥

सुमद्रथाऽ२३४५ः ॥ ( दी० ३ । प० ६ । मा० ५ )१०( टु । ७८१ )

(४४७।२)

अचेतिया॥ अःइश्चाइकाइतीऽ२३ः । होहोइ । औऽ३होऽ२३४५॥ हव्याऽ२३ ॥

वाऽ२डनाऽ२३४औहोवा॥ एऽ३ । सुमद्रथाऽ२३४५ः ॥( दी० ४ । प० ८ । मा० ७ )११ (दे । ७८२)

---

[साम-तन्त्र-सूत्राणि ][७७९]८[७८१]१० ( पृथक् सूत्राणि न सन्ति ) [७८०]९ उप् ७.११.६;

[७८२]११ णव आर्चिके २.१०.२; एर्द्वयोः ३.१०.३; वृषा ६.१.४; ( ७७९ न्द्रोऽ३२उवाऽ३ । इति सामतन्त्रभाष्ये )

बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा । अग्निः । द्विपदा विराट् । ( ऋ० ५ । २४ । १ )

अग्ने त्वं नो अन्तम उत त्राता शिवो भवा वरूथ्यः ॥ ४४८ ॥

अग्ने त्वं नो अन्तम उत त्राता शिवो भुवो वरूथ्यः ॥ ४४८ ॥

बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीयः )

भगो न चित्रो अग्निर्महोनां दधाति रत्नम् ॥ ४४९ ॥

---

(४४८।१) ॥ गूर्दः ( गूर्दम् ) । प्रजापतिः पंक्तिरग्निः ॥

ओग्नाइ ॥ त्वन्नोऽ२३आ । हिम्माऽ२३ । ताऽ२३४माः । उतत्राताशिवोभुवः ॥ शिवोभुवाऽ२३ः ॥ वरोवा । थाऽ५योऽ६हाइ ॥ ( दी० ४ । प० ८ । मा० ६ )१२ ( दू । ७८३ )

(४४८।२) ॥ अत्यर्दः । विश्वामित्रः पंक्तिरग्निः ॥

अग्नौ । होइ । त्वौ । होइ ॥ नोअन्तमाऽ३१उवाऽ२३ ॥ ऊऽ२३४ता ॥ त्राताओऽ२३४वा ॥ शिवोभुवाऽ२३४५ः ॥ ( दी० ५ । प० ८ । मा० ६ )१३ ( बू । ७८४ )

(४४८।३) ॥ गूर्दः । प्रजापतिः पंक्तिरग्निः ॥

अग्नेतूऽ२वन्नोअन्तमाः ॥ उतत्राताशिवोभुवः ॥ वराऽ२३ ॥ ओहोहोऽ२३४वा । थाऽ५योऽ६हाइ ॥ ( दी० ६ । प० ५ । मा० ४ ) १४( डी । ७८५ )

(४४८।४) ॥ अत्यर्दः । विश्वामित्रः पंक्तिरग्निः ॥

अग्ने । हाऽ२३इ । त्वन्नोअ । तमाः ॥ उताऽ२ । हाऽ२इ । औऽ३होऽ३१इ ॥ त्राताऽ२ ॥ शिवोऽ३४५ ॥ भूऽ२३४वाः ॥ ( दी० २ । प० १० । मा० ६ )१५ ( जू । ७८६ )

(४४९।१) ॥ सान्तनिके द्वे । द्वयोः प्रजापतिर्गायत्र्यग्निः ॥

भागाः ॥ नाचित्रः ॥ अग्निर्महोऽ२३नाऽ३म् ॥ दाऽ२धाऽ२३४औहोवा ॥ तिरत्नाऽ२३४५म् ॥ ( दी० २ । प० ५ । मा० ५ ) १६ ( जु । ७८७ )

(४४९।२)

भगोनचित्राः ॥ अग्निर्महोऽ२३नाऽ३म् ॥ दाऽ२धऽ२३४औहोवा ॥ एऽ३ । तिरत्नाऽ२३४५म् ॥ ( दी० ३ । प० ५ । मा० ८ )१७ ( णी । ७८८ )

---

[ साम-तन्त्र-सूत्राणि ][७८३]१२ [७८४]१३ [७८५] ४ [७८७]१६ [७८८]१७ ( पृथक् सूत्राणि न सन्ति ) [७८६] १५ शता ४.१०.१. घञ्शतारे ६.९.१; ( ७८४;७८६ द्वितीय-चतुर्थयोस्साम्नाः वरूथ्य इति पदस्य गानं नास्ति )

संवर्त आङ्गिरसः । उषाः । द्विपदा विराट् । ( ऋ० १० । १७२ । ४ )

उषा अप स्वसुस्तमः सं वर्तयति वर्तनिं सुजातता ॥ ४५१ ॥

भुवन आप्त्यः, साधनो वा भौवनः । विश्वेदेवाः । द्विपदा ( त्रिष्टुप् ) विराट् । ( ऋ० १० । १५७ । १ )

इमा नु कं भुवना सीषधामेन्द्रश्च विश्वे च देवाः ॥ ४५२ ॥

बन्धुः सुबन्धुः श्रुतबन्धुर्विप्रबन्धुश्च क्रमेण गोपायना लौपायना वा । इन्द्रः । द्विपदा विराट् । ( न ऋग्वेदीयः )

विश्वस्य प्र स्तोभ पुरो वा सन्यदि वेह नूनम् ॥ ४५० ॥

उषा अप स्वसुष्टमः सं वर्तयति वर्तनिं सुजातता ॥ ४५१ ॥

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ॥ ४५२ ॥

---

(४५०।१) ॥ धनम् ( द्वे । द्वयोः ) प्रजापतिर्गायत्री विश्वेदेवाः ॥

विश्वस्या ॥ प्रस्तोभाऽ२ । पुरोवासाऽ३न् । येदिवेऽ२३४हा ॥ नूऽ२३ ॥
नाऽ२माऽ२३४औहोवा ॥ धाऽ२३४नाम् ॥ ( दी० ४ । प० ७ । मा० ३ )१८ ( थि । ७८९ )

(४५०।२) ॥ धर्मसाम ॥

औहोइविश्वस्या ॥ प्रस्तोभाऽ२ । पुरोहोवाऽ३हाइ । वासाऽ२न् । यदिवेहा ॥
नूऽ२३ ॥ नाऽ२माऽ२३४औहोवा ॥ धाऽ२३४माः ॥ ( दी० ७ । प० ८ । मा० ४ )१९ ( जी । ७९० )

(४५१।१) ॥ उषसस्साम । उषा पंक्तिरुषा ॥

उषाअपा ॥ स्वासुष्टाऽ२३४माः । संवाऽ२र्त्तया । तिवाऽ२र्त्ताऽ२३४नीम् ॥
सूऽ२जाऽ२३४औहोवा ॥ एऽ३ । तताऽ२३४५ ॥ ( दी० ३ । प० ७ । मा० ४ )२०( ठी । ७९१ )

(४५२।१) ॥ भारद्वाजम् । भरद्वाजः पंक्तिर्विश्वेदेवाः ॥

इमानुकंभूऽ५वना ॥ सीषधाऽ२इमाउवाऽ३ । ईऽ३४हा । इन्द्रश्चवाऽ२इश्चाउवाऽ३ ।
ईऽ३४हा ॥ चदेऽ३ । वाऽ२याऽ२३४औहोवा ॥ वीऽ२३४शाः ॥
( दी० ४ । प० ८ । मा० ६ )२१( दू । ७९२ )

---

[ साम-तन्त्र-सूत्राणि] [७८९]१८ ह्रीषीः १.५.८; [७९०]१९[७९१]२० [७९२]२१ (पृथक् सूत्राणि न सन्ति )
( ७९२ अत्र: ' माऽ२उ । श्वोऽ२उ । ' एवं मा० मा० पाठः । )

भरद्वाजो बार्हस्पत्यः । इन्द्रः । द्विपदा ( त्रिष्टुप् ) विराट् । ( ऋ० ६ । १७ । १५ )

अया वाजं देवहितं सनेम मदेम शतहिमाः सुवीराः ॥ ४५४ ॥

कवषः ऐलूषः । विश्वेदेवाः । द्विपदा विराट् । ( न ऋग्वेदीयः )

वि स्रुतयो यथा पथ इन्द्र त्वद्यन्तु रातयः ॥ ४५३ ॥

अया वाजं देवहितꣳ सनेम मदेम शतहिमाः सुवीराः ॥ ४५४ ॥

आत्रेयः । विश्वेदेवाः । द्विपदा विराट् । ( न ऋग्वेदीयः )

ऊर्जा मित्रो वरुणः पिन्वतेडाः पीवरीमिषं कृणुही न इन्द्र ॥४५५॥

वसिष्ठो मैत्रावरुणिः । इन्द्रः । एकपदा । ( न ऋग्वेदीयः )

इन्द्रो विश्वस्य राजति ॥ ४५६ ॥

---

(४५३।१)　॥ रातिसाम । इन्द्रो गायत्रीन्द्रः ॥

विस्रूविस्रू ॥ तायाऽ२स्तायाऽ२ः । यथापथः ॥ आइन्द्राऽ२त्वाद्याऽ२३ ॥

तुरोऽ२३४वा । ताऽ५योऽ६हाइ ॥　( दी० १ । प० ६ । मा० ४ )२१( ( की । ७९३ )

(४५४।१)　॥ भारद्वाजम् । भरद्वाजस्त्रिष्टुबिन्द्रः ॥

अयावाजाम् ॥ दाइवहि । तꣳसनेमा । मदेमशऽ३ताहिमाऽ२ः ॥ शताऽ२३ ॥

हाऽ२इमाऽ२३४औहोवा ॥ सुवीऽ३राऽ२३४५ः ॥　( दी० ५ । प० ७ । मा० ६ )२३( फ़ । ७९४ )

(४५५।१)　॥ ऐपम् । इषस्त्रिष्टुभिमत्रावरुणौ ॥

ऊर्जा ॥ मित्रोवरुणःपिन्वताऽ२३इडाः ॥ पीवरीमिषंकृणुहीनआइन्द्राऽ३उवाऽ२ ॥ ऊऽ२३४पा ॥

( दी० ४ । प० ४ । मा० ५ )२४ ( घ्यु । ७९५)

(४५६।१)　॥ वैराजे द्वे । द्वयोरिन्द्रो गायत्रीन्द्रः ॥

इन्द्रोऽ३४ ॥ विश्वस्यरा ॥ जतिहोऽ२३४५इ ॥ डा ॥　( दी० १ । प० ४ । मा० १ )२५( घ । ७९६ )

(४५६।२)

इन्द्राऽ२होऽ१इ ॥ व्राऽ२इश्वा ॥ स्यराऽ२जति ॥ होवाऽ२३होऽ२३४५इ ॥ डा ॥

( दी० नास्ते । प० ५ । मा० ३ ) २६( चि । ७९७ )

॥ रासदशाग्रम्, एकादशः खण्डः ॥ ११ ॥ दशतिः ॥ ८ ॥

॥ इति द्वैपदमैन्द्रं समाप्तम् ॥

---

[साम-तन्त्र-सूत्राणि ][७९३]२२[७९४]२३[७९५]२४[७९६]२५[७९७]२६ ( पृथक् सूत्राणि न सन्ति )

( ७९५ न्द्राऽ३२उ । सा० तं० भा० पाठः । )

गृत्समदः शौनकः । इन्द्रः । अष्टिः । ( ऋ० २ । २२ । १ )

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृपत्सोममपिबद्विष्णुना सुतं यथावशत् ।
स ईं ममाद महि कर्म कर्तवे महामुरुं सैनं सश्चद्देवो देवं सत्यमिन्द्रं सत्य इन्दुः ॥४५७॥

त्रिकद्रुकेषु महिषो यवाशिरं तुविशुष्मस्तृम्पत्सोममपिबाद्विष्णुना सुतं यथावशम् ।
स ईं ममाद महि कर्म कर्तवे महामुरु॰ सैन॰ सश्चद्देवो देव॰ सत्य·इन्दुरस-
त्यमिन्द्रम् ॥ ४५७ ॥

गौराङ्गिरसः । सूर्यः । अतिजगती । ( न ऋग्वेदीयः )

अय॰ सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म ।
ब्रध्नः समीचीरुषसः समैरयदरेपसः सचेतसः स्वसरे मन्युमन्तश्चिता गोः ॥४५८॥

(४५७।१) ॥ वाजजित् । प्रजापतिरष्टिर्विष्णुः ॥

ओइत्रिक । द्रुकाइ । षूऽ३महिषो । यवाशिरम् । तुवीशुष्मः॥ ओइतृऽ२३४०पात् ।
सोमाम् । अपिबाऽ३द्वि । ष्णुनासुतम् । यथावशम् ॥ ओइसाऽ२३४ईम् ।
ममा । दाऽ३महिक । मकर्तवे । महामुरुम् ॥ ओइसाऽ२३४इनाम् ।
सश्चात् । देवोदेवाम् । सत्यइन्दुःसत्याऽ५मिन्द्राउ ॥ वा ॥

( दी० ९ । प० २० । मा० २० )२७ ( नौ । ७९८ )

(४५८।१) ॥ गौरांगिरसस्य सामनी द्वे । द्वयोर्गौरतिजगतीन्द्रः ॥

अय॰सहोहाइ॥ स्रमानाऽ२३४वाः । दृशाःकवीनांमतिर्ज्यो । तिर्विधाऽ२३४र्मा ॥
ब्रध्नाःसमाइचीरुषसः । समाइराऽ१याऽ२त् । अराऽ३ । होवाऽ३ ।
पाऽ । सस्सचे । तसाऽ३ः॥ स्वासरे॥ मन्युमाऽ२३०ताः॥ चितो ।
याऽ२३४ओहोवा॥ गोऽ२३४५ः ॥

( दी० ८ । प० १६ । मा० १० )२८ ( टौ । ७९९ )

(४५८।२)

अय॰सहस्रमानाऽ६वाः॥ दृशाः कवीनांमतिर्ज्यो । तिर्विधाऽ२३र्मा ॥
ब्रध्नाःसमाइचीरुषसः । समाइराऽ१याऽ२३त् । ओऽ३वा । अरेपसःसचेतसः ।
स्वासरे॥ मन्युमाऽ२३ताः । आऽ३वा ॥ चिताऽ३ः । गोऽ२राऽ२३४ओहोवा ॥
बाऽ२३४५ ॥

( दी० १० । प० १३ । मा० ९ )२९ ( बो । ८०० )

[ साम-तन्त्र-सूत्राणि ] [७९८]२७ द्रुस्य ३.१०.२, यवा ५.५.१०; लघ्वनः ७.३.१;
[७९९]२८ [८००]२९ ( पृथक् सूत्राणि न सान्ति )

परुच्छेपो दैवोदासिः । इन्द्रः । अत्यष्टिः । ( ऋ० १ । १३० । १ )

एन्द्रं याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्तं राजेव सत्पतिः ।
हवामहे त्वा वयं प्रयस्वन्तः सुते सचा ।
पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥ ४५९ ॥

रेभः काश्यपः । इन्द्रः । अतिजगती । ( ऋ० ८ । ९७ । १३ )

तमिन्द्रं जोहवीमि मघवानमुग्रं सत्रा दधानमप्रतिष्कुतं शवांसि ।
मंहिष्ठो गीर्भिरा च यज्ञियो ववर्तद्राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४६० ॥

एन्द्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्ता राजेव सत्पतिः ।
हवामहे त्वा प्रयस्वन्तः सुतेष्वा पुत्रासो न पितरं वाजसातये मꣳहिष्ठं
वाजसातये ॥ ४५९ ॥

तमिन्द्रं जोहवीमि मघवानमुग्रꣳ सत्रा दधानमप्रतिष्कुतꣳ श्रवाꣳसि भूरि ।
मꣳहिष्ठो गीर्भिरा च यज्ञियो ववर्त्त राये नो विश्वा सुपथा कृणोतु वज्री ॥ ४६० ॥

---

(४५९।१) ॥ प्रयस्वत् । प्रजापति (रृषि) रत्यष्टिरिन्द्रः ॥

एन्द्रयाह्युपना: ॥ पाराऽ१वाऽ२३४ताः । नायमच्छा । विदथानाइ ।
वासत्पाऽ२३४तीः । अस्ताराऽ३जेऽ३ । वासत्पाऽ२३४तीः ।
हवामहेत्वाप्रयस्वन्ताः । सुताइपूऽ३वा ॥ पुत्रासोना । पितरंवा ।
जासाताऽ२३४याइ ॥ मꣳहाइष्ठाऽ३०वाऽ३ ॥ जाऽ२३साऽ३ ।
ताऽ३४५योऽ६हाइ ॥ ( दी० ९ । प० १५ । मा० १० )३०( नौ । ८०१ )

(४६०।१) ॥ अक्षय्यम् । रेवत्प्रजापतिरतिजगतीन्द्रः ॥

तमिन्द्रंजोहवीमिमघवानाम् ॥ ऊऽ२३४ग्राम् । सत्राहोइ । दधानमप्रताऽ२इष्कूऽ२३४ताम् ।
श्रवाऽ२३ꣳसाऽ२इ । भूऽ२३४री । मꣳहिष्ठागीर्भिरा । चयाऽ२ज्ञाऽ२३४याः ।
वावार्त्ताऽ२ ॥ रायेहोइ ॥ नोविश्वासुपाऽ२३४था । कृणोऽ३ । तूऽ२वा२३४औहोवा ॥
ऊऽ२३४पा ॥ ( दी० १४ । प० १४ । मा० ९ )३१ ( ध्वो । ८०२ )

---

[साम-तन्त्र-सूत्राणि][८०१]३० ( पृथक् सूत्राणि न सन्ति ) [८०२]३१ वर्त्ति ८ १.६:
सा०गा० २७

परुच्छेपो दैवोदासिः । विश्वेदेवाः । अत्यष्टिः । ( ऋ० १ । १३९ । १ )

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे ।
यद्ध क्राणा विवस्वति नाभा संदायि नव्यसी ।
अध प्र सू न उप यन्तु धीतयो देवाँ अच्छा न धीतयः　　॥ ४६१ ॥

एवयामरुदात्रेयः । मरुतः । अतिजगती । ( ऋ० ५ । ८७ । १ )

प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्रयज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ ४६२ ॥

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु त्यच्छर्धो दिव्यं वृणीमह इन्द्रवायू वृणीमहे
यद्ध क्राणा विवस्वते नाभा सन्दाय नव्यसे ।
अध प्र नूनमुप यन्ति धीतयो देवाँ अच्छा न धीतयः ॥ ४६१ ॥
प्र वो महे मतयो यन्तु विष्णवे मरुत्वते गिरिजा एवयामरुत् ।
प्र शर्धाय प्र यज्यवे सुखादये तवसे भन्ददिष्टये धुनिव्रताय शवसे ॥ ४६२ ॥

---

(४६१।१)　　॥ याज्ञतुरम् । यज्ञतुरोऽत्यष्टिरिन्द्रः ॥

अस्तुश्रौषाट् ॥ पुरोअग्निंधियादधे । हाऽ । औऽ३होऽ२३४वा । आनुत्यच्छर्द्धोदि ।
व्याम् । वृणाऽ२३हाइ । माऽ२३४हे । इन्द्रावाऽ३यूऽ२ । वृणीऽ२माऽ२३४हाइ ।
यद्धक्राणाविवाऽ१स्वाऽ३ताइ । नाभासन्दायनाऽ३ । व्यासाइ । अधप्रनूनमुपया ।
तिधीतायाऽ२३ः । हाऽ । औऽ३होऽ२३४वा ॥ दाइवाऽ१ऽअच्छाऽ२३ ।
हाऽ । औऽ३होऽ२३४वा ॥ नधोऽ२३४वा । ताऽ५योऽ६हाइ ॥

( दी० १३ । प० २२ । मा० ११ ) ३२( ठ । ८०३ )

(४६२।१)　　॥ एवयामरुतः साम । एवयामरुदतिजगतीन्द्रः ॥

प्राऽ२३४ । वोमहेमतयोयन्तुविष्णवो । हाइ ॥ मरुत्वताऽ३इगिरिजाऽ३४ः ।
हाहोइ । एवायाऽ२ । माऽ२३४रुत् । प्राशर्द्धायाऽ२ । प्रायज्यावाऽ२३इ ।
सुखादाऽ२३४याइ । तवसेभंददिष्टये ॥ धुनाइव्राऽ३ताऽ२ ॥ याऽ२शाऽ२३४औहोवा ॥
वाऽ२३४से ॥　　( दी० ९ । प० १४ । मा० ९ ) ३३( धो । ८०४ )

---

[साम-तन्त्र-सूत्राणि] [८०३]३२ [८०४]३३ ( पृथक् सूत्राणि न सन्ति )

अनानतः पारुच्छेपिः । पवमानः सोमः । अत्यष्टिः । ( ऋ० ९ । १११ । १ )

अया रुचा हरिण्या पुनानो विश्वा द्वेषांसि तरति स्वयुग्वभिः सूरो न स्वयुग्वभिः ।
धारा सुतस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियात्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ४६३ ॥

अया रुचा हरिण्या पुनानो विश्वा द्वेषाꣳसि तरति सयुग्वभिः सूरो न सयुग्वभिः ।
धारा पृष्ठस्य रोचते पुनानो अरुषो हरिः ।
विश्वा यद्रूपा परियास्यृक्वभिः सप्तास्येभिर्ऋक्वभिः ॥ ४६३ ॥

---

(४६३।१)  ॥ विषमानि त्रीणि, ( विषमाणानि वा )। भरद्वाजोऽत्यष्टिः सोमः ॥

आया॥ रुचा । हरि । ण्यापुनानाः । विश्वाद्वेषाꣳसितरतीऽ२३ साऽ३युग्वभिः ॥
सूरोऽ२३नाऽ३ ॥ साऽ२यू२३४औहोवा॥ ग्वाऽ२३४भीः ॥

( दी० ६ । प० ८ । मा० ४ )३४ ( गी । ८०५ )

(४६३।२)

अयारुचाहरिण्या॥ पुनानः । विश्वाद्वाऽ२३इषा । साइतर । त्यौहो । वाऽ३हाऽ३इ ।
सायूऽ२ग्वाऽ२३४भीः॥ सूरोऽ२३ना ॥ सयूऽ३ग्वाऽ५माऽ६५६इः ॥

( दी० ५ । प० ९ । मा० ७ )३५ ( डो । ८०६ )

(४६३।३)

अयारुचाहरिण्या । पूऽ२३४ । नानोविश्वाद्वेषा । साइतराति । सायुग्वाभीऽ२ः ।
सूरोनाऽ३ । सायूऽ२ग्वाऽ२३४भीः । धारापृष्ठा । स्यारोऽ२चताइ ।
पुनानोआऽ३ । रूपोहाऽ२३४रीः । विश्वायद्रू । पापरिया । सात्र्क्काभीऽ२ः ।
सप्तासीऽ३येऽ३॥ भाऽ२३इराऽ३ । क्काऽ३४५भोऽ६हाइ ॥

( दी० १० । प० १७ । मा० १० )३६( फौ । ८०७ )

---

[साम-तन्त्र-सूत्राणि][८०५]३४ [८०६]३५ ( पृथक् सूत्राणि न सन्ति )
[८०७]३६ ऊ०ग० ९ ३ ३ ० [ सामतन्त्रभाष्यपाठानुसारेण =३३ गानं उदाहरणम् । ]

परुच्छेपो दैवोदासिः । अग्निः । अत्यष्टिः । ( ऋ० १ । १२७ । १ )

अग्निं होतारं मन्ये दास्वन्तं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसम् ।

य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।

घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ ४६५ ॥

नकुलः । सविता । अत्यष्टिः । ( न ऋग्वेदीयः )

अभि त्यं देवꣳ सवितारमोण्योः कविक्रतुमर्चामि सत्यसवꣳ रत्नधामभि प्रियं मतिम् ।

ऊर्ध्वा यस्यामतिर्भा अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतुः कृपा स्वः ॥४६४

अग्निꣳ होतारं मन्ये दास्वन्तं वसोः सूनुꣳ सहसो जातवेदसं विप्रं न जातवेदसम् ।

य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।

घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य सर्पिषः ॥ ४६५ ॥

---

(४६४।१)      ॥ सवितुस्साम । सवितात्यष्टिः सविता ॥

अभित्यन्देवꣳसवितारम् । औहोहोवाहाइ ॥ ओणाऽ२३४योः । कविक्राऽ२३४तूम् ।

आर्चामीऽ२३४सा । त्यासावाऽ२३४ꣳरा । त्नधामाऽ२३४मी ।

प्रियम्माऽ२३४तीम् । औहोऔहोवाऽ२३४हाउ ॥ ऊर्ध्वायाऽ२३४स्या ।

आमातीऽ२३४र्भाः । अदिद्युऽ२३४तात् । सवीमाऽ२३४नी ।

औहोऔहोवाऽ२३४हाउ ॥ हीरण्याऽ२३४पा । णीरामीऽ२३४मी ।

तसुक्राऽ२३४तूः । औहोऔहोवाऽ२३४५हाउ । वा ॥ एऽ३ । कृपासुवाऽ२३४५ः ॥

( दी० १७ । प० २१ । मा० १५ )३७( चु । ८०८ )

(४६५।१)      ॥ भारद्वाजे द्वे । भरद्वाजोऽत्यष्टिरग्निः ॥

अग्निꣳहोता ॥ रम्मन्येऽ३दास्वन्तम् । ओऽ३वाऽ३ । वासोःसूऽ२३४नूम् ।

सहसोजाऽ३तावेऽ१दासाऽ२म् । विप्रन्नजा । ओऽ३वाऽ३ । तवेऽ२दाऽ२३४साम् ।

यऊर्ध्वाऽ१याऽ२ । सुवाध्वाऽ१राऽ२ः । देवादेवा । ओऽ३वाऽ३ । चियाऽ२काऽ२३४पा ।

घृतावा । स्यविभ्राऽ२ष्टिम् । अनुशुक्रशा । ओऽ३वाऽ३ । चिषः ॥

आजुह्वाऽ२३ना ॥ स्यसा । ओऽ३वाऽ३ । पाऽ२३षाऽ२३४औहोवा ॥

ऊऽ२३४पा ॥      ( दी० १३ । प० २३ । मा० १० )३८( डु । ८०९ )

---

[साम-तन्त्र-सूत्राणि][८०८]३७ आघोपिणि ५.३.१; नइ ११.१०.६;      [८०९]३८ रेकि तृतीयं भाष् ३.२.७;
ओष्ठ्यपूर्वादि॰ ७.६.६; ग॰ १२.८.८,

(४६५।२)

अग्निꣳहोतारंमन्ये । दाऽ२३४ । स्वन्तंवसोःसूनुम् ॥ सहसोजाऽ३तावेऽ१दासाऽ२म् ।
विप्रन्नजाऽ३तावेऽ१दासाऽ२म् । यऊर्ध्वयाऽ३स्वध्वाराऽ२ः ।
देवोदेवाऽ३चायाऽ१कृपाऽ२ । घृतास्यविभ्राष्टिमनुशु । क्राशोऽ१चिषाऽ२ः ।
आजूह्वाऽ३नाऽ३ ॥ स्याऽ२३साऽ३ । पाऽ३४५इषोऽ६हाइ ॥

( दी० १६ । प० १२ । मा० ८ )३९( मै । ८१० )

(४६५।३)　　॥ अवभृथसाम । बृहस्पतिरत्यष्टिरग्निः ॥

अहावोहाऽ२३४वाः । अहावोहाऽ२३४वाः । अहावोहाऽ२३४वाः ।
अग्निष्पती । प्रतिदहती । अग्निꣳहो । तारम्माऽ३न्येऽ३दास्वन्तम् ॥ वसोः ।
सूनुꣳसहसोजाऽ३ताऽ३वेदसम् । विप्राम् । नजाऽ३ताऽ३वेदसम् । यऊ ।
र्ध्वयाऽ३सूऽ३वध्वरः । देवो । देवाऽ३चीऽ३याकृपा ॥ घृता ।
स्यविभ्राष्टिमनुशूऽ३क्राऽ३शोचिषः ॥ आजू । ह्वानाऽ३स्याऽ३सर्पिषः ।
अहावोहाऽ२३४वाः । अहावोहाऽ२३४वाः । अहावोहाऽ२३४वाः ।
अग्निष्पती । प्रतिदहाऽ५ताऽ६५६इ ॥ एऽ३ । विश्वꣳसमत्रिणंदह । एऽ३ । विश्वꣳसमत्रिणंदह
एऽ३ । विश्वꣳसमात्रिणंदहाऽ२३४५ ॥

( दी० १४ । प० ३० । मा० १६ )४० ( नृ । ८११ )

(४६५।४)　　॥ प्रवर्ग्यसाम । बृहस्पतिरत्यष्टिरग्निः ॥

त्यग्नाइः । प्रतिदहती । हाउहोऽ५हाउ । अग्निꣳहो । तारम्माऽ३न्येऽ३दास्वन्तम् ॥ वसोः ।
सूनुꣳसहसोजाऽ३ताऽ३वेदसम् । विप्राम् । नजाऽ३ताऽ३वेदसम् । यऊ । र्ध्वयाऽ३सूऽ३वध्वरः ॥
देवा । देवाऽ३चीऽ३याकृपा ॥ घृता । स्यविभ्राष्टिमनुशूऽ३क्राऽ३शोचिषः ॥
आजू । ह्वानाऽ३स्याऽ३सार्पिषः । त्यग्नाइः । प्रतिदहती । हाउहोऽ५हाउ ।
वा ॥ एऽ३ । विश्वꣳसमात्रिणंदह । एऽ३ । विश्वंन्यत्रिणंदह । एऽ३ । विश्वंन्यत्रिणंदहाऽ२३४५ ॥

( दी० १४ । प० २७ । मा० १७ )४१( थे । ८१२ )

---

[साम-तन्त्र-सूत्राणि][८१०]३९ गचतुर्थिनि वृद्धान २ ५ ५. [८११]४० ईयाप १.३.१; [८१२]४१ म. ९ ७ १. ओइत्री ११.१०.८.

गृत्समदः शौनकः । इन्द्रः । अष्टिः अतिशक्वरी वा । ( ऋ० २ । २२ । ४ )

तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
यद्देवस्य शवसा प्रारिणा असुं रिणन्नपः ।
भुवद्विश्वमभ्यादेवमोजसा विदादूर्जं शतक्रतुर्विदादिषम्       ॥ ४६६ ॥

अमहीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । १० )

उच्चा ते जातमन्धसो दिवि षद्भूम्या ददे । उग्रं शर्म महि श्रवः ॥ ४६७ ॥

तव त्यन्नर्यं नृतोऽप इन्द्र प्रथमं पूर्व्यं दिवि प्रवाच्यं कृतम् ।
यो देवस्य शवसा प्रारिणा असु रिणन्नपः ।
भुवो विश्वमभ्यदेवमोजसा विदेदूर्जꣳ शतक्रतुर्विदेदिषम् ॥ ४६६ ॥
उच्चा ते जातमन्धसो दिवि सद्भूम्या ददे ।
उग्रꣳशर्म महि श्रवः ॥ ४६७ ॥

---

(४६६।१)      ॥ ऐषम् । इषोऽष्टिरिन्द्रः ॥

ताऽ२३४वत्यन्नाऽ५रियन्नृताउ॥ अपइन्द्राऽ२ । प्रथमंपूऽ२ । र्वियंदिवि । प्रवा । चियंकृतम् । योदेवास्याऽ२ । शवसाप्राऽ२ । रिणाअसु । रिणन्नपः । भुवाविश्वाऽ२म् । अभ्यदाऽ२इ । वमोजसा । विदेदूर्जम् ॥ शताक्राऽ२३४तूः ॥ विदाऽ६इदिषाउ ॥ वा ॥      ( दी० ९ । प० १७ । मा० ११ )४२ ( ध । ८१३ )

षोडश नवमः, द्वादशः खण्डः ॥ १२ ॥ दशतिः ॥ ८ ॥
॥ इति ग्रामे गेय-गाने द्वादशस्यार्द्धः प्रपाठकः ॥
॥ इत्यैन्द्राख्यतृतीये गाने इन्द्रपुच्छाख्यं सप्तमं तन्त्रं समाप्तम् ॥
॥ इति ऐन्द्रं काण्डम् ॥
॥ इति चतुर्थोऽध्यायः ॥ ४ ॥

अथ पावमानं काण्डम् ।

(४६७।१)      ॥ आजिगम् । अजिगो प्रजापतिर्वा गायत्री सोमः ॥

उच्चा । तजाऽ२तामन्धासाऽ२ः । दिविसद्भूम्याददाइ ॥ उग्रꣳशाऽ२३र्माऽ२ ॥ माऽ२हाऽ२३४औहोवा॥ उप् । श्राऽ२३४वाः ॥      ( दी० ६ । प० ७ । मा० ५ )१ ( खु । ८१४ )

---

[साम-तन्त्र-सूत्राणि ][८१३]४२ ( पृथक् सूत्राणि न सन्ति )      [८१४]१ द्वितीयपदे द्वितीयः १.५.४:

(४६७।२) ॥ आभीकम् । अभिरसो गायत्री सोमः ॥

उच्चातेऽ२३४जा । तमन्धाऽ२३४साः । दिवाइसाऽ२३४ङ्कू॥ मियाद्दाइ ॥
उग्रंऽशाऽ२३र्मा॥ महायेऽ३ । श्राऽ२वाऽ२३४औहोवा ॥ वाऽ२३४ऽ६इ ॥

( दी० ४ । प० ८ । मा० ५ )२ ( दु । ८१५ )

(४६७।३) ॥ ऋषभः पावमानम् । ऋषभो गायत्री सोमः ॥

हाहाउच्चातेजा॥ हाऽ३ । हाऽ३इ । तामाऽ२०धाऽ२३४साः ।
दिविसङ्कूमियाऽ१दाऽ३दे ॥ उग्रंऽशाऽ२३४र्मा॥ ओमोऽ३ । महोवा । श्राऽ५वोऽ६हाइ ॥

( दी० ५ । प० ९ । मा० ४ )३ ( भी । ८१६ )

(४६७।४) ॥ आभीकम् । अंगिरसो गायत्री सोमः ॥

ऊऽ२३४च्चातेजाऽ५ । तमोहो०धासाः॥ दिविसङ्कूमियाऽ१दाऽ३दे ॥
उग्रंऽशाऽ२३४र्मा॥ माहाऽ३उवाऽ२४३ । श्राऽ२४५वोऽ६हाइ ॥

( दी० ४ । प० ६ । मा० ३ )४ ( ति । ८१७ )

(४६७।५) ॥ वाभ्रवे द्वे । द्वयोः वभ्रुर्गायत्री सोमः ॥

उच्चातेजा॥ तम । धासाऽ२३ः । ओमोऽ३वा । दिविसङ्कू ।
मियादाऽ१देऽ२३ । ओमोऽ३वा ॥ उग्राऽशाऽ१र्मोऽ२३॥ ओमोऽ३वाऽ३ ।
मोऽ२हाऽ२३४औहोवा॥ श्रवाऽ३ईऽ२३४५ ॥ ( दी० ८ । प० ११ । मा० ३ )५ ( दि । ८१८ )

( ४६७।६ )

उच्चातेजा॥ तमन्धाऽ२३साः । दिविसङ्कू । मियादाऽ२३दाइ ॥ ऊग्राऽ३ऽहाइ ।
शार्मोऽ३हाइ॥ महाऽ३होयेऽ३ । श्राऽ२वाऽ२३४औहोवा॥ श्वाऽ२३४र्मः ॥

( दी० ६ । प० ९ । मा० ६ )६ ( घू । ८१९ )

(४६७।७) ॥ इन्द्राण्याः साम । इन्द्राणी गायत्री सोमः ॥

उच्चातेजातमा॥ धासाऽ२३ः । ओमोऽ३वा । दिविसङ्कू । मियादाऽ१देऽ२३ ।
ओमोऽ३वा॥ उग्राऽशाऽ१र्मोऽ२३ । ओमोऽ३वा॥ महायेऽ३ । श्राऽ२वाऽ२३४औहोवा ॥
ऊऽ३२३४पा ॥ ( दी० ९ । प० ११ । मा० २ ) ७( त्ला । ८२० )

[ साम-तन्त्र-सूत्राणि] [८१५]१[८१६]३[८१७]४[८१८]५[८१९]६[८२०]७ ( पृथक् सूत्राणि न सन्ति )

(४६७।८) ॥ शैशवे द्वे । द्वयोः शिशुर्गायत्री सोमः ॥

उच्चातेजातमन्धासाः॥ दिविसद्भूम्याददाइ॥ उग्रꣳशाऽ२३४र्मा ॥

महाऽ३इश्राऽ५वाऽ६५६ः ॥ ( दी० ५ । प० ४ । मा० ४ )८( भी । ८२१ )

(४६७।९)

उच्चातेजातमन्धाऽ६साः॥ दिविसद्भू । म्यादाऽ२३दाइ । उ । ग्रꣳशाऽ२३र्मा ॥

महाऽ२ । हाऽ२इ । औऽ३होऽ३१इ । श्रवाऽ२ः । हाऽ२इ । औऽ३होऽ३१इ ॥

इयाऽ३होइ । इयोऽ२३४५वाऽ६५६ ॥ ऊऽ२३४५ ॥ ( दी० ५ । प० १४ । मा० ८ )९( भैं । ८२२ )

(४६७।१०) ॥ दोहसामनी द्वे । द्वयोः प्रजापतिर्गायत्री सोमः ॥

उच्चाऽ३४औहोवा॥ तेजाऽ२ । तमाऽ३४५ । धाऽ२३४साः ।

दिविसद्भूम्याददे॥ ऊग्रꣳशाऽ२३र्मा॥ महिश्रवा । औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० ५ । प० १० । मा० ३ )१० ( मि । ८२३ )

(४६७।११) ॥ दोहीयसाम ॥

उचातेजातमन्धसादोहाइदोहाऽ६ए॥ दिविसद्भूम्याददे । दोऽ३हाइ ।

दोऽ३हाऽ३ए॥ उग्रꣳशाऽ२३र्मा । दोऽ३हाइ । दोऽ३हाऽ३ए॥ महिश्राऽ२३वाऽ३४३ः ।

ओऽ२३४५इ ॥ डा ॥ ( दी० १० । प० १० । मा० ८ ) ११( मै । ८२४ )

(४६७।१२) ॥ इन्द्राण्याः साम । इन्द्राणी गायत्री सोमः ॥

उच्चातेजातमन्धसाः॥ दिवाइसाऽ२३४द्भू । मियाऽ२ददे । ओम् ।

औऽ३वा । ओऽ३वा । ओऽ३म्म । ववाऽ२३होइ॥ उग्रꣳशाऽ२३र्मा ।

ओऽ३वा । ओऽ३वा । ववाऽ२३होइ॥ महिश्रवोऽ२ । याऽ२३४औहोवा ॥

ययुरेऽ२३४५ ॥ ( दी० ६ । प० १४ । मा० ६ )१२( घू । ८२५ )

(४६७।१३) ॥ आमहीयवम् । अमहीयुर्गायत्री सोमः ॥

उच्चाताऽ३इजातमन्धसाः॥ दिवाइसाऽ१द्भूऽ२ । मियाऽ२३ददाइ॥

उग्रꣳशर्मा॥ महाऽ२३इश्रवाउ । वाऽ३॥ स्तौषेऽ२३४५ ॥

( दी० ३ । प० ७ । मा० ६ )१३ ( ट्र । ८२६ )

---

[ साम-तन्त्र-सूत्राणि ][८२१]८[८२२]९[८२३]१०[८२४]११ ( पृथक् सूत्राणि न सन्ति )

[८२५]१२ दधिविदपूर्वा १.३.३; [८२६]१३ उपान्त्यं च १.१.७;

मधुच्छन्दा वैश्वामित्रः । पवमानः सोमः । गायत्री । ( ऋ० ९ । १ । १ )

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ ४६८ ॥

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया ।
इन्द्राय पातवे सुतः ॥ ४६८ ॥

---

(४६८।१) ॥ आजिगम् । अजिगो गायत्री सोमेन्द्रौ ॥

स्वादाइष्ठाया । मदाइष्ठाया ॥ पवस्वसो । माधाऽ१राऽ२३या ॥ इन्द्रायापा ।
तवाइसूऽ२३ताऽ३४३ः । ओऽ२३४५इ ॥ डा ॥ ( दी० २ । प० ८ । मा० ५ )१४ ( जु । ८२७)

(४६८।२) ॥ सुरूपे द्वे । द्वयोः सुरूपोगायत्री सोमेन्द्रौ ॥

स्वादिष्ठयाऽ२ । इयाऽ२इया । मादिष्ठायाऽ२ ॥ पवस्वसोऽ२ । इयाऽ२इया ।
मधारायाऽ२॥ इन्द्रायपाऽ२ । इयाऽ२इया ॥ तवाइसूऽ२३ताऽ३४३ः । ओऽ२३४५इ ॥ डा ॥

(४६८।३) ( दी० ३ । प० ११ । मा० ६ )१५ ( रू । ८२८ )

स्वादिष्ठयौहोऽ२ । इया । मादिष्ठायाऽ२ ॥ पवस्वसौहोऽ२ । इया ।
मधारायाऽ२ ॥ इन्द्रायपौहोऽ२ । इया ॥ तवाइसूऽ२३ताऽ३४३ः । ओऽ ३४५इ ॥ डा ॥

( दी० ३ । प० ११ । मा० ३ )१६ ( टि । ८२९ )

(४६८।४) ॥ जमदग्नेः शिल्पे द्वे । द्वयोः जमदग्निर्गायत्री सोमेन्द्रौ ॥

ओइस्वाऽ२३४दी ॥ ष्ठयाऽ३मादिष्ठया । ओऽ२३४वा । पवस्वसोमधारयाऽ३ ॥
ओईऽ२३४०द्रा ॥ याऽ२पाऽ२३४औहोवा ॥ तवेसुताऽ१ः ॥

( दी० ६ । प० ७ । मा० ८ )१७ ( ग्वी । ८३० )

(४६८।५)

उहुवाइ । स्वाऽ२३४दी ॥ ष्ठयाऽ३मादिष्ठया । ओऽ२३४वा ।
पवस्वसोमधारयाऽ३ ॥ उहुवाइ । इन्द्राऽ५यपा ॥ ताऽ२वाऽ२३४औहोवा ॥
सूऽ२३४ताः ॥ ( दी० ५ । प० ९ । मा० ८ )१८ ( भी । ८३१ )

---

[साम-तन्त्र-सूत्राणि][८२७]१४ [८२९]१६ [८३१]१८ ( पृथक् सूत्राणि न सन्ति )
[८२८]१५ य ७ ६.१०; [८३०]१७ उखिड्न्याम् । ६.६.८;

भृगुर्वारुणिर्जमदग्निर्भार्गवो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६५ । १० )

वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ॥ ४६९ ॥

वृषा पवस्व धारया मरुत्वते च मत्सरः । विश्वा दधान ओजसा ॥ ४६९ ॥

---

(४६८।६) ॥ सꣳहितम् । सꣳहितः साध्या देवा गायत्री सोमेन्द्रौ ॥

स्वादाइष्ठया ॥ मदिष्ठयाऽ३ । पावाऽ२स्वासो । मधारयाऽ३ ॥ आइन्द्राऽ३यापाऽ६ ।

हाउ ॥ तवाऽ६इसुताउ ॥ वा ॥ ( दी० २ । प० ८ । मा० ५ )१९( जु । ८३२ )

(४६८।७) ॥ शाकुलः । वसिष्ठो गायत्री सोमेन्द्रौ ॥

स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ । द्राऽ६यपा ॥ तवाऽ२इ । ऊऽ२ । तवाऽ२इ । ऊऽ२ ॥

तवाऽ२३४औहोवा ॥ सूऽ२३४ताः । ( दी० ८ । प० ८ । मा० ५ )२०( डु । ८३३ )

(४६८।८) ॥ गंभीरम् । जमदग्निर्गायत्री सोमेन्द्रौ ॥

औहोहिम्स्थिहाएहिया । हाऽ३हाइ । स्वादाइष्ठाया । माऽ२३४दी ॥ ओइमाऽ२३४दी ॥

औहोहिम्स्थिहाएहिया । हाऽ३हाइ । ष्ठयापाव । स्वाऽ२३४सो ॥ ओस्वाऽ२३४सो ॥

औहोहिम्स्थिहाएहिया । हाऽ३हाइ । मधारया । ईऽ२३४०द्रा ।

ओईऽ२३४०द्रा ॥ औहोहिम्स्थिहाएहिया । हाऽ३हाइ । यपातवाइ ।

सूऽ२३४ताः । ओइसूऽ२३४ताः । औहोहिम्स्थिहाएहिया । हाऽ३हाऽ३४ ।

औहोवा ॥ ईऽ२३४५ ॥ ( दी० २३ । प० २४ । मा० २१ )२१( ट्टु । ८३४ )

(४६८।९) ॥ सꣳहितम् । संहितः साध्या देवा गायत्री सोमेन्द्रौ ॥

स्वादिष्ठयाम । दाऽ५इष्ठया ॥ पवाऽ२ । स्वाऽ२३सो । मधाऽ२राया ॥

आऽ२३इन्द्रा ॥ याऽ२पा । तवाऽ२३ ॥ हाउवाऽ३ ॥ सूऽ२३४ताः ॥

( दी० २ । प० १० । मा० ४ )२२ (जी । ८३५ )

(४६९।१) ॥ सोम सामनी द्वे । द्वयोः सोमो गायत्री सोमौ इन्द्रो वा ॥

वृषापवा ॥ स्वधारायाऽ२ । मरुत्वताइ । चमत्साऽ२३राः ॥ वाइश्वाऽ२३ ॥

दाऽ२धाऽ२३४औहोवा ॥ नओजसाऽ२३४५ ॥ ( दी० ५ । प० ७ । मा० ५ )२३( फु । ८३६ )

---

[साम-तन्त्र-सूत्राणि ] [८३२]१९ [८३३]२० [८३४]२१ [८३६]२३ ( पृथक् सूत्राणि न सन्ति )

[८३५]२२ नेऽनीचाहि १०.२.६;

(४६९।२)

वृषाहाउ॥ पाऽ२३४वा। स्वाधाराऽ२३४या। माऽ२३४रू। त्वाऽ२३४ताइ।
चामत्साऽ२३४राः॥ वाइश्वादधाऽ२३॥ नाऽ२ओऽ२३४औहोवा॥ जाऽ२३४सा॥

( दी० ३ । प० ९ । मा० ६ ) २४ ( ढ्रू । ८३७ )

(४६९।३)  ॥ आशुभार्गवम् । भृगुर्गायत्रीन्द्रासोमौ इन्द्रो वा ॥

वृषापव। स्वधाराऽ६या॥ मारुत्वताऽ३इ। चामाऽ२त्साऽ२३४राः॥
विश्वादाऽ१धाऽ२॥ नओऽ३। जाऽ२३४सोऽ६हाइ॥ ( दी० २ । प० ७ । मा० ४ ) २५ ( छी । ८३८ )

(४६९।४)  ॥ वैश्वदेवे द्वे । द्वयोर्विश्वेदेवा गायत्रीन्द्रासोमौ इन्द्रो वा ।

आइवृषा॥ पवा। इहा। औऽ३हो। स्वधाराऽ२३४या। म। रू।
त्वतेऽ३हाइ। च। मा। त्सराऽ२३हाऽ३४इ॥ विश्वादधाहाउ।
नओजसाहाउ॥ ओवाऽ३४३ओऽ२३४५वाऽ६५६॥ अस्मरायोऽ२उतश्रवाऽ२३४५ः॥

( दी० ९ । प० १५ । मा० ९ ) २६ ( नो । ८३९ )

(४६९।५)

वृषा। पवाऽ३। एहिया॥ स्वधाऽ२। रयाऽ३४औहोवा। मारूऽ३४।
औहोवा॥ त्वतेचमाऽ१त्साऽ३राः॥ औऽ३होऽ३१येऽ२। औहोऽ२३४५वाऽ६५६॥
विश्वादधानओजसाऽ२३४५॥  ( दी० १० । प० ११ । मा० ३ ) २७ ( पि । ८४० )

(४६९।६)  ॥ इन्द्र सामनी द्वे । द्वयोरिन्द्रो गायत्रीन्द्रासोमौ इन्द्रो वा ॥

वृषापावाऽ२३। हौहोइ। औऽ३होऽ२३४५। स्वधारायाऽ२३। हौहोइ।
औऽ३होऽ२३४५॥ मरुत्वातेऽ२३। हौहोइ। औऽ३होऽ२३४५।
चमात्साराऽ२३ः। हौहोइ। औऽ३होऽ२३४५॥ विश्वादाधाऽ२३।
हौहोइ। औऽ३होऽ२३४५। नओजासाऽ२३। हौहोइ। औऽ३होऽ३४३॥
ओऽ२३४५इ॥ डा॥  ( दी० ६ । प० २० । मा० ९ ) २८ ( डो । ८४१ )

[ साम-तन्त्र-सूत्राणि ] [८३७]२४ [८४१]२८ ( पृथक सूत्राणि न सन्ति )  [८३८]२५ ऐ काग ५.४.१०;
[८३९]२६ य ३.२.६;  [८४०]२७ ऐऽन्ताक्षरे ५.६.५;

अमर्हीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । १९ )

यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशंसहा ॥ ४७० ॥

यस्ते मदो वरेण्यस्तेना पवस्वान्धसा । देवावीरघशऽसहा ॥ ४७० ॥

(४६९।७)

वृषापावा । औहौहोऽ२३४वा । स्वधाराया । औहौहोऽ२३४वा ॥ मरूत्वाता । औहौहोऽ२३४वा । चमात्सारा । औहौहोऽ२३४वा ॥ विश्वादाधा । औहौहोऽ२३४वा । नओजासा । औहौहोऽ२३४वा ॥ होऽ५इ ॥ डा ॥

( दी० १२ । प० १४ । मा० २ ) २९( झा । ८४२ )

॥ यौक्ताश्वे द्वे । द्वयोर्युक्ताश्वो गायत्री सोमः इन्द्रो वा ॥

(४६९।८)

औहोहोहाइ । वृषा ॥ पवस्वऽ३धारायाऽ३ । मारूऽ२त्वाऽ२३४ताइ । ओइ । चमाऽ२३ । चमाऽ२त्साऽ२३४राः ॥ औहोहोहाइ । विश्वा ॥ दधाऽ२नाऽ२३४ओ । जासाऽ२३४औहोवा ॥ ओइ । ज्वरआ ॥

( दी० ४ । प० १३ । मा० ९ ) ३०( दो । ८४३ )

(४६९।९)

वृषाऔहोहोहाइ ॥ पवऽ३स्वाधाऽ१रायाऽ३ । मारूऽ२त्वाऽ२३४ताइ । चमाऽ३ । ओइ । चमाऽ२त्साऽ२३४राः ॥ विश्वाऔहोहोहाइ ॥ दधाऽ२नाऽ२३४ओ । जाऽ२साऽ२३४औहोवा ॥ ओइ । जूऽ२३४वा ॥ ( दी० ६ । प० ११ । मा० १० ) ३१( कौ । ८४४ )

॥ इति ग्रामे गेयगाने द्वादशः प्रपाठकः ॥ १२ ॥

॥ भासम् । अत्रिर्गायत्री सोमः ॥

(४७०।१)

यास्ताइ ॥ मादो । वाराओऽ२३४वा । णीऽ२३४याः । ताइना ॥ पावा । स्वाऽ३आओऽ२३४वा । धाऽ२३४सा ॥ दाइवा ॥ वाइरा । घाशाओऽ२३४वा ॥ साऽ२३४हा ॥

( दी० नास्ति । प० १२ । मा० ९ ) १( यो । ८४५ )

॥ सोम साम । सोमो गायत्री सोमः ॥

(४७०।२)

यस्तेमदाः ॥ वराइणियाः । ताइनापावाऽ३स्वाऽ३ । अन्धसा ॥ दाइवावाइराऽ३४ । हाउ ॥ घशाऽ५ऽसहा । होऽ५इ ॥ डा ॥

( दी० नास्ति । प० ९ । मा० १८ ) २( लै । ८४६ )

---

[ साम-तन्त्र-सूत्राणि ] [८४२]२९ मादेः १०.५.६; [८४३]३० पानेऽग्नि ५.३.९; [८४४]३१ [८४६]२ (पृथक् सूत्राणि न सन्ति) [८४५]१ तिर्णी गु १.३.१०; इदगुर्वादेर्वृद्धपु ६ २ ४: घमन्धायां गाणि ११ २.१०

त्रित आप्त्यः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ३३ । ४ )

तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । हरिरेति कनिक्रदत् ॥ ४७१ ॥

तिस्रो वाच उदीरते गावो मिमन्ति धेनवः । हरिरेति कनिक्रदत् ॥ ४७१ ॥

---

(४७०।३) ॥ प्राजापत्यम् । प्रजापतिर्गायत्री सोमः ॥

यस्ताऽ३२इमाऽ२३४दाः॥ वराइणाया । ओऽ२३४वा । हा । ओऽ२३४वा ।
हाइ । ताइनापव । स्वआ०धासा । ओऽ२३४वा । हा । ओऽ२३४वा ।
हाइ ॥ दाइवावाइरा । ओऽ२३४वा । हा । ओऽ२३४वा । हाऽ३इ ॥
घाऽ२शाऽ२३४औहोवा॥ सहोरयिऽ३ष्ठाऽ२३४५ः ॥ ( दी० ४ । प० १९ । मा० १२ )३( धा । ८४७ )

(४७०।४) ॥ सोम साम । सोमो गायत्री सोमः ॥

यस्ताइमाऽ२३दोवरेणियाः॥ ताइनापव । स्वआ०धाऽ१साऽ२॥ दाइवाऽ२वाइराऽ२३ ॥
घशोऽ२३४वा । साऽ५होऽ६हाइ ॥ ( दी० ३ । प० ६ । मा० ७ )४ ( टे । ८४८ )

(४७०।५) ॥ भासम् । अत्रिर्गायत्री सोमः ॥

यस्ते । माऽ३दो । वा । ईया॥ राइणाऽ१याऽ२ः । ताइनापव । स्व ।
ओऽ३हा । वाहा । धसाऽ२॥ दाइवाऽ२३॥ वाऽ२इराऽ२३४औहोवा॥
घशऽसहाऽ१ ॥ ( दी० ३ । प० १३ । मा० ६ )५( गृ । ८४९ )

(४७०।६) ॥ अध्यर्द्धेडः सोम साम ॥

यस्तेमदोवरेणियाऽ६ए॥ तेनापवस्वान्धसा॥ देवावीराऽ२३ । हाइ ॥
धाशाउवा । साहाउवाऽ३॥ ऊऽ३२३४पा ॥ ( दी० ९ । प० ७ । मा० ४ )६ ( श्ली । ८५० )

(४७१।१) ॥ वैष्टम्भे द्वे । त्रयोर्विष्टंभो वा देवा गायत्री सोमः ॥

तिस्रोवाचाः॥ उदाइ । उदाऽ३१उ । वायेऽ३ । राऽ२३४ते॥ गावोमिमा ॥
तिधाइ । तिधाऽ३१उ । वायेऽ३ । नाऽ२३४वाः॥ हरिरेती॥ कनाइ ।
कनाऽ३१उ । वायेऽ३॥ क्राऽ२३४दात् ॥ ( दी० ५ । प० १५ । मा० ९ )७( मो । ८५१ )

(४७१।२)

तिस्रोवाचाः॥ उदाइराऽ३ते । गावोमिमन्तिधाऽ१इनाऽ३वाः॥ हरिरेतोऽ२३४हाइ ॥
काऽ२नाऽ२३४औहोवा॥ क्राऽ२३४दात् ॥ ( दी० ७ । प० ६ । मा० ७ )८( चे । ८५२ )

---

[साम-तन्त्र-सूत्राणि][८४७]३ [८४८]४ [८४९]५ [८५०]६ [८५१]७ [८५२]८ ( पृथक् सूत्राणि न सन्ति )

कश्यपो मारीचः । पवमान सोमः । गायत्री । ( ऋ० ९ । ६४ । २२ )

इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । ऋतस्य योनिमासदम् ॥ ४७२ ॥

इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः । अर्कस्य योनिमासदम् ॥ ४७२ ॥

---

(४७१।३) ॥ पार्ष्ठौहे द्वे । द्वयोः पष्ठवाड् गायत्री सोमः ॥

तिस्रोवाचोऽ२३४हाइ ॥ उदीरताइ । गावोमिमाऽ२३४हा । तिधेनवाः ॥

हरिराइतोऽ२३४हाइ ॥ कनायेऽ३ । क्राऽ२दाऽ२३४औहोवा ॥ अस्मभ्यंगातुवित्तमाऽ२३४५म् ॥

( दी० ८ । प० ८ । मा० ७ )९( डे । ८५३ )

(४७१।४)

तिस्रोवाचउदीरतो । वाहाइ ॥ गावोमिमाऽ३ । तीधेनाऽ२३४वाः ॥ हरिराइती ॥

काऽ२नोऽ२३४औहोवा ॥ क्राऽ२३४दात् ॥ ( दी० ७ । प० ७ । मा० ६ )१०( छू । ८५४ )

(४७१।५) ॥ क्षुल्लक वैष्टंभम् । विष्टंभो वा देवा गायत्री सोमः ॥

तिस्रोऽ५वा । चाऽ३उदीरताइ ॥ गावोमिम । तिधाइनाऽ१वाऽ२३ः ।

होवाऽ३हाइ ॥ हराइराऽ१इतीऽ२३ । होवाऽ३हाइ ॥ कनायेऽ३ । क्राऽ२दाऽ२३४औहोवा ॥

दीऽ२३४शाः ॥ ( दी० ५ । प० १० । मा० १० )११( मौ । ८५५ )

(४७१।६) ॥ पार्ष्ठौहम् । पष्ठवाड् गायत्री सोमः ॥

तिस्रोऽवाचाऽ५उदीरताइ ॥ गावोमिमन्तिधेनवः । हरिराऽ२३इती ॥ कनौऽ२ ।

हुवाइ । होऽ३वाऽ३ ॥ क्राऽ२दाऽ२३४औहोवा ॥ हाओवा । ओवाऽ२३४५ ॥

( दी० ९ । प० ९ । मा० ७ )१२( घे । ८५६ )

(४७२।१) ॥ इषो वृधीयम् । इषावृधीयो गायत्रीन्द्रासोमौ ॥

इन्द्रायेन्दाउ ॥ मरुत्वताइ । पवस्वामाऽ२ । धुमत्तमाः ॥ अर्कस्यायोऽ२ ॥

निमाऽ२३ । साऽ२दाऽ२३४औहोवा ॥ इषोवृधेऽ१ ॥ ( दी० ५ । प० ८ । मा० ४ )१३ ( बी । ८५७ )

(४७२।२) इन्द्रसाम । इन्द्रो गायत्रीन्द्रासोमौ इन्द्रो वा ॥

आऽ२३४इन्द्रा । याऽ२३४इन्दो ॥ मरुत्वतेऽ३ । पाऽ२३४वा । स्वाऽ२३४मा ।

धुमात्तमा३ः । आऽ२३४र्का ॥ स्याऽ२३४यो ॥ निमासदाऽ२३४५म् ॥

( दी० १ । प० ९ । मा० ४ )१४ ( घी । ८५८ )

---

[ साम-तन्त्र-सूत्राणि][८५३] ९ रेन्ताक्षरम् १२.३.१० [८५४]१० [८५५]११ [८५६]१२[८५७]१३

( पृथक सूत्राणि न सन्ति ) [८५८]१४ पोन्याम ३.८.९.

(४७२।३)   ॥ वैश्वदेवे द्वे । द्वयोर्विश्वेदेवागायत्रीन्द्रासोमौ इन्द्रो वा ॥

इन्द्रायाइन्दोऽ२३ । हाऽ। औऽ३होवा । मरुत्वातेऽ२३ । हाऽ । औऽ३होवा ॥

पवस्वामाऽ२३ । हाऽ । औऽ३होवा । धुमत्तामाऽ२३ः । हाऽ । औऽ३होवा ॥

अर्कस्यायोऽ२३ । हाऽ । औऽ३होवा । निमासादाऽ२३म् । हाऽ । औऽ३होवाऽ३४३ ॥

ओऽ२३४५इ ॥ डा ॥   ( दी० ८ । प० २० । मा० ८ )१५ ( णी । ८५९ )

(४७२।४)

इन्द्रायेन्दो । एऽ५ । मरू॥ त्वताइ । पवस्वमधुमत्ताऽ२३माः । हुवाइ ।

होऽ३वा॥ अर्कास्याऽ२३यो । हुवाइ । हाऽ३वा॥ निमासाऽ२३दाऽ२३४३म् ।

ओऽ२३४५इ ॥ डा ॥   ( दी० ४ । प० १३ । मा० ६ )१६( दू । ८६० )

(४७२।५)   ॥ आग्नेये द्वे । द्वयोरग्निर्गायत्रीन्द्रासोमौ ॥

इन्द्रायेन्दोहाउ॥ म । रू । त्वतेऽ३हाउ । पवस्वमधु । माऽ । तमाऽ२३हाउ ।

अ । का । स्ययोऽ२३हाऽ३इ॥ निमाऽ२३ । होऽ२३४वा । साऽ५दोऽ६हाइ ॥

( दी० ३ । प० १३ । मा० ५ )१७ ( डु । ८६१ )

(४७२।६)

इन्द्रायेन्दोवा । ओवा॥ मरुत्वतोवा । ओवा । पवस्वमोवा । ओवा ।

धुमत्तमोवा । ओवाऽ३ ॥ अर्काहाउ । स्ययोहाउ॥ निमोवाऽ३ओऽ२३४वा ।

साऽ५दोऽ६हाइ ॥   ( दी० २ । प० १२ । मा० ८ )१८( छी । ८६२ )

(४७२।७)   ॥ वैश्वदेवम् । विश्वेदेवा गायत्रीन्द्रासोमौ इन्द्रो वा ॥

इन्द्रायेन्दोमरुत्वते । ओहाइ॥ पवस्वमधुमत्तमः । आऽ३हाऽ३४३ ।

ओऽ२३४हा॥ आर्कस्यायोऽ२३॥ नाऽ२इमाऽ२३४ओहोवा॥ उप् । साऽ२३४दाम् ॥

( दी० ६ । प० ९ । मा० ६ )१९( घू । ८६३ )

(४७२।८)   ॥ आग्नेयम् ।अग्निर्गायत्रीन्द्रासोमौ इन्द्रो वा ॥

इन्द्रायेन्दोमरुत्वाऽ६ताइ॥ पवस्वम । धुमात्ताऽ१माऽ२३४ः॥ अर्कस्ययोनिमाऽ६हाउ ॥

साऽ५दोऽ६हाइ ॥   ( दी० ४ । प० ५ । मा० ४ )२० ( नी । ८६४ )

[ साम-तन्त्र-सूत्राणि )[८५९]१५ [८६०]१६ [८६२]१८ [८६३]१९[८६४]२० (पृथक् सूत्राणि न सन्ति )
[८६१]१७ अंके नु २,८,४, धाया त्रिवृण ३,१०,४

जमदग्निर्भार्गवः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६२ । ४ )

असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥ ४७३ ॥

असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः । श्येनो न योनिमासदत् ॥ ४७३ ॥

(४७३।१) ॥ शैशवानि चत्वारि । चतुर्णां शिशुर्गायत्री श्येनसोमौ ।

आसा॥ वियꣳशुमाऽ३१उवाऽ२३ । दाऽ२३४या । आप्सूदाक्षाः । गिराऽ३१उवायेऽ३ । ष्ठाऽ२३४५ः॥ श्येनोनाऽ२३यो॥ निमाऽ३१उवाऽ२३ ॥ साऽ२३४दात् ॥

(४७३।२) ( दी० २ । प० ९ । मा० ६ )२१ ( झू । ८६५ )

असाविया॥ शूमेदाऽ२ । य । आप्सुदाक्षाऽ२ः । गाइरिष्ठाः॥ श्याइनोऽ१नायोऽ२३ ॥ निमोऽ२३४वा । साऽ५दोऽ६हाइ ॥ (दी० २ । प० ८ । मा० ५ )२२ ( जु । ८६६ )

(४७३।३)

असा । वियाओऽ२३४वा॥ शूमेदाया । ओऽ२३४वा । आप्साओऽ२३४वा॥ दक्षोगिराइ । ष्ठाओऽ२३४वा॥ श्येनोनयोनिमासदाऽ२३४५त् ॥ ( दी० ६ । प० ८ । मा० ५ )२३( शु । ८६७ )

(४७३।४)

असा । वियौवाओऽ२३४वा॥ शुमेदायौ । वाओऽ२३४वा । अप्सू । दक्षौवाओऽ२३४वा । गिराइ । ष्ठौवाओऽ२३४वा । श्येनः । नयौवाओऽ२३४वा॥ निमा । सादौवाओऽ२३४वा॥ होऽ५इ ॥ डा ॥ ( दी० २ । प० १४ । मा० ९)२४( शो । ८६८ )

(४७३।५) ॥ च्यावनानि चत्वारि चतुर्णां। च्यवनो गायत्री श्येना सोमौ ॥

असा । व्युहुवाहाइ॥ अशुमेदायाप्सुदक्षोगिरिष्ठाउहुवाऽ२३होइ॥ श्याऽ२३इनोऽ३ ॥ नाऽ२योऽ२३४औहोवा॥ निमासदाऽ२३४५त् ॥ ( दी० ८। प० ६ । मा० ६ )२५ ( टू । ८६९ )

(४७३।६)

असाव्यꣳशुः। औहोवाहाइ॥ मदाऽ२३या । आप्सुदक्षोगिरिष्ठाः॥ श्याइनोनाऽ२योऽ३ ॥ नाऽ२इमाऽ२३४औहोवा॥ उप् । साऽ२३४दात् ॥ ( दी० ६ । प० ८ । मा० ८ )२६ ( गै । ८७० )

(४७३।७)

इहाऽ३१२३४ । इहा । साव्यꣳशुर्मदाय । इहा॥ अप्सुदक्षोगिरिष्ठाऽ३४५ः । ईऽ२३४हा ॥ श्येनोनयोऽ२निमाऽ३४५ । ईऽ२३४हा॥ आऽ२सदाऽ३४५त्॥ ईऽ२३४हा ॥

(४७३।८) ( दी० ६ । प० १० । मा० २ )२७ ( डा । ८७१ )

असाऽ२३४ । वियꣳशुः । मदाऽ२३४याऽ६ । हाउ॥ आप्सूदाऽ२३४क्षाः । गिराइष्ठाऽ२३४हाइ॥ श्याइनोनाऽ२योऽ२॥ नाइमाऽ२३हाऽ३४३इ । साऽ२३४दोऽ६हाइ ॥

( दी० नास्ति । प० ९ । मा० ९ । )२८ ( लो । ८७२ )

[साम-तन्त्र-सूत्राणि][८६५]२१ वि वृद्धात् ९.४.९; [८६७]२३ अगुञि ३.५.६; [८७१]२७ डेः ८.९.१०; हासा ९.६.१०; [८६६]२२ [८६८]२४ [८६९]२५ [८७०]२६ [८७२]२८ ( पृथक् सूत्राणि न सन्ति )

दृळ्हच्युत आगस्त्यः । पवमानः सोमः । गायत्री । ( ऋ० ९ । २५ । १ )

पव॑स्व द॒क्षसाध॑नो दे॒वेभ्यः॑ पी॒तये॑ हरे । म॒रुद्भ्यो॑ वा॒यवे॒ मदः॑ ॥ ४७४ ॥

असितः काश्यपो देवलो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । १८ । १ )

परि॑ सुवा॒नो गि॑रि॒ष्ठाः प॒वित्रे॒ सोमो॑ अक्षाः । मदे॑षु सर्व॒धा अ॑सि ॥ ४७५ ॥

पवस्व दक्षसाधनो देवेभ्यः पीतये हरे । मरुद्भ्योवायवे मदः ॥ ४७४ ॥

परि स्वानो गिरिष्ठाः पवित्रे सोमो अक्षरत् । मदेषु सर्वधा आसि ॥ ४७५ ॥

(४७४।१) ॥ प्राजापत्ये द्वे । प्रजापतिर्गायत्री मरुद्वायू ॥

पवस्वदो । हौहोवाहाइ॥ क्षासाधनाऽ२ः । औऽ३होऽ३४इ । औहो ।
वाहाइ । देवेभ्यःपाइ । तयेहराऽ२इ । औऽ३होऽ३४इ । औहो । वाहाइ ॥
मरुद्भ्योवाऽ३ । औऽ३होऽ३४इ । औहो । वाहाऽ३इ ॥ याऽ२वाऽ२३४औहोवा ॥
माऽ२३४दाः ॥ ( द्वा० १८ । प० १७ । मा० १२ )२९( ठा । ८७३)

(४७४।२)

पवस्वदक्षसाधनः । ओऽ६वा ॥ देवेभ्यःपीतयाऽ२ओइ । हराऽ२इ ॥ मरुद्भ्योवाऽ२ ।
ओऽ२३ ॥ यवोवा । माऽ५दोऽ६हाइ ॥ ( द्वा० ५ । प० ८ । मा० ५ )३० ( जु । ८७४ )

(४७५।१) ॥ वैदन्वतानि चत्वारि । चतुर्णां विदन्वान्गायत्री सोमः ॥

पारी ॥ स्वानोगिरिष्ठाः । पवाऽ२इत्रेऽ२३४सो । मोअक्षाराऽ२त् ।
मदाइपूसाऽ३ । ईऽ३याऽ३ ॥ वधोऽ२३४वा । आऽ५सोऽ६हाइ ॥
( द्वा० ८ । प० ८ । मा० ६ )३१( दृ । ८७५ )

(४७५।२)

प । यैपारी ॥ स्वानोगिरिष्ठाः । पवाऽ२इत्रेऽ२३४सा । मोअक्षाराऽ२त् ॥
मदाइपूसाऽ३हाऽ३ ॥ वाऽ२धाऽ२३४औहोवा ॥ एऽ३ । असीऽ२३४५ ॥
( द्वा० ६ । प० ९ । मा० ६ )३२( घृ । ८७६ )

(४७५।३)

पाऽ५रि । स्वानोऽ२गाऽ३इरिष्ठाः ॥ पवित्रेसो । मोअक्षरात् । पवित्रे ।
सोमोऽ२३ । क्षारात् । ओइ । मदौ । वाऽ३४३ओऽ२३४वा ॥ पुवा ॥ सर्वधाः ।
असायेऽ३ । माऽ२दाऽ२३४औहोवा ॥ एऽ३ । पुसर्वधाअसीऽ२३४५ ॥
( द्वा० ८ । प० १६ । मा० १० ) ३३( टो ८७७ )

[साम-तन्त्र-सूत्राणि][८७३]२९ पञ्च तृतीय. १.९.९. [८७४]३० [८७५]३१[८७६]३२
[८७७]३३ (पृथक् सूत्राणि न सन्ति )

अरितः काश्यपो देवलो वा । पवमानः सोमः । गायत्री । ( ऋ० ९।९।१ )

परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः । सुवानो याति कविक्रतुः ॥ ४७६ ॥

परि प्रिया दिवः कविर्वयाꣳसि नप्त्योर्हितः । स्वानैर्याति कविक्रतुः ॥ ४७६ ॥

---

(४७५।४)

औऽ३होइ । इहहाहहाइ । औऽ२होऽ२३४वा । पराइस्वाऽ२३४नो ।
गाइराऽ२३४इष्ठाः ॥ पावित्रेऽ२३४सो । मोअक्षाऽ२३४रात् ॥ मदाइषूऽ२३४सा ।
वधाआऽ२३४सो ॥ औऽ३होइ । इहहाहहाइ । औऽ२होऽ२३४५वाऽ६५६ ॥
एऽ३ । उपाऽ२३४५ ॥ ( दी० २ । प० १४ । मा० ११ )३४ ( झ । ८७८ )

(४७५।५) ॥ आंगिरसस्य रजः पदस्तोभौ द्वौ । द्वयो राजिर्गायत्री सोमः ॥

प । र्येस्वानाः ॥ गाऽ२इ । रिष्ठाऽ२या । हाहाइ । उवाऽ२३होइ ।
पावित्रेसो । मोअक्षाराऽ२त् । हाहाइ । उवाऽ२३होइ ॥ मदाऽ२इषुसा ।
हाहाइ । उवाऽ२३होइ ॥ वधोऽ२३४वा । आऽ५सोऽ६हाइ ।

( दी० ३ । प० १५ । मा० ११ )३५( ण । ८७९ )

(४७५।६)

पर्योहोवाहाइस्वानाः ॥ गाऽ२इ । रिष्ठाऽ२या । ओऽ२३४ । हाहोइ । हाहा ।
होवा । होवा । पावित्रेसो । मोअक्षाराऽ२त् । ओ२३४ । हाहोइ ।
हाहा । होवा । होवा ॥ मदाऽ२इषुसा । ओऽ२३४ । हाहोइ । हाहा ।
होवा । होवाऽ३ ॥ वधोऽ२३४वा । आऽ५सोऽ६हाइ ॥ ( दी० १० । प० २३ । मा० १० )३६( बौ । ८८० )

(४७६।१) ॥ और्णायवे द्वे । द्वयोरूर्णायुर्गायत्री सोमः ॥

परिप्रियादिवःकावीः ॥ वयाꣳसिनप्त्योर्हितः ॥ स्वानैर्याऽ२३ती ॥ आयाऽ२ ।
इयाऽ२ई३या ॥ कविक्रतोऽ२ । या२३४औहोवा ॥ ईऽ२३४५ ॥

( दी० ७ । प० ८ । मा० ४ )३७( त्री । ८८१ )

---

[ साम-तन्त्र-सूत्राणि ][८७८]३४ त्र्यामण्विनि ५.४.१; वादेः १०.१०.७; [८७९]३५ पतन्ते तृतीयः ८.४.४;
[८८०]३६[८८१]३७ ( पृथक् सूत्राणि न सन्ति )

श्यावाश्व आत्रेयः। पवमानः सोमः। गायत्री। (ऋ० ९।३२।१)

प्र सोमा॑सो मद॒च्युतः॒ श्रव॑से नो म॒घोनः॑। सु॒ता वि॒दथे॑ अक्रमुः ॥ ४७७ ॥

त्रित आप्त्यः। पवमानः सोमः। गायत्री। (ऋ० ९।३३।१)

प्र सोमा॑सो विप॒श्चितो॒ऽपां न य॑न्त्यू॒र्मयः॑। वना॑नि महि॒षाइ॑व ॥ ४७८ ॥

अमहीयुराङ्गिरसः। पवमानः सोमः। गायत्री। (ऋ० ९।६१।२८)

पव॑स्वेन्दो॒ वृषा॑ सु॒तः कृ॒धी नो॑ य॒शसो॒ जने॑। विश्वा॒ अप॒ द्विषो॑ जहि ॥ ४७९ ॥

प्र सोमासो मदच्युतः श्रवसे नो मघोनाम्। सुता विदथे अक्रमुः ॥ ४७७ ॥

प्र सोमासो विपश्चितोऽपो नयन्त ऊर्मयः। वनानि महिषा इव ॥ ४७८ ॥

पवस्वेन्दो वृषा सुतः कृधी नो यशसो जने। विश्वा अप द्विषो जहि ॥ ४७९ ॥

---

(४७६।१)

परिप्रियाऽ५दिवःकवाइः॥ वयाँऽ२होऽ१वाऽ२सिनप्त्योवोहितः॥ स्वानैर्याऽ२३ती। हुवा। होवा। होवा। हुवाऽ२इ। ईऽ३या। कविक्रतोऽ२। याऽ२३४औहोवा॥ ईऽ३याऽ२३४५म्॥ (दी० ८। प० ११। मा० ६)३८(टू। ८८२)

प्रथमः खण्डः॥ १॥ दशतिः॥ ९॥

॥ इति ग्रामे गेय-गाने त्रयोदशस्यार्द्धः प्रपाठकः॥

(४७७।१) ॥ सौभरे द्वे। द्वयोः सुभरिर्गायत्री सोमः॥

प्रसोमाऽ२३४साः॥ मदच्युतः। औऽ२३होवाऽ२। श्रवाऽ२साऽ२३४इनाः। ओइमघोनाऽ२म्॥ सुताऽ२३ः॥ वाऽ२इदाऽ२३४औहोवा॥ थेअक्रमूऽ२३४५ः॥ (दी० ४। प० ६। मा० ११)१(द। ८८३)

(४७८।१)

प्रसोमासाः॥ वाइपश्चितः। आपोऽ१नायाऽ२। ताऊर्मयः॥ वानाऽ१निमाऽ२। आऔऽ३हो॥ हिषाइव। इडाऽ२३भाऽ३४३। औऽ२३४५इ॥ डा॥ (दी० ४। प० १०। मा० ८)२(नै। ८८४)

(४७९।१) ॥ वृषकाणि त्रीणि। त्रयाणामिन्द्रो गायत्री सोमः॥

पवस्वेन्दोऽ५वृषासुताः॥ कृधीनोयशसोजनायेऽ३॥ वाइश्वाआऽ२३४पा॥ द्वाऽ२इषाऽ२३४औहोवा॥ जाऽ२३४ही॥ (दी० ७। प० ५। मा० ५)३(जु। ८८५)

---

[साम-मन्त्र-सूत्राणि][८८२]३८ [८८३]१[८८४]२ (पृथक् सूत्राणि न सन्ति) [८८५]३ स्वर ५.३.२ ३ ११.१०५,

भृगुर्वारुणिर्जमदग्निर्भार्गवो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६५ । ४ )

वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । पवमान स्वाध्यः ॥ ४८० ॥

कश्यपो मारीचः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६४ । १० )

इन्दुः पविष्ट चेतनः प्रियः कवीनां मती । सृजदश्वं रथीरिव ॥ ४८१ ॥

वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे । पवमान स्वर्दृशम् ॥४८०॥

इन्दुः पविष्ट चेतनः प्रियः कवीनां मतिः । सृजदश्वᳪ रथीरिव ॥४८१॥

---

(४८०।१)

वृषाहिया॥ सिभानूऽ२३ना । द्युमन्तन्त्वाहावाऽ१माहाऽ२३४इ॥ पवाऽ३ ॥

मानसुवोऽ२३४वा॥ वृऽ२३४शाम् ॥ ( दी० ३ । प० ६ । मा० २ )४( टा । ८८६ )

(४८०।२)

वृषाहियाऽ५सिभानुना॥ द्युमन्तन्त्वाहवाऽ२महे । हाऽ२इ । उऽ२ । होऽ२वा ॥

पवमानसुवर्दृशम् । हाऽ२इ । ऊऽ२ । होऽ३वा॥ हुवोऽ३४५इ ॥ डा ॥

( दी० ६ । प० ११ । मा० ४ )५( की । ८८७ )

(४८१।१) ॥ बभ्रौ॥ सामानि त्रीणि, कौम्भ्यस्य वा । त्रयाणां बभ्रुर्गायत्री सोमः ॥

इन्दुरौहोवाहाइ । पावी॥ ष्टचाऽ२ई । तनोऽ२३४हा । हाहोइ । होऽ३हा ।

प्रियाःकवी । नाम्म । तिरोऽ२३४हा । हाहोइ । होऽ३हा ॥

सृजाऽ२त् । अश्वोऽ२३४हा । हाहोइ । होऽ३हाऽ३॥ राऽ२थाऽ२३४औहोवा ॥

ईऽ२३४वा ॥ ( दी० ८ । प० १५ । मा० ७ )६( ठे । ८८८)

(४८१।२)

इन्दुःपविष्टचेतनःप्रियःकवाइ॥ हिम्ऽ३स्थिहिम् । नाम्माऽ२३४तीः ॥

सृजादाऽ२३श्वाम् । हिम्ऽ३स्थिहिम्ऽ३ । राऽ२थाऽ२३४औहोवा ॥

ईऽ२३४वा ॥ ( दी० ३ । प० ७ । मा० ८ )७( ठै । ८८९ )

(४८१।३)

इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिःसृ । जाऽ५दश्वाम्॥ औवाऽ२३ । औवाऽ२३॥

राऽ२थाऽ२३४औहोवा ॥ ईऽ२३४वा ॥ ( दी० ५ । प० ६ । मा० २ )८( पा । ८९० )

---

[साम-तन्त्र-सूत्राणि][८८६]४[८८७]५[८९०]८ ( पृथक सूत्राणि न सन्ति ) [८८८]६ न हा हि ११.६ ३;

[८८९]७ नघिनिदीर्घम् ५.३.५; द्वन् १०.५.१०;

कश्यपो मारीचः । पवमानः सोमः । गायत्री । ( ऋ० ९।६४।४ )

असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥ ४८२ ॥

निध्रुविः काश्यपः । पवमानः सोमः । गायत्री । ( ऋ० ९।६३।२२ )

पवस्व देवायुषगिन्द्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥ ४८३ ॥

असृक्षत प्र वाजिनो गव्या सोमासो अश्वया । शुक्रासो वीरयाशवः ॥ ४८२ ॥

पवस्व देव आयुषगिन्द्रं गच्छतु ते मदः । वायुमा रोह धर्मणा ॥ ४८३ ॥

(४८२।१) ॥ कार्तवेशस्य सामानि त्रीणि । त्रयाणां कृतवेशागायत्री सोमः ॥

असृक्षाऽ२ताप्रवाजिनाः॥ गाव्याऽ२सोमाऽ२ । सोअ । श्वया ॥

शूऽ१क्राऽ२सोवीऽ२॥ रबाऽ२शवः । ओऽ२३४५इ ॥ डा ॥

( दी० २ । प० ८ । मा० ४ )९ ( जी । ८९१ )

(४८२।२)

असृक्षताप्राऽ६वाजिनाः॥ गव्यासोमासोअश्वयाऽ२३हाइ॥ शुक्रासोवाऽ३१इ॥

रयाऽ२३ । शाऽ२वाऽ२३४औहोवा ॥ ग्वाऽ२३४भीः॥ ( दी० १० । प० ६ । मा० ६ )१०( पू।८९२)

(४८२।३)

असृक्षतप्रवाजिनः । एऽ३ । गव्यासोमा॥ सोऽ३आश्वाऽ३या । शुक्राऽ२सोऽ२३४वी ॥

रयोऽ२३४वा । शाऽ५वोऽ६हाइ ॥ ( दी० २ । प० ७ । मा० ३ )११ ( लि । ८९३ )

(४८३।१) ॥ शाम्मदे द्वे । द्वयोः शंमद्गायत्रीन्द्रवायू ॥

पावस्वादे॥ वयाऽ३ । वाऽ२याऽ२३४औहोवा । यूऽ२३४पाक् । आइन्द्रंगच्छा ।

तुताऽ३इ । तूऽ२ताऽ२३४औहोवा । माऽ२३४दाः॥ वायूऽ२ऽहोऽ१इ ।

आऽ२३रो॥ हधाऽ३ । हाऽ२धाऽ२३४औहोवा॥ माऽ२३४णा ॥

( दी० ७ । प० १३ । मा० ८ )१२( जै । ८९४ )

(४८३।२)

पवस्वदेवए । हीऐहीऽ२३४या॥ आयुषगोऽ२हीऐऽ२हीऽ३या ।

इन्द्रंगच्छतुतेमदऐऽ२हीणेऽ२हीऽ३या॥ वायूमारोऽ३१२३॥ हधोऽ२३४वा ।

माऽ५णोऽ६हाइ ॥ ( दी० ४ । प० ७ । मा० ६ )१३( थू । ८९५ )

[साम-तन्त्र-सूत्राणि] [८९१]६[८९२]१०[८९३]११ ( पृथक् सूत्राणि न सन्ति ) [८९४]१२ याद्रि १२.९.८,
[८९५]१३ हि ६ १० ६; पन १२ ५ १०;

अमहीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । १६ )

पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥ ४८४ ॥

असितः काश्यपो देवलो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । १० । ४ )

परि सुवानास इन्दवो मदाय बर्हणा गिरा । सुता अर्षन्ति धारया ॥ ४८५ ॥

पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् । ज्योतिर्वैश्वानरं बृहत् ॥ ४८४ ॥

परि स्वानास इन्दवो मदाय बर्हणा गिरा । मधो अर्षन्ति धारया ॥ ४८५ ॥

---

(४८४।१) ॥ जनित्रे द्वे । द्वयोर्वसिष्ठो गायत्री सोमवैश्वानरौः ॥

पावा ॥ मानो । अजीजाऽ२३४नात् । दिवश्चित्राम् । नतन्यतूम् ॥ ज्योतिर्वैश्वाऽ२३ ॥

नाऽ२राऽ२३४औहोवा ॥ बृऽ२३४हात् ॥ ( दी० ४ । प० ८ । मा० ५ )१४ ( दु । ८९६ )

(४८४।२)

पवमानाः ॥ अजाइजाऽ३नात् । दिवश्चित्राऽ२३४हाऽ३इ । नातन्याऽ२३४तूम् ॥

ज्योऽ२३४तीः । वाऽ२३४इश्वा ॥ नरोवा । बृऽ५होऽ६हाइ ॥

( दी० १ । प० ८ । मा० ८ )१५ ( गै । ८९७ )

(४८५।१) ॥ प्रक्रीडास्त्रयः (स्त्रीणि,) ( प्रक्रीडम् ) । मरुतो गायत्री सोमः ॥

पारी ॥ स्वानासइन्दवोमदायब । हणाऽ२३गिराऽ३४ ॥ मधोऽ२३४अर्षाऽ३ ॥

तिधोऽ२३४वा । राऽ५योऽ६हाइ ॥ ( दी० ४ । प० ६ । मा० ३ )१६ ( ति । ८९८ )

(४८५।२) ॥ संक्रीडम् ॥

पारी ॥ स्वानासइन्दवाउवाऽ२३होवाऽ२३हाऽ२ईया ॥

मदायबर्हणागिराउवाऽ२३होवाऽ२३हाऽ२ईया ॥

मधोअर्षन्तिधारयाउवाऽ२३होवाऽ२३हाऽ२ईयाऽ२ । वाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

( दी० ८ । प० ६ । मा० ९ )१७ ( द्वो । ८९९ )

(४८५।३) ॥ निक्रीडम् ॥

पाऽ५रि । स्वानाऽ३साऽ३इन्दवाः ॥ मदाऽ२यबर्हणाऽ२गिरा ॥ मधोऽ२३र्षा ॥

ऊर्मिरिवाऽ२ । ईऽ३या । तिधारया । औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० ४ । प० १० । मा० ३ )१८( नि । ९०० )

---

[साम-तन्त्र-सूत्राणि [८९६]१४[८९७]१५[८९८]१६[८९९]१७[९००]१८ ( पृथक् सूत्राणि न सन्ति )

असितः काश्यपो देवलो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । १४ । १ )

परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः । कारं बिभ्रत्पुरुस्पृहम् ॥ ४८६ ॥

अमहीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । १३ )

उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ ४८७ ॥

परि प्रासिष्यदत्कविः सिन्धोरूर्मावधि श्रितः । कारुं बिभ्रत्पुरुस्पृहम् ॥ ४८६ ॥

उपो षु जातमप्तुरं गोभिर्भङ्गं परिष्कृतम् । इन्दुं देवा अयासिषुः ॥ ४८७ ॥

---

(४८६।१) ॥ औशनम् । उशना गायत्री सोमः ॥

परिप्रासी ॥ ष्यदत्कावीऽ२ः । सिन्धोरूर्मावाधिश्रिताऽ२ः ॥ कारूऽ२३म् ॥
बाऽ२इभ्राऽ२३४औहोवा ॥ पुरुस्पृहाऽ२३४५म् ॥ ( द्वा० ७ । प० ६ । मा० ६ )१९ ( चू । ९०१ )

एकोनविंशति द्वितीयः, द्वितीयः खण्डः ॥ २ ॥ दशतिः ॥ १० ॥

॥ इति पञ्चमः प्रपाठकः ॥५॥

(४८७।१) ॥ यामानि त्रीणि । त्रयाणां यमो गायत्री देवाः ॥

इहाऽ२इहा । उपोषुजातमाऽ२प्तुराम् । इहा ॥ इहाऽ२इहा ।
गोभिर्भंगंपराऽ२इष्कृताम् । इहा ॥ इहाऽ२इहा । इन्दुन्देवाअयाऽ२सिषूः ॥ इहाऽ१ ॥
( द्वा० ५ । प० ९ । मा० ८ )२० ( भे । ९०२ )

(४८७।२)
ऊपोषुजातमाऽ२प्तुराम् । उपा ॥ गोभाऽ२३इहोइ । भंगम्पराऽ२इष्कृताम् ।
उपा ॥ इन्दूऽ२३२होइ ॥ देवाअयाऽ२ । सिषुराऽ३१उवाऽ२३ ॥ ऊऽ३ऽ२३४पा ॥

(४८७।३) ( द्वा० ५ । प० ९ । मा० ८ )२१ ( ग्लै । ९०३ )
उपोष्वौ । होइजाताम् ॥ आप्तूऽ३राम् । औऽ३होऽ३वाऽ३ । गोभिर्भाऽ२३४०गाम् ॥
ओइपारिष्कृताऽ२म् ॥ इन्दूऽ२३म् ॥ देवाऽ३४औहोवा ॥ अयासिषूऽ२३४५ः ॥
( द्वा० ६ । प० ९ । मा० ९ )२२( घो । ९०४ )

---

[साम-तन्त्र-सूत्राणि ][९०१]१९[९०२]२०[९०३]२१ ( पृथक् सूत्राणि न सन्ति )
[९०४] २२ अनज्जंघायाः ४.५.१;

बृहन्मतिराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ४० । १ )

पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः । शुम्भन्ति विप्रं धीतिभिः ॥ ४८८ ॥

जमदग्निर्भार्गवः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६२ । १९ )

आविशन्कलशं सुतो विश्वा अर्षन्नभि श्रियः । शूरो न गोषु तिष्ठति ॥ ४८९ ॥

प्रभूवसुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ३६ । १ )

असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः । कार्ष्मन्वाजी न्यक्रमीत् ॥ ४९० ॥

पुनानो अक्रमीदभि विश्वा मृधो विचर्षणिः । शुंभन्ति विप्रं धीतिभिः ॥ ४८८ ॥

आविशन्कलशꣳ सुतो विश्वाअर्षन्नभि श्रियः । इन्दुरिन्द्राय धीतये ॥ ४८९ ॥

असर्जि रथ्यो यथा पवित्रे चम्वोः सुतः । कार्ष्मन्वाजी न्यक्रमीत् ॥ ४९० ॥

---

(४८८।१) ॥ अंकतेः साम, ( वैरूपम् ) । अङ्कतिर्गायत्री सोमः ॥

पुनानोआ ॥ क्रामीदाऽ२३४भी । विश्वाऽ२माऽ२३४द्धाः । वीचर्षाऽ२३४णीः ॥

शुम्भाऽ२०ताऽ२३४इवी ॥ प्राऽ२०धाऽ२३४औहोवा ॥ तीऽ२३४भीः ॥

( दी० ८ । प० ७ । मा० ६ )२३( धू । ९०५ )

(४८९।१) ॥ औशने द्वे । द्वयोरुशना गायत्री सोमेन्द्रौ ॥

आविशन्कालाऽ६शꣳसुताः ॥ वाइश्वाअर्षन् । अभाइश्रायाऽ३ः । ओऽ३हाऽ३ ।

ओवा । ओऽ२३४हाइ ॥ इन्दूऽ२३ः । आऽ२इन्द्राऽ२३४औहोवा ॥ यधीयतेऽ२३४५ ॥

( दी० ६ । प० ९ । मा० १० )२४( घौ । ९०६ )

(४८९।२)

आविशन्कलशम् । सुताऽ३ः । वाइश्वाः ॥ अर्षन् । अभाइश्राया । औहोहोऽ२३४वा ॥

औहोहोऽ१इ ॥ इन्दूराऽ१इन्द्राऽ२ ॥ य । धीयाऽ२ताऽ२३४औहोवा ॥

ऊऽ२३४पा ॥ ( दी० ७ । प० ११ । मा० ९ )२५ ( चो । ९०७ )

(४९०।१) ॥ सोमसाम । सोमो गायत्री सोमः ॥

असर्जिरा ॥ थि । योयाऽ२३था । पवित्रे । चा । मुवोऽ२ःसूऽ२३४ताः ॥

कार्ष्मन्वाऽ२३जी ॥ नियक्रमाइत् । औऽ२३होवा । होऽ५इ ॥ डा ॥

( दी० ३ । प० ११ । मा० ८ )२६( टी । ९०८ )

---

[साम-तन्त्र-सूत्राणि][९०५]२३ रसग ५.४.३; [९०६]२४ [९०७]२५ ( पृथक् सूत्राणि न सन्ति )
[९०८]२६ अन्त्ये १०.४.८;

मेध्यातिथिः काण्वः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । १ )

प्र ये गावो न भूर्णयस्त्वेषा अयासो अक्रमुः । घ्नन्तः कृष्णामप त्वचम् ॥ ४९१ ॥

निध्रुविः काश्यपः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६३ । २४ )

अपघ्नन् पवसे मृधः क्रतुवित्सोम मत्सरः । नुदस्वादेवयुं जनम् ॥ ४९२ ॥

निध्रुविः काश्यपः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६३ । ७ )

अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ ४९३ ॥

प्र यद्गावो न भूर्णयस्त्वेषा अयासो अक्रमुः । घ्नन्तः कृष्णामप त्वचम् ॥ ४९१ ॥

अपघ्नन् पवसे मृधः क्रतुवित्सोम मत्सरः । नुदस्वादेवयुं जनम् ॥ ४९२ ॥

अया पवस्व धारया यया सूर्यमरोचयः । हिन्वानो मानुषीरपः ॥ ४९३ ॥

---

(४९१।१) ॥ कार्ष्णे द्वे । द्वयोः कृष्णो गायत्री सोमः ॥

प्रयद्गाउ ॥ गावोनऽ३भूर्णाऽ१याऽ२३४ः । त्वेषाऽ३ः । आयाऽ२सोअक्रमुः ॥ घ्नन्ताःकाऽ२३ष्णाम् ॥ अपात्वचम् । औहोऽ२हाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

( दी० ८ । प० ८ । मा० ८ )२७ ( कै । ९०९ )

(४९१।२)

प्रयद्गाऽ२३वोनभूर्णयाः ॥ त्वाइषाअया । सोअक्रमूऽ२३ः । घ्नाऽ२३४०तोहाइ ॥ काऽ२ष्णाऽ२३४औहोवा ॥ अपत्वचाऽ२३४५म् ॥  ( दी० ७ । प० ६ । मा० ८ )२८( चै । ९१० )

(४९२।१) ॥ सोमसाम ( वैश्वदेवम् ) । सोमो गायत्री सोमः ॥

अपघ्नाँ । होइपावा ॥ साइमाऽ१द्धाऽ२ः । क्रातुवित्सो । ममात्साऽ१राऽ२ः ॥ नुदाऽ२३ ॥ स्वाऽ२दाऽ२३४औहोवा ॥ वयुञ्जनाऽ२३४५म् ॥

( दी० ८ । प० ८ । मा० ६ )२९( दु । ९११ )

(४९३।१) ॥ सूर्यसाम ( वैश्वदेवम् ) । सूर्यो गायत्री सूर्यः ॥

इअयापवा ॥ स्वधाऽ२ । रयाऽ३१उवाऽ२३ । ऊऽ३४पा । ययासूर्यमरोऽ२ । वयाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ हिन्वानोमानुषोऽ२३इहोइ ॥ आपआऽ३१उवाऽ२३ ॥ ऊऽ३२३४पा ॥

( दी० ७ । प० १० । मा० ७ )३० ( क्ले । ९१२ )

---

[ साम-तन्त्र-सूत्राणि ] [९०९]२७ आमुप्रथमात् ३.१.९, अः ७.४.३; [९१०]२८ हे ८.७.१० [९११]२९ [९१२]३० ( पृथक् सूत्राणि न सन्ति )

अमहीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । २२ )

स पवस्व य आविथेन्द्रं वृत्राय हन्तवे । वव्रिवांसं महीरपः ॥ ४९४ ॥

अमहीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ९ । ६१ । १ )

अया वीती परि स्रव यस्त इन्दो मदेष्वा । अवाहन्नवतीर्नव ॥ ४९५ ॥

स पवस्व य आविथेन्द्रं वृत्राय हन्तवे । वव्रिवाꣳसं महीरपः ॥ ४९४ ॥

अया वीती परि स्रव यस्त इन्दो मदेष्वा । अवाहन्नवतीर्नव ॥ ४९५ ॥

---

(४९४।१) ॥ वार्त्रघ्नम् । इन्द्रो गायत्रिन्द्रो वृत्रहा ॥

सहोऽ३४३इ । पवस्व ॥ यआऽ२विथा । इन्द्रंवृत्राऽ३ । याहन्ताऽ२३४वे ।

ओवाऽ३ओवा ॥ वव्रिवाऽ२३ꣳसाम् ॥ माहीरपा । औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० १ । प० ११ । मा० ५ )३१( कु । ९१३ )

(४९५।१) ॥ सोम सामानि त्रीणि । अयाणां सोमो गायत्री सोमः ॥

अयावीती ॥ पारिस्रवा । यस्तइन्दाउ । मादाइषुवा ॥ अवाहाऽ३न्नाऽ२ ॥

वतोऽ२३४वा । नाऽ५वोऽ६हाइ ॥ ( दी० ८ । प० ७ । मा० ४ )३२( थी । ९१४ )

(४९५।२)

अयावीता ॥ औहोवा । औहोऽ३४इ । औ । होऽ२ । वाऽ२३४ ।

औहोवा ॥ परिस्रव ॥ यस्तइन्दा ॥ औहोवा । औहोऽ३४इ । औ । होऽ२ ।

वाऽ२३४ । औहोवा ॥ मदेऽ२षुवा ॥ अवाहन्ना ॥ औहोवा । औहोऽ३४इ । औ । होऽ२ ।

वाऽ२३४ । औहोवा ॥ वतीर्नवाऽ२३४५ ॥ ( दी० २१ । प० २४ । मा० ४ )३३( धी । ९१५ )

(४९५।३)

अयाऽ५वा । ताऽ३इपाऽ३रिस्रवा ॥ यास्तइन्दो । मदाइषूऽ१वाऽ२ ॥

अवाहाऽ३न्ना ॥ वतीर्नवा । औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० ३ । प० ९ । मा० ४ )३४ ( ढी । ९१६ )

---

[ साम-तन्त्र-सूत्राणि ][९१३]३१ नर्चाहम् १२.४.७;[९१४]३२[९१५]३३ [९१६]३४ ( पृथक् सूत्राणि न सन्ति )

उचथ्य आङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ५२ । १ )

परि द्युक्षः सनद्रयिर्भरद्वाजं नो अन्धसा । सुवानो अर्ष पवित्र आ ॥ ४९६ ॥

मेधातिथिः काण्वः । पवमानः सोमः । गायत्री । ( ऋ० ९ । २ । ६ )

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सं सूर्येण रोचते ॥ ४९७ ॥

भृगुर्वारुणिर्जमदग्निर्भार्गवो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६५ । २८ )

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ ४९८ ॥

परि द्युक्षꣳसनद्रयिं भरद्वाजं नो अन्धसा । स्वानो अर्ष पवित्र आ ॥ ४९६ ॥

अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः । सꣳसूर्येण दिद्युते ॥ ४९७ ॥

आ ते दक्षं मयोभुवं वह्निमद्या वृणीमहे । पान्तमा पुरुस्पृहम् ॥ ४९८ ॥

---

(४९६।१) ॥ भारद्वाजम् । भरद्वाजो गायत्री सोमः ॥

परिद्युक्षाम्॥ ओइ । सनद्रायीऽ२म् । ओइ । भरद्वाजाऽ२म् । ओइ ।
नोअन्धासाऽ२३४॥ स्वानोऽ२३४अर्षाऽ३॥ पवोवा । त्राऽ५योऽ६हाइ ॥

( दी० २ । प० १० । मा० ९ )३५ ( जो । ९१७ )

षोडशतृतीयः, तृतीयः खण्डः ॥ ३ ॥ दशतिः ॥ १ ॥

इति ग्रामे गेय-गाने त्रयोदशः प्रपाठकः ॥ १३ ॥

(४९७।१) ॥ वार्षाहरम् । वृषाहरिर्गायत्री सूर्यः ॥

अचिक्रदाऽ२त् । आचिक्रदाऽ२त् । अचिक्रदाऽ५दे॥ वृषाहराऽ२इ ।
वार्षाहराऽ२इ । वृषाहराऽ५ए॥ महान्मित्राऽ२ः ।
माहान्मित्राऽ२ः । महान्मित्राऽ५ए॥ नदर्शताऽ२ः । नादर्शताऽ२ः ।
नदर्शताऽ५ए॥ सꣳसूरियाऽ२इ । साꣳसूरियाऽ२इ । सꣳसूरियाऽ५ए॥ णदिद्युताऽ२इ ।
णादिद्युताऽ२इ । णदाऽ'२इद्युताउ ॥ वा ॥ ( दी० ९ । प० ११ । मा० १८ )१ ( घे । ९१८ )

(४९८।१) ॥ वार्शाणि त्रीणि । त्रयाणां वृशो गायत्री सोमः ॥

आतेदक्षाम्॥ मयोभूऽ३वाम् । वह्निम । द्याऽ । वृणीऽ२माऽ२३४हाइ ॥
पा०तमाऽ३ । ईऽ३या॥ पुरूऽ२३ । स्पृऽ२हाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥

( दी० ४ । प० १० । मा० ८ )२( न्ली । ९१९ )

---

[ साम-तन्त्र-सूत्राणि ][९१७]३५ [९१८]१ [९१९]२ ( पृथक् सूत्राणि न सन्ति )

उचथ्य आङ्गिरसः। पवमानः सोमः। गायत्री। ( ऋ० ९।५१।१ )

अध्वर्यो अद्रिभिः सुतं सोमं पवित्र आ सृज। पुनीहीन्द्राय पातवे ॥ ४९९ ॥

अध्वर्यो अद्रिभिः सुतꣳ सोमं पवित्र आ नय। पुनाहीन्द्राय पातवे ॥ ४९९ ॥

---

(४९८।२)

आतेदाऽ२३४क्षाम्। मायोभूऽ२३४वाम्॥ वह्निमद्यावृणी। महोऽ२३४हाइ॥
पा०ताऽ३माऽ३। ईऽ३याऽ३॥ पूऽ२रूऽ२३४औहोवा॥ स्पृऽ२३४हाम्॥

( दी० ४। प० ८। मा० ५ )३( दु। ९२० )

(४९८।३)

आतेदक्षमयः भुवोऽ२३४हाइ॥ वह्निमद्यावृणी। महोऽ२३४हाइ॥
पा०ताऽ१माऽ२॥ पूरुस्पृहम्। इडाऽ२३माऽ३४३। ओऽ२३४५इ॥ डा॥

( दी० ४। प० ९। मा० ५ )४( धु। ९२१ )

(४९९।१) ॥ वैरूपे द्वे। द्वयोरिन्द्रो गायत्री सोमः॥

अध्वर्योऽ२३४आ॥ द्रिभाइस्सुऽ३ताऽ३म्। सामाऽ२०पाऽ२३४वी।
त्राआऽ१नयाऽ२॥ पुनाऽ२३॥ हीन्द्राऽ३४औहोवा॥ यपातवेऽ२३४५॥

( दी० ५। प० ७। मा० ५ )५( फु। ९२२ )

(४९९।२)

अध्वर्या। होअद्री॥ भिस्सुतम्। औऽ३होऽ३वाऽ३। सामाऽ२०पाऽ२३४वी।
ओत्राआऽ१नायाऽ२॥ पुनाऽ२३॥ हाऽ२इन्द्राऽ२३४औहोवा॥ यपातवेऽ२३४५॥

( दी० ५। प० ९। मा० ५ )६( सु। ९२३ )

---

[ साम-तन्त्र-सूत्राणि। [९२१]४ ग प्रथमयन्ते ३,५,३; [९२०]३ [९२२]५ [९२३]६
[९२४]७ ( पृथक् सूत्राणि न सन्ति )

अवत्सारः काश्यपः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ५८ । १ )

तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥ ५०० ॥

निध्रुविः काश्यपः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६३ । १ )

आ पवस्व सहस्रिणं रयिं सोम सुवीर्यम् । अस्मे श्रवांसि धारय ॥ ५०१ ॥

असितः काश्यपो देवलो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । २३ । २ )

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनन्त सूर्यम् ॥ ५०२ ॥

भृगुर्वारुणिर्जमदग्निर्भार्गवो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६५ । १९ )

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदञ्छ्येनो न योनिमा ॥ ५०३ ॥

तरत्स मन्दी धावति धारा सुतस्यान्धसः । तरत्स मन्दी धावति ॥ ५०० ॥

आ पवस्व सहस्रिण२ रयि२ सोम सुवीर्यम् । अस्मे श्रवा२सि धारय ॥ ५०१ ॥

अनु प्रत्नास आयवः पदं नवीयो अक्रमुः । रुचे जनन्त सूर्यम् ॥ ५०२ ॥

अर्षा सोम द्युमत्तमोऽभि द्रोणानि रोरुवत् । सीदन्योनौ वनेष्वा ॥ ५०३ ॥

---

(५००।१) ॥ तरत्तस्य साम । तरन्तो गायत्री सोमः ॥

तरत्समा॥ दीधावाऽ१ताऽ२३इ । धाराऽ२सूऽ२३४ता॥ स्यआऽ२३ ।

धाऽ२साऽ२३४औहोवा॥ तरत्समन्दीधावतीऽ२३४५ ॥ ( दी० ६ । प० ६ । मा० ३ )७( कि । ९२४ )

(५०१।१) ॥ सोमसाम । सोमो गायत्री सोमः ॥

आपवस्वा॥ सहस्रिणाम् । हुवाइ । हुवाऽ२३हो॥ रयिं२सोमा । सुवीरियाम् ।

हुवाइ । हुवाऽ२३होइ॥ अस्मेश्रवा । सिधारया । हुवाइ । हुवाऽ२३होऽ२ ।

वाऽ२३४औहोवा ॥ ऊऽ२३४पा ॥ ( दी० ७ । प० १४ । मा० ७ )८ ( ङ्वे । ९२५ )

(५०२।१) ॥ सूर्यसाम । सूर्यो गायत्री सूर्यः ॥

अनुप्रत्नासआयाऽ२वाः॥ पदन्नवीयोअक्रमूः॥ रुचाइजना॥ ताऽ२सू ।

हिम्मायेऽ२॥ रीऽ२३४याम् ॥ ( दी० ८ । प० ६ । मा० ६ )९( तू । ९२६ )

(५०३।१) ॥ दार्ढच्युतानि त्रीणि । त्रयाणां दृढच्युतिर्गायत्री सोमः ॥

अर्षा॥ इहा । सोमद्युमाऽ२त्तमा । इहा॥ अभाइ॥ इहा । द्रोणानिरोऽ२रुवा ।

इहा॥ सीदा॥ इहा॥ योनौवनाऽ२इपुवा॥ इहाऽ१ ॥( दी० ६ । प० १२ । मा० ३ )१०( खा । ९२७)

---

[ साम-तन्त्र-सूत्राणि [९२४]७[९२५]८ ( पृथक् सूत्राणि न सन्ति ) [९२६]९ तद्वधिगीता १.५.६; [९२७]१० द्रोण_११.५.४;

कश्यपो मारीचः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६४ । १ )

वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दधिषे ॥ ५०४ ॥

कश्यपो मारीचः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६४ । १३ )

इषे पवस्व धारया मृज्यमानो मनीषिभिः । इन्दो रुचाभि गा इहि ॥ ५०५ ॥

वृषा सोम द्युमाँ असि वृषा देव वृषव्रतः । वृषा धर्माणि दध्रिषे ॥ ५०४ ॥

इषे पवस्व धारया मृज्यमानो मनीषिभिः । इन्दो रुचाभि गा इहि ॥ ५०५ ॥

---

(५०३।२)

अर्षाहाउ ॥ सोमद्युमत्तमो । भिद्रोऽ२३णा । निराऔऽ३हो । रुवाऽ२३त् ॥
सीदाउवा ॥ योनौवाऽ३नै । हिम्मायेऽ३ ॥ पूऽ२३४वा ॥

( दी० ४ । प० ९ । मा० ४ )११( धी । ९२८ )

(५०३।३)

अर्षासोमद्युम । तमाः । अर्षासोमा ॥ द्यूमत्तमः । अभिद्रोणाऽ२३हा ।
निरोरुवत् ॥ साइदन्योनाऽ२३उहाइ ॥ वनाइपूऽ२३वाऽ३४३ । ओऽ२३४५इ ॥डा॥

( दी० ७ । प० १० । मा० ८ )१२( जै ९२९ )

(५०४।१) ॥ वृषकम् । इन्द्रो गायत्री सोमः ॥

वृषासोमा ॥ द्युमाऽ२९आसाऽ२इ । वृषादेवाऽ३हाऽ३इ । वार्षव्राऽ२३४ताः ॥
वृषाधर्माऽ३ ॥ ईऽ३या ॥ णाइदध्रिषे । इडाऽ२३भाऽ३४३ । ओऽ२३४५ इ ॥ डा ॥

( दी० ३ । प० १० । मा० ६ )१३ ( णू । ९३० )

(५०५।१) ॥ ऐषम् । इषो गायत्री सोमः ॥

इषेपवा ॥ स्वधारयौहोवाऽ३हाऽ३४ । औहोवा । मृज्यमौऽ२नोमनीषिभिः ॥
इन्दोरुचा ॥ अभिगौहोवाऽ३हाऽ३४ । औहोवा ॥ उप् । इहीऽ२३४५ ॥

( दी० १५ । प० ९ । मा० २ )१४( भा । ९३१ )

---

[ साम-तन्त्र-सूत्राणि ,[९२८]११ [९२९]१२ [९३०]१३ [९३१]१४ ( पृथक् सूत्राणि न सन्ति )

असितः काश्यपो देवलो वा । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६ । १ )

मन्द्रया सोम धारया वृषा पवस्व देवयुः । अव्यो वारेष्वस्मयुः ॥ ५०६ ॥

कविर्भार्गवः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ४७ । १ )

अया सोमः सुकृत्यया महश्चिदभ्यवर्धत । मन्दान उद्वृषायते ॥ ५०७ ॥

जमदग्निर्भार्गवः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६२ । १० )

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥ ५०८ ॥

मन्द्रया सोम धारया वृषा पवस्व देवयुः । अव्या वारेभिरस्मयुः ॥ ५०६ ॥

अया सोम सुकृत्यया महान्त्सन्नभ्यवर्धथाः । मन्दान इद्वृषायसे ॥ ५०७ ॥

अयं विचर्षणिर्हितः पवमानः स चेतति । हिन्वान आप्यं बृहत् ॥ ५०८ ॥

---

(५०६।१) ॥ श्यावाश्वम् । श्यावाश्वो गायत्री सोमः ॥

मन्द्रयासो ॥ मधारया । वृषापाऽ ३वा । स्वदाइवाऽ२३यूः ॥ अव्याऽ२३ः ॥
वाऽ२राऽ२३४औहोवा ॥ भिरस्मयूऽ१ः ॥ ( दी० ५ । प० ७ । मा० ५ ) १५ ( फु । ९३२ )

(५०७।१) ॥ अयासोमीयम् । अयासोमो गायत्री सोमः ॥

अयाऽ३सोऽ३मसुकृत्यया ॥ महान्त्सन्ना । भ्यवाऽ२र्द्धाऽ२३४थाः ॥
मा०दानआयेऽ३त् ॥ वृषाऽ३याऽ५साऽ६५६ इ ॥ ( दी० ३ । प० ५ । मा० ४ ) १६ ( जी । ९३३ )

(५०८।१) ॥ आग्नेयम् । अग्निर्गायत्री सोमः ॥

आ । औहोहोवाहाइ । अयंविचा । पणाइर्हाइता । औहोहोवाहाइ । पवमानाः ।
सचाइताता । औहोहोवाहाइ ॥ हिन्वानआ ॥ पियाँऽ३हौऽ३ । इवोवा ।
बृऽ५होऽ६हाइ ॥ ( दी० ८ । प० १२ । मा० ९ ) १७ ( ठा । ९३४ )

---

[ साम-तन्त्र-सूत्राणि ] [९३२]१५[९३३]१६[९३४]१७ (पृथक् सूत्राणि न सन्ति )

अयास्य आङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ४४ । १ )

प्र ण इन्दो महे तने ऊर्मिं न बिभ्रदर्षसि । अभि देवाँ अयास्यः ॥ ५०९ ॥

अमहीयुराङ्गिरसः । पवमानः सोमः । गायत्री । ( ऋ० ९ । ६१ । २५ )

अपघ्नन् पवते मृधोऽप सोमो अराव्णः । गच्छन्निन्द्रस्य निष्कृतम् ॥ ५१० ॥

प्र न इन्दो महे तु न ऊर्मिं न बिभ्रदर्षसि । अभि देवा१ अयास्यः ॥ ५०९ ॥

अपघ्नन् पवते मृधोऽप सोमो अराव्णः । गच्छन्निन्द्रस्य निष्कृतम् ॥ ५१० ॥

(५०९।१) ॥ आयास्ये द्वे । द्वयोरयास्यो गायत्री सोमः ॥

प्रनइन्दोऐ । हीऐहीऽ२३४या ॥ महेतुनऐऽ२हीऽ२हीऽ३या ।

ऊर्मिंन्नबिभ्रदर्षसऐऽ२हीऐऽ२हीऽ३या ॥ अभायेऽ३ ॥ दाऽ२इवाऽ२३४औहोवा ॥

अयासियाऽ२३४५: ॥ ( दी० ७ । प० ७ । मा० १० ) १८( छौ । ९३५ )

(५०९।२)

प्रनइन्दो । इयाऽ३४३ईऽ३४या ॥ महेतुनइयाऽ२ईऽ३या ।

ऊर्मिंन्नबिभ्रदर्षसइयाऽ२ईऽ२या ॥ अभायेऽ३ ॥ दाऽ२इवाऽ२३४औहोवा ॥

एऽ३ । अयासियाऽ२३४५: ॥ ( दी० ६ । प० ८ । मा० ९ )१९ ( गो । ९३६ )

(५१०।१) ॥ भारद्वाजम् । भरद्वाजो गायत्री सोमेन्द्रौ ॥

होईऽ२३४या । [ द्विः ] । इयाहाइ । अपघ्नाऽ२३न्पाऽ२३४५ ॥

होईऽ२३४या । [ द्विः ] । इयाहाइ । वताइ । माऽ२ । धाऽ२३४ ।

औहोवा । अपसोमोऽ२अराऽ२व्णाऽ२३४५: ॥ होईऽ२३४या । [ द्विः ] ।

इयाहाइ । गच्छन्नाऽ२३इन्द्राऽ२३४५ ॥ होईऽ२३४या । [ द्विः ] ॥ इयाहाइ ।

स्यनाइः । क्राऽ२ । ताऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥

( दी० ७ । प० २४ । मा० १८ )२०( श्रे । ९३७ )

विंशतिश्चतुर्थः, चतुर्थः खण्ड. ॥ ४ ॥ दशतिः ॥ २ ॥

---

[ साम-तन्त्र-सूत्राणि [९३५]१८[९३६]१९ ( पृथक् सूत्राणि न सन्ति ) [९३७]२० रत्यादिन्या० हि ३.१.५;

नेन्तात् ४.६.२:

अत्रिर्भौमः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । ४ )

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः ॥ ५११ ॥

पुनानः सोम धारयापो वसानो अर्षसि ।
आ रत्नधा योनिमृतस्य सीदस्युत्सो देवो हिरण्ययः ॥ ५११ ॥

---

(५११।१)   ॥ आयास्यम् । अयास्यो बृहती सोमः ॥

पुनानःसो ॥ माऽ२धाऽ२३४औहोवा । राऽ२३४या । अपोवसानोअर्षासि ॥
आरात्नाऽ३धाः । योनाइमाऽ३र्त्ताऽ३ । स्याऽ२साऽ२३४औहोवा ।
दाऽ२३४सी ॥ उत्सोदेऽ३वोऽ३ ॥ हाऽ२इराऽ२३४औहोवा ॥ ण्याऽ२३४याः ॥

( दी० १२ । प० ११ । मा० ८ )२१( चे । ९३८)

(५११।२)   ॥ माण्डवम् । मण्डुर्बृहती सोमः ।

इयाऽ२ईऽ३या । पुनानःसोऽ२ । मधाराऽ२३४या ॥ अपोवसानोअर्षाऽ२३सी ।
आरत्नधायोनिमृतस्यसीदाऽ२३सी ॥ उत्सोदेवोऽ२३ ॥ हाऽ२इराऽ२३४औहोवा ॥
ण्याऽ३याऽ२३४५: ॥

( दी० १२ । प० ८ । मा० ५ )२२( जु । ९३९ )

(५११।३)   ॥ आपद्रासम् । वसिष्ठो बृहती सोमः ॥

पुनानःसोमधारया ॥ अपोवसानोअर्ष । स्योऽ३हा । ओऽ३हा ।
आरत्नधायोनिमृतस्यसीद । स्योऽ३हा । ओऽ३हा ॥ उत्सोदाऽ१इवाऽ२: ।
ओऽ३हा । ओऽ३हा ॥ हिरण्याऽ२३याऽ३४३: । ओऽ२३४५इ ॥ डा ॥

( दी० १० । प० १३ । मा० ५ )२३ ( तु । ९४० )

(५११।४)   ॥ सोमसाम । सोमो बृहती सोमः ॥

पुनानःसोऽ५मधारया ॥ आपोऽ२वासाऽ२ । नोअर्षसी । आराऽ२त्नाधाऽ२: ।
योनिमार्त्ताऽ२ । स्यसीदसी ॥ उत्सोऽ२दाइवाऽ२: ॥ हिरण्याऽ२३याऽ३४३: ।
ओऽ२३४५इ ॥ डा ॥

( दी० ५ । प० १० । मा० ६ )२४( मू । ९४१ )

---

[साम-तन्त्र-सूत्राणि] [९३८]२१[९३९]२२[९४०]२३ (पृथक् सूत्राणि न सन्ति )   [९४१]२४रय दन्त्यरं ८.२.६;

(५११।५)　　॥ ऐडमायास्यम् । अयास्यो बृहती सोमः ॥

आइपुना॥ नाःसो । मधारया । आपोवसाऽ३१ । नोअर्षसी । आरत्नधाऽ३१ः ।
योनिमृता । स्यसीदसी॥ ऊत्सोदेवाऽ३१ः॥ हिरण्याऽ२३याऽ३४३ः ।
ओऽ२३४५इ ॥ डा ॥　　( दी० ५ । प० १२ । मा० ६ )२५ ( फू । ९४२ )

(५११।६)　　॥ माण्डवम् । मण्डुर्बृहती सोमः ॥

पुनानःसोमधारया । पोवसोवा॥ नोअर्षसि । आ२त्न । धाउवाऽ२३ ।
होवाऽ३हाइ । योनिमृतस्यसीदसि॥ उत्सादे । वाउवाऽ२३ ।
होवाऽ३हाइ॥ हिरण्याऽ२३याऽ३४३ः । ओऽ२३४५इ ॥ डा ॥
( दी० ११ । प० १३ । मा० ७ )२६ ( गे । ९४३ )

(५११।७)　　॥ उद्वत्प्राजापत्यम् । प्रजापतिर्बृहती सोमः ॥

पुनानःसोमधा । होऽ५रया॥ अपोवसानआहोऽ२ । पासीऽ२ ।
आरत्नधायोनिमृतस्यसाहोऽ२इ । दासीऽ२॥ उत्साऽ२होऽ१इ । दाऽ२३इवोऽ३॥
हिरोऽ२३४वा । ण्याऽ५योऽ६हाइ ॥　　( दी० ८ । प० १० । मा० ५ )२७ ( णु । ९४४ )

(५११।८)　　॥ त्रिणिधनमायास्यम् । अयास्यो बृहती सोमः ॥

पुनानःसोमधाहाउहोवा॥ रायाआऽ२३४पो । वसाऽ२ । नआऽ३४५ ।
पाऽ२३४सी॥ आराऽ३४ । औहोवा । त्नधायोनिमृताऽ२ । स्यसाऽ२४५इ ।
दाऽ२३४सी॥ उत्साऽ३४ । औहोवा॥ दाइवोऽ२ । हिराऽ३४५ ॥
ण्याऽ२३४याः ॥　　( दी० ११ । प० १५ । मा० ६ )२८ ( ङू । ९४५ )

(५११।९)　　॥ कण्वरथन्तरम् । कण्वो बृहती सोमः ॥

पूनानःसोमधारया॥ अपोवसा । नोऽ३आपोऽ३सी । आरत्नधायोनिमृतस्यसीदसाऽ२३४एही ॥
उत्सोदाऽ२३४इवाः॥ हिराऽ३१उवाऽ२३॥ एऽ३ । ण्ययआ ॥
( दी० ११ । प० ८ । मा० ६ )२९ ( गू । ९४६ )

(५११।१०)　　॥ तिरश्ची ( द्वि ) निधनमायास्यम् । अयास्यो बृहती सोमः ॥

पुनानःसोमधारया । एऽ३ । औऽ३होऽ५वाऽऽ॥ आपोऽ३ । वसाऽ२ । नआऽ३४५ ।
पाऽ३सीऽ२ । आरत्नधाः । योनिमृता । स्यासाऽ३आ । औऽ३होऽ३ ।
दाऽ२३४सी॥ उत्साऔऽ३हो॥ दाइवोऽ२ । हिराऽ३४५॥ ण्याऽ३याऽ२३४५ः ॥
( दी० ४ । प० १६ । मा० ६ )३० ( तू । ९४७ )

[साम-तन्त्र-सूत्राणि][९४२]२५ म ८.३.१०;　[९४३]२६ दुचु प्रथमे ९.६.६;　[९४४]२७
[९४५]२८[९४६]२९[९४७]३० ( पृथक् सूत्राणि न सन्ति )

(५११।११) ॥ सदोविशीयम् । प्रजापतिर्बृहती सोमः ॥

पुनानःसोमधारयाओहाओहाऽ६इ । औहोऔहोऽ५वा॥ अपोवसानोअर्ष ।
स्योऽ२हा । ओऽ३हाऽ३ए । औऽ३होइ । औऽ३होऽ३वा । आरत्नधायोनिमृतस्यसीद ।
स्योऽ२हा । ओऽ३हाऽ३ए । औऽ३होइ । औऽ३होऽ३वा॥ उत्[illegible]हाऽ१इवाऽ२ः ।
ओऽ२हा । औऽ३हाऽ३ए । औऽ३होइ । औऽ३होऽ३वा॥ हिर ।
ण्याऽ२याऽ२३४औहोवा॥ सदोविशाऽ२३४५ः ॥ ( दी० २० । प० २० । मा० १५ )३१ ( मु । ९४८ )

(५११।१२) ॥ स्ववासिनी द्वे । द्वयोर्जमदग्निर्बृहती सोमः ॥

ओऽ२होऽ१ । वाओवा। ओऽ२होऽ१। वाओवा। ओऽ२होऽ१। वाओवाऽ३।
ओऽ२वाऽ२३४औहोवा। पुनानःसोमधारया॥ पोवसानोअर्षसि॥ आरत्नधायोनिमृतस्यसीदसि॥
उत्सोदेवाः । ओऽ२होऽ१ । वाओवा । ओऽ२होऽ१ । वाओवा । ओऽ२होऽ१ ।
वाओवाऽ३ । ओऽ२वाऽ२३४औहोवा॥ एऽ३ । हिरण्ययाऽ२३४५ः ॥

( दी० १२ । प० २० । मा० ११ )३२ ( ज । ९४९ )

(५११।१३)

ओऽ३ । होऽ१ । वाओवाऽ३ । ओऽ२वाऽ२३४औहोवा । पुनानःसोमधारया ।
पोवसानोअर्षसि॥ आरत्नधायोनिमृतस्यसीद । स्योऽ३ । होऽ१ । वाओवाऽ३ ।
ओऽ२वाऽ२३४औहोवा॥ उत्सोदेवोहिरण्ययः । इडाऽ२३भाऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० १८ । प० १५ । मा० ७ )३३ ( णे । ९५० )

(५११।१४) ॥ ध्रुवः । वसिष्ठो बृहती सोमः ॥

हा । वोऽ३हा । वोऽ३हाऽ३ । हा । ओऽ२३४वा । हाइ । पूनानाऽ२३४ःसो ।
माधाराऽ२३४या॥ आपोवाऽ२३४सा । नोअर्षाऽ२३४सी॥ आरत्नाऽ२३४धाः ।
योनीमाऽ२३४र्त्तो । स्यासीदाऽ२३४सी॥ उत्सादाऽ२३४इवो । हाइरण्याऽ२३४याः ।
हा । वोऽ३हा वोऽ३हाऽ३ । हा । ओऽ२३४वा । हाऽ३४ । औहोवा॥ एऽ३ ।
अतिविश्वानिदुरितातरेमाऽ२३४५ ॥ ( दी० ५ । प० २४ । मा० ६ )३४ ( भू । ९५१ )

[साम-तन्त्र-सूत्राणि][९४८]३१[९४९]३२ [९५१]३४ ( पृथक् सूत्राणि न सन्ति ) [९५०]३३ [illegible]

भरद्वाजो बार्हस्पत्यः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । १ )

परीतो षिञ्चता सुतं सोमो य उत्तमं हविः ।
दधन्वाँ यो नर्यो अप्स्वन्तरा सुषाव सोममद्रिभिः ॥ ५१२ ॥

परीतो षिञ्चता सुतꣳसोमो य उत्तमꣳ हविः ।
दधन्वाꣳ यो नर्यो अप्स्वा३न्तरा सुषाव सोममद्रिभिः ॥ ५१२ ॥

---

(५११।१५) ॥ रौरवम् । रूरुर्बृहती सोमः ॥

पुनानःसोमाऽ३धाराऽ२३४या॥ आपोवसानोअर्षस्यारत्नधायोनिमृतस्यसाऽ२इदसाइ । ओहाऽ३उवा॥ उत्सोदेवोहिराऽ२३हाइ । ओहाऽ३उवा॥ ण्यया । औऽ३होवा । होऽ५इ ॥ डा ॥ ( दी० ११ । प० ९ । मा० ७ ) ३५ ( घे । ९५२ )

(५११।१६) ॥ यौधाजयम् । युधाजिद्बृहती सोमः ॥

पुनाऽ३१ । नाऽ३ःसो । म । धाराऽ२३४या॥ आपोऽ३ । वसाऽ२ । नआऽ३४५ । षाऽ२३४सी । आरात्नधाः । यो । निमृताऽ२ । स्यसाऽ३४५इ । दाऽ२३४सी ॥ उत्साऽ२ः॥ दाइवोऽ२ । हिराऽ३४५॥ ण्याऽ२३४याः ॥ ( दी० २ । प० १७ । मा० ६ )३६ ( छ । ९५३ )

॥ इति ग्रामे गेय-गाने चतुर्दशस्यार्धः प्रपाठकः ॥

(५१२।१) ॥ अच्छिद्रम् । विश्वामित्रो बृहती सोमः ॥

परीतोषी॥ चताऽ३१उवाऽ२३ । सूऽ२३४ताम् । सोमोऽ२यउत्तम२हवीः । सोमोयऊ॥ तमाऽ३१उवाऽ२३ । हाऽ२३४वीः । दधन्वा२योनर्योऽ२प्सुवन्तरा ॥ दधन्वा२याः॥ नर्योऽ२ । आ । प्सुवाऽ३१उवाऽ२३ । ताऽ२३४रा । सुषावसोममद्रिभीऽ२३४ः॥ सुषावसो । ममाऽ३१उवाऽ२३॥ द्राऽ२३४इभीः । ( दी० १५ । प० १७ । मा० १३ )१ ( फि । ९५४ )

(५१२।२) ॥ रयिष्टम् । इन्द्रो बृहती सोमः ॥

परीतोषी॥ चताह्यऽ३ताम् । औऽ३होऽ३वा । औऽ३होऽ३वा । ईऽ३या । ईऽ३याऽ३४ ।
हा । हाउवा । सोमोऽ२यउत्तमर्ठहवीः॥ सोमोयऊ॥ तमाऽ२हाऽ३वीः ।
औऽ३होऽ३वा । औऽ३होऽ३वा । ईऽ३या । ईऽ३याऽ३४ । हा । हाउवा ।
दधन्वाऽ२योनर्याऽ२प्सुवन्तरा॥ दधन्वाऽ२याः॥ औऽ२ । आ । प्सूऽ३आन्ताऽ३रा ।
औऽ३होऽ३वा । औऽ३होऽ३वा । ईऽ३या । ईऽ३याऽ३४ । हा । हाउवा ।
सुषावसोममद्रिभीऽ२३४ः॥ सुषावसो॥ ममाद्रीऽ३भाइ । औऽ३होऽ३वा ।
औऽ३होऽ३वा । ईऽ३या । ईऽ३याऽ३४ । हा । हाउवाऽ३॥ ऊऽ३२३४पा ॥

( दी० १५ । प० ३८ । मा० १३ )१( ब्लि । ९५५ )

(५१२।३) ॥ भारद्वाजे द्वे । द्वयोर्भरद्वाजो बृहती सोमः ॥

औहोइपरीतोषी॥ चतासुतम् । औऽ३होइ। औहोइ। आऽ३ । औहोऽ३वा । सोमोऽ२यउत्तमर्ठहविः॥
औऽ३होइ । औहोइ । आऽ३ । औहोऽ३वा॥ दधन्वाऽ२योनर्याऽ२प्सुवन्तरा ।
औऽ३होइ । औहोइ । आऽ३ । औहोऽ३वा । सुषावसोममद्रिभिः ।
औऽ३होइ । औहोइ । आऽ२३४ । उहुवाऽ६हाउ ॥ वा ॥( दी० २० । प० २२ । मा०१४)३(फी।९५६)

(५१२।४)

प । येपारी॥ तोपिश्वताऽ२सुतम् । आउवाऽ२३ । हाउहाउ । होऽ३वा ।
सोमोऽ२यउत्तमर्ठहविः । आउवाऽ२३ । हाउहाउ । होऽ३वा। दधन्वाऽ२योनर्याऽ२प्सुवन्तराउ।
वाऽ२३ । हाउहाउ । होऽ३वा॥ सुषावाऽ२३सोऽ३ । हाउहाउ । होऽ३वा ॥
मम । द्राऽ२३४इभाइ । उहुवाऽ६हाउ ॥ वा ॥ ( दी० १६ । प० २१ । मा० १७ ) ४ ( के । ९५७ )

(५१२।५) ॥ आभीशवे द्वे । द्वयोरभीशुर्बृहती सोमः ॥

परीतोपिश्वतासुतम् । ए॥ सोमोयउऽ३त्तामर्ठहाविः । दाऽ२३४धा ।
हाइ॥ न्वाऽ२योनर्योअप्स्वअन्तरा॥ सूऽ२३४पा । हाइ ॥ वासोममोऽ२३४वा ।
द्राऽ५इमोऽ६हाइ ॥ ( दी० ९ । प० १० । मा० ९ )५ ( नो । ९५८ )

[साम-तन्त्र-सूत्राणि][९५५]२ वैधाख्यान ४.१०.५; [९५८]१ (टि) द्विर्हीन. ६.६.३;
[९५६]३[९५७]४ ( पृथक् सूत्राणि न सन्ति )

(५१२।६)

परीतोषिञ्चतासुतम्० । ए । ए ॥ सोमोयउऽ३तामऽहावीः ॥ दाऽ२३४धा । हाऽ३हाइ ॥ न्वाऽयोनर्योअप्स्वअन्तारा ॥ स्वऽ२३४पा । हाऽ३हाइ ॥ वासोममोऽ२३४वा । द्राऽ५इभोऽ६हाइ ॥ ( दी० ९ । प० ११ । मा० ९ )६ ( तो । ९५९ )

(५१२।७) ॥ माण्डवे । द्वे । द्वयोर्मण्डुर्बृहती सोमः ॥

परीतोषिञ्चतासुतम् । इहा ॥ सोमोयउत्तमऽहाऽ२३वीः । इहा । दधन्वाऽयोनर्योअप्सुवन्ताऽ२३रा । इहा ॥ सुपावाऽ२३सो । इहा ॥ ममाऽ२३ । द्राऽ२इभाऽ२३४औहोवा ॥ ईऽ२३४हा ॥ ( दी० ११ । प० ११ । मा० ६ )७( कू । ९६० )

(५१२।८)

इहा । परीतोषिञ्चतासुतम् । इहा ॥ सोमोयउत्तमऽहाऽ२३वीः । इहाउवाऽ३ । ऊऽ३४पा । दधन्वाऽयोनर्योअप्सुवन्ताऽ२३रा । इहाउवाऽ३ ॥ ऊऽ३४पा ॥ सुपावाऽ२३सो । इहाउवाऽ३ ॥ ऊऽ३४पा । ममद्राऽ२३इभीः । इहाऊवाऽ३ ॥ ऊऽ३२३४पा ॥ ( दी० ९ । प० १५ । मा० १० )८( न्लौ । ९६१ )

(५१२।९) ॥ अभीवासस्साम । अङ्गिरसो बृहती सोमः ॥

परीतोषिञ्चतासुताम् ॥ सोमोयउ । तमऽहवाइः । दाधाओऽ२३४वा । ऊऽ२३४पा । न्वाऽयोनर्योअप्सुवन्ताऽ२३रा ॥ सुपावाऽ२३सो ॥ मामद्रिभिः । इडाऽ२३भाऽ३४३ । ओऽ२३४५ इ ॥ डा ॥ ( दी० ९ । प० ११ । मा० ८ )९ ( तै । ९६२ )

(५१२।१०) ॥ परिवासस्साम । अङ्गिरसो बृहती सोमः ॥

परीतोषिञ्चतासुतम् । ओऽ६वा ॥ सोमोऽ२यउत्तमऽहविः । दधान्वाऽयोऽ३ । हाऽ३हाइ । नर्योऽ२प्सुवन्तरा ॥ सुपावासोऽ३ । हाऽ३हा ॥ मामद्रिभिः । इडाऽ२३भाऽ३४३ । ओऽ२३४५ इ ॥ डा ॥ ( दी० ७ । प० १२ । मा० ६ )१०( छू । ९६३ )

(५१२।११) ॥ वैणवम् । वेणुर्बृहती सोमः ॥

परीतोषिञ्च । ताऽ६सुताम् ॥ सोमोयउत्तामाऽ२१ऽ२म् । हावीऽ२ः । दधन्वाऽयोनर्योअप्सुवाऽ२१ऽ२ ॥ ताराऽ२ । सुपावाऽ२३सोऽ३ ॥ ममोऽ२३४वा । द्राऽ५इभोऽ६हाइ ॥ ( दी० ८ । प० ९ । मा० ७ ) ११( है । ९६४ )

[साम-तन्त्र-सूत्राणि][९५९]६[९६०]७[९६१]८[९६२]९[९६३]१० ( पृथक् सूत्राणि न सन्ति )
[९६४]११ ओहिरे ६.१०.५;

(५११।१२) ॥ सोमक्रतवीयम्, माण्डवं वा । सोमक्रतुर्बृहती सोमः ॥

परीतोपाऽ२इ । चतासुताऽ२म् । एहीऽ२ । एहीऽ२ । एहिहाऽ२इ । उवाऽ२इ ।
ईऽ३या ॥ सोमायऊऽ२ । तमऽ२हवीऽ२ः । एहीऽ२ । एहीऽ२ । एहिहाऽ२ इ ।
उवाऽ२इ । ईऽ३या ॥ दधन्वाऽ२योनर्योऽ२ । प्सुवन्तराऽ२ । एहीऽ२ । एहीऽ२ ।
एहिहाऽ२इ । उवाऽ२इ । ईऽ३या ॥ सुपावसोऽ२ । ममद्रिभाऽ२इ । एहीऽ२ । एहीऽ२ ।
एहिहाऽ२इ । उवाऽ२इ । ईऽ३याऽ३४३ । ओऽ२३४५इ ॥ डा ॥

( दी० २० । प० ३० । मा० १४ ) १२ ( मी । ९६५ )

(५११।१३) ॥ गृद्दः । प्रजापतिर्बृहती सोमः ॥

उपाउप । उपाऽ३१ । उपाउप । परीतोपिश्चतासुतम् ॥ उपाउप । उपाऽ३१ । उपाउप ।
सोमायउत्तमऽ२हविः ॥ उपाउप । उपाऽ३१ । उपाउप ।
दधन्वाऽ२योनर्योऽ२प्सुवन्तरा ॥ उपाउप । उपाऽ३१ । उपाउप ।
सुपावसोममाद्रिभिः । उपाउप । उपाऽ३१ । उपाऽ३ऊऽ५पाऽ६५६ । ऊऽ२३४पा ॥

( दी० ११ । प० २० । मा० १४ )१३( ङ्वी । ९६६ )

(५११।१४ )॥ प्रतोदः, अंगिरसां गोष्ठः । अंगिरसो बृहती सोमः ॥ फ ऽक्ति । अंगिरसो बृहती सोमः ।
महारौरवम् । रुरुर्बृहती सोमः । कश्यपो बृहती सोमः ॥

हाउऽ(३)वा । परीतोपिश्चतासुतम् । उपाऽ२३४५ ॥ १ ॥ (१५)हाउहाउहाउवा ।
परीतोपिश्चतासुतम् । इहा । उपाऽ२३४५ ॥ २ ॥ (१६)हाउहाउहाउवा ।
परीतोपिश्चतासुतम् । श्रवोबृहत् । उपाऽ२३४५॥३॥ (१७)हाउहाउहाउवा । परीतोपिश्चतासुतम् ॥
(१८)सोमोऽ२यउत्तमऽ२हविः ॥ दधन्वाऽ२योनर्योऽ२प्सुवन्तरा ॥ सुपावसोऽ२३४५ ।
हाउऽ(३)वा ॥ एऽ३ । ममद्रिभीऽ२३४५ः ॥ ( दी० २० । प० १९ । मा० २३ )१४( भि । ९६७ )

(५११।१५) ॥ महायौधाजयम् । युधाजिद्बृहती सोमः ॥

हाओऽ२३४वा । हाओऽ२३४वा । हाऽ३ओऽ२३४वा । हाउवा । परीतोपिश्चतासुतम् ॥
सोमोऽ२यउत्तमऽ२हविः ॥ दधन्वाऽ२योनर्योऽ२प्सुवन्तरा ॥ सुपावसोममा । हाओऽ२३४वा ।
हाओऽ२३४वा । हाऽ३ओऽ२३४वा । हाउवाऽ३॥ द्राऽ३इभीऽ२३४५ः ॥

( दी० ११ । प० १३ । मा० १३ )१५( गि । ९६८ )

---

[साम-तन्त्र-सूत्राणि ][९६५]१२ गोपायाः रवेर ३ १०.७; एहर्मि ५ ६.२: [९६६]१३ हरि-उ ७.७.३;
[९६७]१४- १.२.३. [९६८]१५( पृथक् सूत्राणि न सन्ति )( १४-४ ) पञ्च हि ३.५.७;

सप्तर्षयः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । १० )

आ सोम सुवानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ ५१३ ॥
आ सोम-स्वानो अद्रिभिस्तिरो वाराण्यव्यया ।
जनो न पुरि चम्वोर्विशद्धरिः सदो वनेषु दध्रिषे ॥ ५१३ ॥

---

(५१३।१) ॥ आश्वानि चत्वारि ( आशम् ) । चतुर्णामश्वो बृहत्यश्वः ईश्वरो वा ॥

आऽ२३४सो ॥ मस्वानोऽ२आ । द्राइभाओऽ२३४वा । तिरोवाराऽ२णिअव्ययाऽ२३ ।
जानाओऽ२३४वा । नापाओऽ२३४वा ॥ रिचमवोऽ२र्विशद्धरीऽ२३ः ॥
सादाओऽ२३४वा । वानाओऽ२३४वा ॥ पुदाऽ५ध्रिषाइ । होऽ५इ ॥ डा ॥

( दी० ६ । प० १२ । मा० ११ ) १६ ( ख । १६९ )

(५१३।२) ॥ सोम साम ॥

हावासोमस्वा ॥ नोअद्राऽ२३४इभीः । तिरोवाऽ२३४रा । णियाऽ३१उवाऽ२३ ।
व्याऽ२३४या ॥ जनोनाऽ२३४पू ॥ राइचामूऽ२३४वोः । विशाऽ३१उवाऽ२३ ।
द्वाऽ२४रीः ॥ सदोवाऽ२३४ने ॥ पुदाऽ३१उवाऽ२३ ॥ ध्रीऽ२३४षे ॥

( दी० ३ । प० १२ । मा० ९ ) १७ ( ठो । १७० )

(५१३।३)

आसोमस्वानोआद्रिभाइः ॥ तिरोवाराणिआव्याऽ१याऽ२ । जनोनपुरिचामूऽ१वोऽ२ः ।
विशाद्धाऽ१रीऽ२ः ॥ सदोवनाइ ॥ पूऽ२दध्रिषोऽ२३४५इ ॥ डा ॥

( दी० ९ । प० ७ । मा० ८ ) १८ ( थै । १७१ )

(५१३।४)

आसोमस्वानोअद्रिभिः । तिरोवाऽ२राणिअव्यया ॥ जनोनपुरिचमुवोर्विशद्धरिः ।
औऽ२ । हुवाइ । होऽ३वा ॥ सदोवनेपुदौऽ२ । हुवाइ । होऽ३वा ॥ ध्रिषा ।
औऽ३होवा । होऽ५इ ॥ डा ॥

( दी० १० । प० १३ । मा० ७ ) १९ ( बे । १७२ )

---

[ साम-तन्त्र-सूत्राणि ][१७०]१७[१७१]१८ [१७२]१९ ( पृथक् सूत्राणि न सन्ति )
[१६९]१६ ओभिन्नो० स्तोत्रे ८.८.५;

राहूगणः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । १२ )

प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा ।

अंशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ५१४ ॥

प्र सोम देववीतये सिंधुर्न पिप्ये अर्णसा ।

अꣳशोः पयसा मदिरो न जागृविरच्छा कोशं मधुश्चुतम् ॥ ५१४ ॥

---

(५१४।१) ॥ त्रीणिधनमाग्नेयम् । अग्निर्बृहती सोमः ॥

प्रसोमदा ॥ वावीताऽ२३४याइ । सिन्धूर्नापाइप्यआऽ३१उवाऽ२३ ।

णाऽ२३४सा ॥ आꣳशोःपाऽ२३४या ॥ सामदाइरोनजाऽ३१उवाऽ२३ ।

गृऽ२३४वीः ॥ आच्छाकोऽ२३४शाम् ॥ मधाऽ३१उवाऽ२३ ॥ श्चूऽ२३४ताम् ॥

( दी० ३ । प० १० । मा० १० )२०( णौ ९७३ )

(५१४।२) ॥ अग्नेर्वैश्वानरस्य साम । अग्निर्बृहती सोमः ॥

प्रसोमदेववी । तयोऽ२३४हाइ ॥ सिन्धुर्नपिप्यअ । र्णसोऽ२३४हाइ ॥

आꣳशाओऽ२३४वा । पायाओऽ२३४वा ॥ सामदिरोनजा । गृऽ२३४ ।

वीऽ६हाइ ॥ आच्छाओऽ२३४वा । कोशाओऽ२३४वा ॥ मधूऽ५श्चुताम् ।

होऽ५इ ॥ डा ॥ ( दी० ७ । प० १४ । मा० १० )२१ ( झौ । ९७४ )

(५१४।३) ॥ द्विहिङ्कारं वामदेव्यम् । वामदेवो बृहती सोमः ॥

प्रसोमाऽ२३देववीतयाइ ॥ साइन्धुर्नपिप्यअर्णसाꣳशोःपयसामदिरोनजाहोऽ३ ।

हिम्माऽ२ । गृऽ२३वीः ॥ अच्छाकोशा०मधौहोऽ३ । हिम्माऽ२ ॥ श्चुताम् ।

औऽ२३होवा । होऽ५इ ॥ डा ॥ ( दी० ११ । प० १० । मा० ६ )२२( ङ्ग । ९७५ )

(५१४।४) ॥ उत्सेधः । अंगिरसो बृहती सोमः ॥

प्रसोमदेववीतये । सिन्धुः । नपाऽ३४औहोवा ॥ प्यअर्णसाऽ२ । हाऽ३१उवाऽ२३ ।

ऊऽ३४पा ॥ अꣳशोऽ३ःपया । औहोवाहाइ ॥ सामदिरो । नजागृविः ।

हाऽ३१उवाऽ२३ । ऊऽ३४पा ॥ अच्छाऽ३कोशम् । औहोवाहाइ ॥

मधूऽ३श्चूऽ५ताऽ६५६म् ॥ ऊऽ२३४५ ॥ ( दी० ११ । प० १६ । मा० १० )२३( कौ । ९७६ )

---

[साम-तन्त्र-सूत्राणि ][९७३]२० चतांचिखिङ् १.९.६; उणोधुः ६.१.१; [९७४]२१ ( पृथक् सूत्राणि न सन्ति ;
[९७५]२२ उच्चमन्त्यम् ७.५.५; [९७६]२३ आर्नाक्षि ६.६.१; शम् ७.९.१;

सप्तर्षयः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । ८ )

सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ५१५ ॥

सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ५१५ ॥

---

(५१४।५)  ॥ निषेधः । अंगिरसो बृहती सोमः ॥

प्रसोमेदाइवाऽ६वीतयाइ ॥ सिन्धूर्नेपाइ । प्येअर्णसाऽ२ । इहाऽ३ ॥
आऽ२ंशोऽ३ःपाया । हाहोऽ२३४हा । सामदिरो । नजागृऽ२३वीः ।
इहाऽ३ ॥ आच्छाऽ३कोशाम् । हाहोऽ२३४हा ॥ मधूऽ३श्चूऽ५ताऽ६५६म् ॥
हेऽ२३४५ ॥  ( दी० ५ । प० १३ । मा० ७ )२४ ( बे ९७७ )

(५१५।१)  ॥ सोम सामानि षट् । षण्णां सोमो बृहती सोमाश्वौ ॥

हाउसोमाः॥ उष्वाणऽ३ःसोतृऽ१भीऽ२ः । आधिष्णुभिरवीऽ२नाम् । आश्वौऽ३हो ।
येवहरितायाताइधाऽ१रायाऽ२॥ मन्द्रायाऽ२याऽ३४ । हाओवा॥ तिधारयाऽ२३४५ ॥
( दी० ८ । प० ८ । मा० ६ )२५ ( ङू । ९७८ )

(५१५।२)
सोमऊऽ३ष्वाणःसातृभाइः॥ आधिष्णुभिरवीनाम् । आश्वयेऽ२३४वा ।
हरितायातिधाऽ१राऽ२या॥ मन्द्रायाऽ२३४या॥ ताऽ२३४इधा । रया ।
औऽ३होवा । होऽ५इ ॥ डा ॥  ( दी० ७ । प० १० । मा० ६ )२६ ( चू । ९७९ )

(५१५।३)
सोमउष्वाणःसातृभिः । ए३ऽ५ । अधी॥ ष्णुभिराऽ३१उवाऽ२३ । वीऽ२३४नाम्॥
आऽ२३श्वा॥ येवहरितायातिधाऽ३१उवाऽ२३ । राऽ२३४या॥ माऽ२३०द्रा ॥
यायातिधाऽ३१ऊवाऽ२३॥ राऽ२३४या ॥  ( दी० ७ । प० ११ । मा० ६ )२७ ( चू । ९८० )

---

[साम-तन्त्र-सूत्राणि][९७७]२४[९७८]२५[९७९]२६[९८०]२७ (पृथक् सूत्राणि न सन्ति )

सप्तर्षयः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । १९ )

तवाहं सोम रारण सख्य इन्दो दिवेदिवे ।

पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ॥ ५१६ ॥

तवाह९ सोम रारण सख्य इन्दो दिवेदिवे ।

पुरूणि बभ्रो नि चरन्ति मामव परिधी९रति ता९ इहि ॥ ५१६ ॥

---

(५१५।४)

सोमउष्वाणःसोतृभिः । एऽ५ । अधी ॥ ष्णुभिरवीऽ२ । नाम् । आश्वयेव ।
हारितायाऽ२ । ताइधारया ॥ मान्द्रयायौवा ॥ तीऽ२३४धा । रया ।
औऽ३होवा । होऽ५इ ॥ डा ॥          ( दी० ७ । प० १४ । मा० ५ )२८( श्रु । ९८१ )

(५१५।५)

सोमउष्वाणःसोतृ । भाइ । अधिष्णुभिरवी । नाम् ॥ आधिष्णुभिरवीऽ२ । नाम् ।
अश्वयेवा । हरितायाता २३इधा । रयाऽ३१उवाऽ२३ ॥ माऽ२३४०द्रा ॥
यायातीऽ२३४धा ॥ रयाओहोवा । होऽ५इ ॥ डा ॥   ( दी० ९ । प० १४ । मा० ८ )२९( धे । ९८२ )

(५१५।६)

सोमउष्वाणःसोतृभिः । औऽ३होऽ३इ । आ २३४ । धिष्णुभिरवीनाम् ॥
आश्वयेवहरिताया । तिधारायौ । वाओऽ२३४वा ॥ मन्द्रयायातीऽ३धा ॥
हेम्ऽ३स्थिहिम्ऽ३४३ । राऽ२३४योऽ६हाइ ॥          ( दी० ८ । प० १० । मा० ८ )३०( णे । ९८३ )

॥ इति ग्रामे गेय-गाने चतुर्दशः प्रपाठकः ॥ १४ ॥

(५१६।१)          ॥ वैष्णवे द्वे । द्वयोर्विष्णुर्बृहती सोमः ॥

[त]वाह९सो ॥ मराऽ२रणा । रण । सख्यइन्दोदिवाऽ२इदिवाइ । दिवे ।
[पु]रूणिबभ्रोनिचरन्तिमाऽ२मवा । अव ॥ परिधी९रतिताऽ२९इहाऽ२३इ ।
[हा]ऽ२इ । हाऽ२३४ । औहोवा ॥ ऊऽ२३४पा ॥  ( दी० ८ । प० १२ । मा० ६ )१ ( ठलू । ९८४ )

(५१६।२)

[त]वा । तवा ॥ अह९सोमरारण । सख्याइऽ३०दो । दिवाओऽ३हो । दाइवेऽ२ ।
[पु]रूणिबभ्रोनिचरान्तिमाऽ१माऽ३वा ॥ पराओऽ२हो ॥ धाइ९रतितोऽ२३४वा ।
[इ]ऽ५इहोऽ६हाइ ॥          ( दी० ५ । प० १० । मा० ७ )२( मे । ९८५ )

---

[साम-तन्त्र-सूत्राणि ][९८१]२८ |९८३]३० [९८४]१ (पृथक् सूत्राणि न सन्ति )
[९]८२]२९ शाण्ड्यां होरे ५.१.७; या ५.१.८;          [९८५]२ अ९ रसंधेः ८.९.९;

सप्तर्षयः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । ८ )

सोमं उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ५१५ ॥

सोम उ ष्वाणः सोतृभिरधि ष्णुभिरवीनाम् ।
अश्वयेव हरिता याति धारया मन्द्रया याति धारया ॥ ५१५ ॥

---

(५१४।५) ॥ निषेधः । अंगिरसो बृहती सोमः ॥

प्रसोमेदाइवाऽ६वीतयाइ ॥ सिन्धूर्नपाइ । प्येअर्णसाऽ२ । इहाऽ३ ॥
आ२शोऽ३ःपाया । हाहोऽ२३४हा । सामदिरो । नजागृऽ२३वीः ।
इहाऽ३ ॥ आच्छाऽ३कोशाम् । हाहोऽ२३४हा ॥ मधूऽ२३श्चूऽ५ताऽ६५६म् ॥
हेऽ२३४५ ॥ ( दी० ५ । प० १३ । मा० ७ )२४ ( बे ९७७ )

(५१५।१) ॥ सोम सामानि षट् । षण्णां सोमो बृहती सोमाश्वौ ॥

हाउसोमाः॥ उष्वाणऽ३ःसोतृऽ१भीऽ२ः । आधिष्णुभिरवीऽ२नाम् । आश्वीऽ३हो ।
येवहरितायाताइधाऽ१रायाऽ२॥ मन्द्रायाऽ३याऽ३४ । हाओवा॥ तिधारयाऽ२३४५ ॥
( दी० ८ । प० ८ । मा० ६ )२५ ( हू । ९७८ )

(५१५।२)

सोमऊऽ३ष्वाणःसातृभाइः॥ आधिष्णुभिरवीनाम् । आश्वयेऽ२३४वा ।
हरितायातिधाऽ१राऽ२या॥ मन्द्रायाऽ२३४या॥ ताऽ२३४इधा । रया ।
औऽ३होवा । होऽ५इ ॥ डा ॥ ( दी० ७ । प० १० । मा० ६ )२६ ( जू । ९७९ )

(५१५।३)

सोमउष्वाणःसातृभिः । ए‍ऽ५ । अधी॥ ष्णुभिराऽ३१उवाऽ२३ । वीऽ२३४नाम्॥
आऽ२३श्वा॥ येवहरितायातिधाऽ३१उवाऽ२३ । राऽ२३४या॥ माऽ२३०द्रा ॥
यायातिधाऽ३१ऊवाऽ२३॥ राऽ२३४या ॥ ( दी० ७ । प० ११ । मा० ६ )२७ ( चू । ९८० )

---

[साम-तन्त्र-सूत्राणि][९७७]२४[९७८]२५[९७९]२६[९८०]२७ (पृथक् सूत्राणि न सन्ति )

सप्तर्षयः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । १९ )

तवाहं सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधीँरति ताँ इहि ॥ ५१६ ॥
तवाहꣳ सोम रारण सख्य इन्दो दिवेदिवे ।
पुरूणि बभ्रो नि चरन्ति मामव परिधीꣳरति ताꣳ इहि ॥ ५१६ ॥

---

(५१५।४)
सोमउष्वाणःसोतृभिः । एऽ६ । अधी॥ ष्णुभिरवीऽ२ । नाम् । आश्वयेव ।
हारितायाऽ२ । ताइधारया॥ मान्द्रयायौवा॥ तीऽ२३४धा । रया ।
औऽ३होवा । होऽ५इ ॥ डा ॥ ( दी० ७ । प० १४ । मा० ५ )२८( ध्रु । ९८१ )

(५१५।५)
सोमउष्वाणःसोतृ । भाइ । अधिष्णुभिरवी । नाम्॥ आधिष्णुभिरवीऽ२ । नाम् ।
अश्वयेवा । हरितायाता २३इधा । रयाऽ३१उवाऽ२३॥ माऽ२३४०द्रा ॥
यायातीऽ२३४धा॥ रयाओहोवा । होऽ५इ ॥ डा ॥ ( दी० ९ । प० १४ । मा० ८ )२९( धे । ९८२ )

(५१५।६)
सोमउष्वाणःसोतृभिः । औऽ३होऽ३इ । आ २३४ । धिष्णुभिरवीनाम् ॥
आश्वयेवहरिताया । तिधारायौ । वाओऽ२३४वा॥ मन्द्रयायातीऽ३धा॥
हिम्ऽ३स्थिहिम्ऽ३४३ । राऽ२३४योऽ६हाइ ॥ ( दी० ८ । प० १० । मा० ८ )३०( णे । ९८३ )

॥ इति ग्रामे गेय-गाने चतुर्दशः प्रपाठकः ॥ १४ ॥

॥ वैष्णवे द्वे । द्वयोर्विष्णुर्बृहती सोमः ॥

(५१६।१)
तवाहꣳसो॥ मराऽ२रणा । रण । सख्यइन्दोदिवाऽ२इदिवाइ । दिवे ।
पुरूणिबभ्रोनिचरन्तिमाऽ२मवा । अव॥ परिधीꣳरतिताऽ२ꣳइहाऽ२३इ ।
आऽ२इ । हाऽ२३४ । औहोवा॥ ऊऽ३२३४पा ॥ ( दी० ८ । प० १२ । मा० ६ )१ ( ठ्लू । ९८४ )

(५१६।२)
तवा । तवा॥ अहꣳसोमरारण । सख्याइऽ३०दो । दिवाओऽ३हो । दाइवेऽ२ ।
पुरूणिबभ्रोनिचरन्तिमाऽ१माऽ३वा॥ पराओऽ३हो॥ धाइꣳरतितोऽ२३४वा ।
आऽ५इहोऽ६हाइ ॥ ( दी० ५ । प० १० । मा० ७ )२( मे । ९८५ )

---

[साम-तन्त्र-सूत्राणि ][९८१]२८ [९८३]३० [९८४]१ (पृथक् मन्त्राणि न सन्ति )
[९८२]२९ शाकल्यं होरे ५.१.७; या ५.१.८; [९८५]२ अ० रसंभेः ८.९.९;

सप्तर्षयः । पवमानः सोमः । बृहती । ( ऋ० ९ । १०७ । २१ )

मृज्यमानः सुहस्त्य समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ५१७ ॥

मृज्यमानः सुहस्त्या समुद्रे वाचमिन्वसि ।
रयिं पिशङ्गं बहुलं पुरुस्पृहं पवमानाभ्यर्षसि ॥ ५१७ ॥

---

(५१६।३) ॥ आंगिरसानि त्रीणि । त्रयाणामंगिरसो बृहती सोमः ॥

तवाह२सोमाऽ६रारणा ॥ सख्याइऽ२३४०दो । दिवेदाऽ२३४इवे ।
पुरूणिबभ्रोनिचरन्तिमाम् । आवाऽ२३४हाइ ॥ पारीधाइ२रा ॥ तितोऽ२३४वा ।
आऽ५इहोऽ६हाइ ॥ ( दी० ६ । प० ८ । मा० ७ )३ ( गे । ९८६ )

(५१६।४)

तवाह२सोमरौ । होऽ५रणा ॥ साख्यइन्दोऽ२ । दिवाऽ३४५इ । दीऽ२३४वे ।
पूरूऽ२णाइबाऽ२ । भ्रोनिचराऽ२ । तिमाऽ३४५म् । आऽ२३४वा ॥
पारीऽ२धाइ२राऽ२ ॥ तिता२ऽ३४५ ॥ ईऽ२३४हौ ॥ ( दी० ४ । प० १२ । मा० ५ )४ ( शु । ९८७ )

(५१६।५)

तवाह२सोमरारण । सख्यइन्दोदिवेदिवाइ ॥ सख्यइन्दोदिवेदाऽ२३इवे ।
पुरूणिबभ्रोनिचरन्तिमामाऽ२३वा ॥ पराइधाऽ२३इ२रा ॥ तिता२ऽ२३इहाऽ३४३इ ।
ओऽ२३४५इ ॥ डा ॥ ( दी० १० । प० ८ । मा० ९ )५ ( बो । ९८८ )

(५१७।१) ॥ औक्ष्णोरंध्राणि त्रीणि ( स्वारम् ) । त्रयाणामुक्ष्णोरन्ध्रो बृहती सोमः ॥

मृज्यमानाः ॥ सुहस्तियाऽ३ । सामूऽ३द्राइवा । चमिन्वसाऽ३इ ।
रायीऽ३०पाइशा । गंबहुलाऽ३म् । पूरूऽ२स्पृऽ२३४हाम् ॥ पवमा । ना ।
औऽ३हो ॥ भियोऽ२३४वा । पाऽ५सोऽ६हाइ ॥ ( दी० २ । प० १२ । मा० ७ )६ ( छे । ९८९ )

(५१७।२)

मृज्यमानाः ॥ सुहस्तायाऽ२ । समुद्रवा । चामिन्वासाऽ२३४इ ॥ रयाऽ३४इंपिशा ।
गंबहुलंपूरुस्पृहाऽ२म् ॥ पवाऽ२३ ॥ माऽ२नाऽ२३४औहोवा ॥ भियाऽ२र्षसीऽ२३४५ ॥
( दी० ६ । प० ९ । मा० ५ )७ ( घु । ९९० )

---

[साम-तन्त्र-सूत्राणि][९८६]३[९८७]४[९८८]५[९८९]६[९९०]७ ( पृथक् सूत्राणि न सन्ति )

(५१७।३)

मृज्यमानाः॥ सुह। स्तिया। साऽ१मूऽ२द्राऽइवाऽ२। चमि। न्वसाइ।
राऽ१यीऽ२०पाइशाऽ२। गंबहुलंपुरु। स्पृहाम्॥ पाऽ१वाऽ२मानाऽ२३॥
भाऽ२याऽ२३४औहोवा॥ षाऽ२३४सीं॥ (दी० ३। प० १२। मा० ६)८(ट।९९१)

(५१७।४) ॥ आग्नेयानि त्रीणि। त्रयाणामग्निर्बृहती सोमः॥

मृज्याऽ६ए॥ मानःसुहस्तियाऔऽ३हो। समुद्रेवाचमिन्वसाऔऽ३हो।
रयिंपिशंगंबहुलंपुरुस्पृहाऔऽ३हो॥ पवमाऽ२३नाऽ३॥ भियोऽ२३४वा।
षाऽ५सोऽ६हाइ॥ (दी० ३। प० ७। मा० ५)९(ठु।९९२)

(५१७।५)

मृज्यमानःसुहस्त्या। वाहाइ॥ समुद्राइवा। चमीऽ२न्वाऽ२३४सीं।
रयाऽ३४इम्पिशा। गंबहुलम्। पूरुस्पृहाऽ२३४म्॥ पवाऽ३४मानाऽ३॥
भियोऽ२३४वा। षाऽ५सोऽ६हाइ॥ (दी० ३। प० १०। मा० ६)१०(जू।९९३)

(५१७।६)

मृज्यमानाऽ५ःसुहस्तिया॥ समूऽ२द्राइवाऽ२। चमाऽ२इन्वासीऽ२।
रायिंपिशंगंबहुलंपुरुस्पृहाऔऽ३हो॥ पवमाऽ२३नाऽ३॥ भियोऽ२३४वा।
षाऽ५सोऽ६हाइ॥ (दी० १। प० ७। मा० ४)११(खी।९९४)

(५१७।७) ॥ ऐडमौक्षणोरन्ध्रम्। उक्षणोरन्ध्रो बृहती सोमः॥

मृज्यमानःसुहस्त्या। समुद्रेवोवा॥ चामिन्वासि। रायिंपिशाऽ३। हाऽ३हा।
गंबहुलंपुरुस्पृहम्॥ पवमानाऽ३। हाऽ३हा॥ भियर्षाऽ२३साऽ२४३इ। ओऽ२३४५इ॥डा॥
(दी० ३। प० ११। मा० ३)१२(टि।९९५)

(५१७।८) ॥ वाजजित्। प्रजापतिर्बृहती सोमः॥

मृज्यमानःसुहा॥ स्तियाऽ२। समूऽ२हो। द्रेवाऽ२हो। चामिन्वसाइ।
रयाऽ२इऽ२होइ। पिशाऽ२हो। गम्बहुलाम्॥ पूरुस्पृहाम्। पवाऽ२हो।
मानाऽ२हो॥ भीयर्षसाऽ३१उवाऽ२३॥ वाजीजिगीऽ३वाऽ२ऽ१॥
(दी० ८। प० १३। मा० ६)१३(हू।९९६)

[साम-तन्त्र-सूत्राणि][९९१]८[९९२]९[९९३]१०[९९४]११ (पृथक् सूत्राणि न सन्ति)
[९९५]१२ उच्चवदिजस्थे त्रिवतः ३.१.१०; [९९६]१३ अचु षेर्नास्तु ६.८.८;

॥ गृत्समदः शौनकः । वायुः । गायत्री । ( ऋ० २ । ४१ । २ )

नियुत्वान्वायवा गह्ययं शुक्रो अयामि ते ।
गन्तासि सुन्वतो गृहम् ॥ ६०० ॥

८९ नियुत्वान्वायवा गह्ययꣳशुक्रो अयामि ते ।
गन्तासि सुन्वतो गृहम् ॥ ६०० ॥

९० अत्राह गोरमन्वत० । ( ऋ० १ । ८४ । १५; सा. १४७, ९१५; ग्रा. गे. २४९-२५० )

---

( ८९।१ ) ॥ शुक्रचन्द्रे द्वे, शुक्रसाम । प्रजापतिर्गायत्रीवायुः ॥

हाउहाउहाउ । शुक्रम् । ( त्रिः ) । शुक्रꣳशुक्रम् ।( त्रिः ) । शुक्रꣳशूक्रम् । ( त्रिः ) ।
नियुत्वान्वायऽ३वागाऽ१हीऽ२॥ अयꣳशुक्रोअऽ३यामाऽ१इताऽ२इ ॥
गन्तासिसुन्वऽ३तोगृऽ१हाऽ२३म्॥ हाउहाउहाउ । शुक्रम् । ( त्रिः ) ।
शुक्रꣳशुक्रम् । ( त्रिः ) । शुक्रꣳशूक्रम् । ( त्रिः ) । शुक्रम् । शूऽ२ ।
क्राऽ२३४ । औहोवा ॥ ए । शुक्रम् । ( द्वे त्रिः ) ॥

( दी० १५ । प० ३२ । मा० ३१ )७( फ । १४८ )

( ९०।१ ) ॥ चन्द्रसाम ॥ प्रजापतिर्गायत्रीत्वष्टाचन्द्रः ॥

हाउहाउहाउ । चन्द्रम् । (त्रिः) । चन्द्रश्चन्द्रम् । ( त्रिः ) । चन्द्रश्चान्द्रम् । ( त्रिः ) ।
अत्राहगोरऽ३मान्वाऽ१ताऽ२ ॥ नामत्वष्टुरऽ३पाइचाऽ१याऽ२म् ॥
इत्थाचन्द्रमऽ३सोगृऽ१हाऽ२३इ ॥ हाउहाउहाउ । चन्द्रम् । ( त्रिः ) ।
चन्द्रश्चन्द्रम् । (द्विः ) । चन्द्रश्चान्द्रम् । ( द्विः ) । चन्द्रम् । चाऽ२ ।
द्राऽ२३४ । औहोवा ॥ ए । चन्द्रम् । (द्वे त्रिः) ॥ ( दी० १५ । प० ३२ । मा० ३० )८( फौ । १४९ )

॥ अष्टौ षष्ठः खण्डः ॥ ६ ॥

---

[ साम-तन्त्र-सूत्राणि ][१४८]७[१४९]८ ( पृथक् सूत्राणि न सन्ति )

नृमेध पुरुमेधावाङ्गिरसौ । इन्द्रः । अनुष्टुप् । ( ऋ० ८ । ८९ । ५ )

यज्ञायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उत द्याम् ॥ ६०१ ॥

९१ यज्जायथा अपूर्व्य मघवन्वृत्रहत्याय ।
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतो दिवम् ॥ ६०१, १४२९ ॥

---

( ९१।१ ) ॥ वायोः स्वरसामानि षट् । वायुरनुष्टबिन्द्रः ॥

एयज्ञायथाः॥ अपूर्वियां । हाउ । मघवन्वृ । हाउ । त्रहत्यायां । हाउ ।
तत्पृथिवीम् । हाउ । अप्रथयाः । हाउ । एऔहोवादीशाः॥ तदस्तभ्नाः ।
हाउ॥ उतोदिवाम् । हाउ । एऔहोवाऽ३॥ असुस्थिपयाऽ२३४५ः ॥

( दी० १२ । प० १८ । मा० १७ )९( जे । १५० )

( ९१।२ ) ॥ द्वितीयं स्वर साम ॥

एहाउयज्जायथाः॥ अपूर्विया । होइ । ( त्रिः ) । हाउहाउहाउ । मघवन्वृ ।
होइ । ( त्रिः ) । हाउहाउहाउ । त्रहत्याया । होइ । ( त्रिः ) । हाउहाउहाउ ।
तत्पृथिवीम् । होइ । ( त्रिः ) । हाउहाउहाउ । अप्रथयाः । होइ । ( त्रिः ) ।
हाउहाउहाउ । एऔहोवादीशाः॥ तदस्तभ्नाः । होइ । ( त्रिः ) । हाउहाउहाउ ॥
उतोदिवाम् । होइ । ( त्रिः ) । हाउहाउहाउ । एऔहोवाऽ३॥ हसुस्थिपयाऽ२३४५ः ॥

( दी० १३ । प० ३९ । मा० ५३ )१०( ढि । १५१ )

( ९१।३ ) ॥ तृतीयं स्वर साम ॥

एहाउ । औहोऽ२ । यज्जायथाऽ३ः । अपूर्विया॥ होववाऽ२३होइ । मा ।
घवन्वृत्रहत्याया । होववाऽ२३होइ । तात् । पृथिवीमप्राथयाः । होववाऽ२३होइ ।
एऔहोवादीशाः॥ होववाऽ२३होइ । तात् । अस्तभ्नाउतोदिवाम् । होववाऽ२३होइ ।
एऔहोवाऽ३॥ हसुस्थिइडापयाऽ२३४५ः ॥

( दी० १७ । प० १८ । मा० १७ )११ ( जे । १५२ )

---

[साम-तन्त्र-सूत्राणि][१५०]९,[१५१]१०[१५२]११ ( पृथक् सूत्राणि न सन्ति )

## ९२ यो रयिं वो रयिन्तमः० । ( ऋ० ६।४४।१; सा. ३५१; ग्रा. गे. ६०२-६०३ )

( ९।१४ ) ॥ चतुर्थं स्वर साम ॥

याज्ञायाज्ञा॥ यथाअपूर्वियाऔऽ३हो । हाऽ२इया । औऽ३हो ।
माघवन्वृत्रहत्यायाऔऽ३हो । हाऽ२इया । औऽ३हो॥ तात्पृथिवीमप्राथयाऔऽ३हो ।
हाऽ२इया । औऽ३हो॥ तादस्तभ्नाउतोदिवामौऽ३हो । हाऽ२इया ।
औऽ३होवाहाउवाऽ३ ॥ एऽ३ । पयार३४५ः ॥ ( दी० ८ । प० १५ । मा० ११ )१२( ण । १५३ )

( ९।१५ ) ॥ पञ्चमं स्वर साम ॥

हुवैहोऽ१इ । ( त्रिः ) । यज्जायथाः । अपूर्विया॥ मघावन्वृ । त्रहत्याया ॥
तत्पृथिवीम् । अप्राथयाः॥ तदस्तभ्नाः॥ उतोदिवाम् । हुवाहोऽ१इ । ( द्विः ) ।
हुवैहोऽ१ऽ२ । उहुवाऽ३हाउ । वाऽ३॥ हस् ॥ ( दी० ७ । प० १७ । मा० १२ )१३( छ । १५४ )

( ९।२।१ ) ॥ षष्ठं स्वर साम ॥

योरयिंवोराऽ३यिन्तमाः॥ योद्युम्नाऽ२३४इद्यू । म्नावत्तमाऽ२३ः ।
सोमाःसुऽ२३४ताः । साइन्द्रतायेऽ॥ अस्तिस्वाऽ२३४धा॥ पतेऽ३ ।
माऽ२३४दाः । उहुवाऽ६हाउ । वा॥ अस् ॥ ( दी० ४ । प० ११ । मा० ८ )१४( तै । १५५ )

( १ ) ॥ विष्णोस्त्रीणि स्वरीयाँसि पञ्चानुगानम् । पञ्चानां वायुरनुष्टुबिन्द्रः ॥

हाउहोहाइ । ( त्रिः ) । अन्तरिक्ष२ंसुवर्द्दिवंजग । न्मा । ( द्वे त्रिः ) ।
परात्परमैरय । ता । ( द्वे द्विः ) । परात्परमैरय । त । औहोवाहाउ ।
वा॥ ए । यज्ञादिवामूद्धोदवमादनोघर्मोज्योतिः ॥ ( दी० २४ । प० १९ । मा० ८ )१५( घै १५६ )

( २ )

हाउहोहाइ ।( त्रिः )। अन्तरिक्ष२ंसुवर्द्दिवंजग । न्मा । ( द्वे त्रिः ) । परात्परमैरय ।
ता । ( द्वे द्विः ) । परात्परमैरय । त । औहोवाहाउ । वा । ए ।
पृथिव्यन्तारिक्षन्द्यौरापःक्रनिक्रदात्सिन्धुरापोमरुतोमादयन्तोघर्मोज्योतिः ॥
( दी० २५ । प० १९ । मा० ८ )१६( मै । १५७ )

---

[ साम-तन्त्र-सूत्राणि ][१५३]१२[१५५]१४[१५७]१६ (पृथक् सूत्राणि न सन्ति ); [१५४]१३ तादेर्बुनि ७.३.८; [१५६]१५ स्वरीयसि १३.७.२; नवन्नुस्वारौ स्वरीयसि प्राग्रान्नात् १३.१०.२; तद्व्यादिः ११.१०.५;

(९३।३) ॥ द्व्यनुगानम् । विष्णुः वायुरनुष्टुबिन्द्रः ॥

हाउहोवा । (त्रिः) । परात्परमैरय । ता । (द्वे द्विः) । परात्परमैरय । त ।
औहोवाहाउ । वा ॥ इन्द्रोधेनुः । (त्रिः) । आपोधेनुः । (त्रिः) । भूमिर्धेनुः । (त्रिः) ।
अन्तरिक्षन्धेनु । (त्रिः) । द्यौर्धेनुः । (त्रिः) । परन्धेनु । (त्रिः) । व्रतधेनु । (त्रिः) ।
सत्यधेनु । (त्रिः) । ऋतंधेनु । (त्रिः) । इडाधेनुः । (त्रिः) । स्वर्धेनुः । (त्रिः) ।
ज्योतिर्धेनुः ॥ (त्रिः) ॥ (दी० ७१ । प० ४७ । मा० २५ )२०( खु । १६१ )

(९३।४)

हाउहोवा । (त्रिः) । परात्परमैरय । ताऽ (द्वे त्रिः) । यज्जायथाः ।
अपूर्विया । अपूर्वियाऽ३ । आपूर्वाऽ२३४या ॥ मघवन्वृ । त्रहत्याया ।
त्रहत्यायाऽ३ । त्राहत्याऽ२३४या । तत्पृथिवीम् । अप्राथयाः । अप्राथयाऽ३ः ।
आप्राथाऽ२३४याः ॥ तदस्तभ्राः । उतोदिवाम् । उतोदिवाऽ३म् ।
ऊतोदाऽ२३४इवाम् । हाउहोवा । (त्रिः) । परात्परमैरय । ताऽ (द्वे द्विः) ।
परात्परमैरय । त । औहोवाहाउ । वा ॥ ए । तेजाघर्मःसंक्रीडन्तेवायुर्गोपा-
स्तेजस्वतीमरुद्भिर्भुवनानिचक्रदुः ॥ (दी० ४७ । प० ३८ । मा० १८ )२१( जै । १६२ )

(९३।५) ॥ चतुरनुगानम् । विष्णुः । वायुरनुष्टुबिन्द्रः ॥

हाऽ२ऊवाक् । (त्रिः) । होवा । (द्विः) । होवाऽ३ । हाउवा । ए ।
ताकंप्रजाङ्भौनायमदध्मह्याचपराचपथिभिश्चरन्ताऽ२३४५ः ॥ (दी० ७ । प० ९ । मा० ८ )२२( झैं । १६३ )

(१)

हाऽ२ऊवाक् । (त्रिः) । होवा । (त्रिः) । अयꣳसशिङ्क्तेऽ३ । होइ ।
यस्माद्यावापृथिवीभुवनानिचक्रदुः । होइ । अयꣳसशिङ्क्तेऽ३ । होइ ।
यस्मादापआषधयोभुवनानिचक्रदुः । होइ । अयꣳसशिङ्क्तेऽ३ । होइ ।
यस्मात्समुद्रियाभुवनानिचक्रदुः । होइ । अयꣳसशिङ्क्तेऽ३ । होइ ।
यस्माद्विश्वाभूताभुवनानिचक्रदुः । होइ । हाऽ२ऊवाक् । (त्रिः) । होवा । (द्विः) । होवाऽ३ । हाउवा ॥
ए । आपः । आपः । आपाऽ२३४५ः ॥ (दी० १९ । प० ३३ । मा० २९ )२३( दो । १६४ )

[साम-तन्त्र-सूत्राणि][१६१]२०[१६२]२१[१६३]२२ ( पृथक सूत्राणि न सन्ति ); [१६४]२३ द्वि धा हिम्यो या दे वयः १३ ५.६;

(१)

हाऽ२ऊवाक् । (त्रिः) । होवा । (त्रिः) । येभिर्वियाः । श्वमैरायाऽ२ः ॥ तेभिर्विया । श्रुह्रीमादाऽ२म् ॥ येभिर्भूताम् । सहस्साहाऽ२ः ॥ तेभिस्तजआपः । आपाऽ२ । येभिर्व्यन्तरिक्षमैरयाऽ३ः । हाउवा ॥ ए । आपः । आपः । आपाऽ२३४५ः ॥

( दी० १३ । प० २० । मा० १७ )२४( णे । १६५ )

१)

हाऽ२ऊवाक् । (त्रिः) । होवा । (त्रिः) । यज्जायथाअपूर्होऽ२ । वायाऽ२ । मघवन्वृत्रहाहोऽ२ । त्यायाऽ२॥ तत्पृथिवीमप्राहोऽ२ । थायाऽ२ः ॥ तदस्तभ्नाउतोहोऽ२इ । दाइवाऽ२म् । हाऽ२ऊवाक् । (त्रिः) । होवा । (द्विः) । होवाऽ३ । हाउवा ॥ ए । तेजोघर्मःसंक्रीडन्तेशिशुमतीवायुर्गोपास्तेजस्वतीमेरुद्भिर्भुवनानिचक्रदूऽ२३४५ः ॥

( दी० १६ । प० २३ । मा० २० )२५( गौ । १६६ )

[ द्वन्द्वपर्वणि ७७ सामानि ]

॥ सप्तमः खण्डः ॥७॥

॥ इति (ग्रामे)आरण्यकगाने तृतीयः प्रपाठकः ॥ ३ ॥

॥ इति द्वन्द्व-नाम द्वितीयं पर्व समाप्तम् ॥

---

[ साम-तन्त्र-सूत्राणि ][१६५]२४ येत आदीभौ १३.९.४; [१६६]२५ (पृथक् सूत्राणि न सन्ति )

# अथ (वाचो-)व्रतपर्व ।

९४ आ तू न इन्द्र वृत्रहन्० । ( ऋ० ४।३२।१; सा. १८१: ग्रा. गे. ३२० )

---

( १ ) *॥ वाचो व्रते द्वे । वाग्यजुर्वाक् वाक् त्रिष्टुप् वाक् ॥

ओम् । हुवेवाचाम् ॥ वाचंवाच२हुवेऽ२ । वाकूश्रृणोतुश्रृणोतुवाऽ२क् । वाक्समैतुसमैतुवाऽ२क् ॥
वाग्रमताम् । रमताम् । रमाऽ२३ । तुवाऽ२३४औहोवा ॥ ईहा ॥ (त्रिः) ॥

( दी० २१ । प० ११ । मा० ६ )१( कू । १६७ )

( २ )
हुवाइवाचाम् । वाच२हुवाइ ॥ वाक्श्रृणातूऽ२३ । शाऽ३र्णोतुवाक् । वाक्समैतूऽ२३ ।
साऽ३मैतुवाक् ॥ वाग्रमताऽ२३म् ॥ रम । तुवाऽ२३४औहोवा ॥ माऽ२३४५इ ॥ (त्रिः) ॥

( दी० १३ । प० १२ । मा० १० )२( ठौ । १६८ )

( ९४।१ ) ॥ शशस्य कर्षूशयस्य व्रतम् कर्षूसाम । शशो गायत्रीन्द्रो वृत्रहा ॥

आतूनाऽ२३इन्द्रवृत्रहन्हाउ ॥ आस्माकमाहाउ । धामागहाहाउ ॥ माहान्महाहाउ ॥
भिरूऽ३ । ताऽ२३४इभाइ । उहुवाऽ६हाउ । वा ॥ अस्स्थिकट्स्थिमृस्स्थिहस्स्थिवाक् ।
ऊऽ२३४५ ॥

( दी० ६ । प० १० । मा० १३ )३( ङि । १६९ )

---

* ॥ अनयोर्मूलं न ऋक्,अपि तु स्तोभः सचैपः—स्तो० प० १-२.

हुवे । वाचम् । वाचम् । हुवे । वाक् । शृणोतु । श्रृणोतु । वाक् । वाक् ।
समैतु । समैतु । वाक् । वाक् । रमताम् । रमतु । वाक् । मे ।

---

[साम-तन्त्र-सूत्राणि][१६७]१[१६८]१[१६९]१ ( पृथक् सूत्राणि न सन्ति )

सत्रस्य॑ऽऋद्धिर॑स्यगन्म ज्योति॑रमृता॑ अभूम ।
दिवं॑ पृथि॒व्या अध्यारु॑हामावि॑दाम दे॒वान्त्स्वर्ज्योतिः॑ ॥ ( वा. य. ८।५२ )

९५ इममू षु त्वमस्माकं० । ( ऋ० १ । २७ । ४; सा. २८, १४९७; ग्रा. गे. ४७ )

---

( १ ) ×॥ सत्रस्यर्द्धि साम ॥ प्रजापतिस्त्रिष्टुबिन्द्रः ॥

औहोवाऔहोवाऔहोऽ३वा । अगन्मज्योतिः । ( द्विः ) । अगन्मज्योतिः॥ अमृताअभूम । (द्विः) । अमृताअभूमा । तरिक्षंपृथिव्याअध्यारुहामा । (द्विः) । तरिक्षंपृथिव्याअध्यारुहाम । दिवमन्तरिक्षादध्यारुहाम । (त्रिः) । अविदामदेवान् । ( त्रिः ) । समुदेवैरगन्महि (त्रिः) । औहोवाऔहोवाऔहोऽ३वा ॥ सुवर्ज्योतीऽ२३४५ः ॥ ( दी० ६० । प० २१ । मा० १७ )४( पे । १७० )

( ९५।१ ) ॥ प्रजापतेः प्रतिष्ठा साम । प्रजापतिः गायत्र्यग्निः ॥

इममूषू॥ त्वमस्मा । काम् । सनिंगायत्रंनव्या९सम्॥ आग्नेदेवाइ ॥ षुप्राऽ२वोऽ२३४औहोवा॥ चाऽ२३४५ः ॥ ( दी० ८ । प० ७ । मा० ५ )५( टु । १७१ )

( १ ) ॐ॥ व्याहृतिः । प्रजापतिर्यजुरग्निस्त्रिष्टुबग्निः ॥

हाउहाउहाउ । एवाहियेवाऽ२३४औहोवा॥ एऽ३ । भूतायाऽ२३४५ ॥ भी ॥ १ ॥
हाउहाउहाउ । एवाहियेवाऽ२३४औहोवा॥ एऽ३ । रूपायाऽ२३४५ ॥ भी ॥ २ ॥
हाउहाउहाउ । एवाहियेवाऽ२३४औहोवा॥ एऽ३ । आयुषेऽ२३४५ ॥ र्घा ॥ ३ ॥
हाउहाउहाउ । एवाहियेवाऽ२३४औहोवा॥ एऽ३ । ज्योतिषेऽ२३४५ ॥ धी ॥ ४ ॥

( दी० ३८ । प० १६ । मा० १६ )६( टू । १७२ )

---

×॥ अस्य मूलं न ऋक्, अपि तु स्तोभः, सचैषः— स्तो० प० २.२

अगन्म । ज्योतिः । अमृताः । अ । मृताः । अभूम । अन्तरिक्षम् । पृथिव्याः । अधि । आ । अरुहाम । दिवम् । अन्तरिक्षात् । अधि । आ । अरुहाम । अविदाम । देवान् । सम् । उ । देवैः । अगन्महि ॥२॥

ॐ॥ अस्य मूलं न ऋक् अपि तु स्तोभः, सचैषः-स्तो० प० १.१

एव । हि । एव । भूताय । रूपाय । आयुषे । ज्योतिषे ॥

---

[ साम-तन्त्र-सूत्राणि ] [१७०]४ न खड्वन्त्यवत् १३.८.६; म सणि ९.७.६; [१७१]५( पृथक् सूत्राणि न सन्ति ) [१७२]६ व्याहृतिपुच्छे च राथन्तरेऽपि १३.१०.७;

वामदेवो गौतमः । प्रजापतिः । अनुष्टुप् । ( न ऋग्वेदीयः )

९६　मयि वर्चो अथो यशोऽथो यज्ञस्य यत्पयः ।
परमेष्ठी प्रजापतिर्दिवि द्यामिव दृंहतु ॥ ६०२ ॥

( ९६।१ )　॥ परमेष्ठिनः प्राजापत्यस्य व्रतम् । परमेष्ठ्यनुष्टुप् परमेष्ठी ॥

हाउहाउहाउ । आनोऽ२ब्रुवाइ । ( द्विः ) । आनोऽ२ब्रुवाऽ२ । याऽ२३४औहोवा । रक्षतनोरक्षितााराऽ२३४५ः । हाउहाउहाउ । आनोऽ२ब्रुवाइ । ( द्विः ) । आनोऽ२ब्रुवाऽ२ । याऽ२३४औहोवा । गोपायतगोपाइताराऽ२३४५ः । हाउहाउहाउ । आनोऽ२ब्रुवाइ । ( द्विः ) । आनोऽ२ब्रुवाऽ२ । याऽ२३४औहोवा । मयिवर्चः । अथोयाऽ१शाऽ२ः ॥ अथोयज्ञ । स्ययात्पाऽ१याऽ२ः ॥ परमेष्ठी । प्रजापाऽ१तीऽ२ः ॥ दिविद्यामि । वदृं२हाऽ१तूऽ२३ । हाउहाउहाउ । आनोऽ२ब्रुवाइ । ( द्विः ) । आनोऽ२ब्रुवाऽ२ । याऽ२३४औहोवा । रक्षतनोरक्षिताराऽ२३४५ः । हाउहाउहाउ । आनोऽ२ब्रुवाइ । ( द्विः ) । आनोऽ२ब्रुवाऽ२ । याऽ२३४औहोवा । गोपायतगोपायिताराऽ२३४५ः । हाउहाउहाउ । आनोऽ२ब्रुवाइ । ( द्विः ) । आनोऽ२ब्रुवाऽ२ । याऽ२३४औहोवा । ए । रक्षतनोरक्षितारोगोपायतगोपायितारः । ( द्वे द्विः ) । ए । रक्षतनोरक्षितारोगोपायतगोपायिताराऽ२३४५ः ॥ ( दी० ७५ । प० ४८ । मा० ४७ )७( वे । १७३ )

( १ )　*॥ परमेष्ठिनः प्राजापत्यस्य व्रतम् ( कृष्ण व्रतम् ) । अंगिरास्त्रिष्टुप् सोमः ॥

सोमासोऽ३मा । ( त्रिः ) । यत्रचक्षुः । तदाभाऽ१राऽ२ ॥ यत्रश्रोत्रम् । तदाभाऽ१राऽ२ ॥ यत्रआयुः । तदाभाऽ१राऽ२ ॥ यत्ररूपम् । तदाभाऽ१राऽ२ ॥ यत्रवर्चः । तदाभाऽ१राऽ२ ॥ यत्रतेजः । तदाभाऽ१राऽ२ ॥ यत्रज्योतिः । तदाभाऽ१राऽ२ ॥ सोमासोऽ३मा । ( द्विः ) । सोमाराऽ२जाऽ३न् । होऽ२हाऽ२३४औहोवा । इड्स्थिइडाऽ२३४५ ॥　( दी० १३ । प० २२ । मा० ११ )८( ठ । १७४ )

*॥ अस्य मूलं न ऋक् अपि तु स्तोभः, सचेषः—स्तो० प० १.१

सोमसोम । सोम । सोम । यत्र । चक्षुः । तत् । आ । भर । यत्र । श्रोत्रम् ।
तत् । आ । भर । यत्र । आयुः । तत् । आ । भर । यत्र । रूपम् । तत् ।
आ । भर । यत्र । वर्चः । तत् । आ । भर । यत्र । तेजः । तत् । आ । भर ।
यत्र । ज्योतिः । तत् । आ । भर । सोम । राजन् ॥

[साम-तन्त्र-सूत्राणि][१७३]७ दन्त्यादे रुतायाम् १३.३.५;　[१७४]८ चतुरडि प्राग्राजनात् १३.४.३;

गोतमो राहूगणः । सोमः । त्रिष्टुप् । ( ऋ० १।९१।१८ )

सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ ६०३ ॥

गोतमो राहूगणः । सोमः । त्रिष्टुप् । ( ऋ. १।९१।२२ )

त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमा ततन्थोर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ६०४ ॥

९७ सं ते पयांसि समु यन्तु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥ ६०३ ॥

९८ त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
त्वमाततनोरुर्वन्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ६०४ ॥

( ९७।१ ) ॥ सोम व्रतम् । सोमस्त्रिष्टुप्सोमः ॥

ओवाऽ२ ।( त्रिः ) । सन्तेपया । सीऽ२समु । यन्तुवाजाः ॥ संवृष्णिया ।
नीऽ३अभि । मातिषाहाः ॥ आप्यायमा । नोऽ३अमृ । तायसोमा ॥
दिविश्रवा । सीऽ३उत्त । मानिधिष्वा । ओवाऽ२ । ( द्विः ) । ओऽ२ ।
वाऽ२३४ । औहोवा ॥ प्न्य [त्रिर्गसेत्] ॥३॥ ( दी० १६ । प० २३ । मा० ५ )९ ( गु । १७५ )

( ९८।१ ) ॥ सोम व्रतम् । सोमो विराट् सोमः ॥

हाउहाउहाउ । हौवाऽ३ । ( त्रिः ) । हाह । हौवाऽ३ । ( द्वेत्रिः ) । होवाऽ३ । ( त्रिः ) ।
होऽ३वाऽ३४५ । ( द्विः ) । होऽ३वाऽ३४ । औहोवा । त्वमिमाओषधीःसोमविश्वाः ॥
त्वमपोअजनयस्त्वंगाः ॥ त्वमाततनोरुर्वन्तरिक्षम् ॥ त्वंज्योतिषावितमोववर्थ ।
हाउहाउहाउ । हौवाऽ३ । (त्रिः) । हाह । हौवाऽ३ । (द्वेत्रिः) । होवाऽ३ । (त्रिः) ।
होऽ३वाऽ३४५ । (द्विः) । होऽ३वाऽ३४ । औहोवा ॥ ए ।
जनदिवमन्तरिक्षंपृथिवींविश्वभोजसंपुरुरूपाअजीजनः । इडास्थिइडाऽ२३४५ ॥

( दी० ४० । प० ४१ । मा० १४ )१०( पी । १७६ )

दश प्रथमः खण्डः ॥ १ ॥

[ साम-तन्त्र-सूत्राणि ][१७५]९ ( पृथक् सूत्राणि न सन्ति ) [१७६]१० खडस्पर्शपरे १३.३.७
आर्षिकमनि १३.४.४;
आ० गा० ४६

९९ इन्द्रो राजा जगतः० । ( ऋ० ७।२७।३; सा. ५८७; आ. गा. ३६-३७)
१०० अभी नवन्ते अद्रुहः० । ( ऋ० ९।१००।१; सा. ५५०; ग्रा, गे, १०८०-१०८२ )

---

( ९९।१ ) ॥ भारद्वाजस्य व्रतम् । भारद्वाजस्त्रिष्टुबिन्द्रः ॥

हाउहाउहाउ । वाग्ददद । ददाऽ२या । इन्द्राराजा । जगतः । चर्षणीनाम् ॥
अधिक्षमा । विश्वरू । पंयदस्या ॥ ततादुदा । तीऽ३दाशु । षाइवसूनी ॥
चोदद्राधाः । उपस्तु । तंचिदर्वाक् । हाउहाउहाउ । वाग्ददद ।
ददाऽ२याऽ३ । हाउवाऽ३ ॥ ईऽ२३४५ ॥ ( दी० १५ । प० २० । मा० १२)११ (ग्रा।१७७)

( १००।१ ) ॥ भरद्वाजिनां व्रतम् । भरद्वाजोऽनुष्टुप्सोमेन्द्रौ ॥

हाउहाउहाउ । वाजऽ२म् । ( द्विः ) । वाजम् । एऽ२ । वाजऽ२म् । (त्रिः) ।
वाजम् । एऽ२ । वाजऽ२म् । ( त्रिः ) । वाजम् । एऽ२ । वाजऽ२म् । वाजमोऽ२इ । (द्वेत्रिः) ।
वाजम् । विर्वीऽ२विवि । (त्रिः) । विविहोऽ२इविवि । (त्रिः) । व्यश्ववाइवि । ( त्रिः ) ।
अभीनवन्तआऽ२द्रूहाऽ२ः । द्रूहाद्रुहः । ( त्रिः) । प्रियमिन्द्रस्यकाऽ२मायाऽ२म् ।
मियंमियम् । (त्रिः) । वत्सन्नपूर्वआऽ२यूनीऽ२ । युनीयुनि । (त्रिः) ।
जातꣳरिहन्तिमाऽ२ताराऽ२ः । तरोतरः । (त्रिः) । हाउहाउहाउ । वाजऽ२म् । ( द्विः ) ।
वाजम् । एऽ२ । वाजऽ२म् । (त्रिः) । वाजम् । एऽ२ । वाजऽ२म् । (त्रिः) ।
वाजम् । एऽ२ । वाजऽ२म् । वाजमोऽ२इ । ( द्वेत्रिः) । वाजम् ।
विवीऽ२विवि । (त्रिः) । विविहोऽ२इविवि । (त्रिः) । व्यश्ववाइवि । ( द्विः ) ।
व्याऽ२३श्ववाउ । वा । ए । सुधामधाम । ( द्वेद्विः ) । ए । सुधामधामाऽ२३४५ ॥
( दी० ६३ । प० ८५ । मा० ६८ )१२( णै । १७८ )

---

[ साम-तन्त्र-सूत्राणि ][१७७]११ ( पृथक् सूत्राणि न सन्ति ); [१७८]१२ धामधा १३.२.८;

मधुच्छन्दा वैश्वामित्रः । अग्निः । गायत्री । ( ऋ० १।१।१ )

अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म् ।
होता॑रं रत्न॒धात॑मम् ॥ ६०५ ॥

१०१ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् ।
होतारꣳ रत्नधातमम् ॥ ६०६ ॥

१०२ इन्द्रं नरो नेमधिता० । ( ऋ० ७।२७।१: सा. ३१८; ग्रा. गे. ५४० )

---

( १०१।१ ) ॥ यम व्रते द्वे, ( यम व्रतम् ) । यमो गायत्र्यग्निः ॥

मनोहाउ । वयोहाउ । वर्चोहाउ । अग्निम् । ईडाऽ२इ । पुरोहाऽ२३४इताम् ॥
इड्हाउ । इडाहाउ । आयुहाउ । यज्ञ । स्यदाऽ२इ । वमृत्वीऽ२३४जाम् ॥
स्वर्हाउ । ज्योतिर्हाउ । ऋतꣳहाउ । होता । रꣳराऽ२३ ॥ त्नधाऽ३ताऽ५माऽ६५६म् ॥
एऽ३ । महाऽ२३४५: ॥ ( दी० १८ । प० २० । मा० १७ )१३( णे । १७९ )

(१०२।१) ॥ अङ्गिरसां व्रतम् । अङ्गिरसस्त्रिष्टुबिन्द्रः ॥

हाउहाउहाउ । हाऽ३ । ओऽ२३४वाक् । ( द्वित्रिः ) । ओम् । (त्रिः) । ओम् । (त्रिः) ।
हाऽ३ । ओऽ२३४वाक् । ( द्वे त्रिः ) । एआयुः । (त्रिः) । आयुः । (त्रिः) ।
इन्द्रन्नरोनेमधिताहवाऽ२न्ताइ ॥ यत्पार्यायुनजतेधियाऽ२स्ताः ॥ शूरानृषाताश्रवसश्चकाऽ२माइ ॥
आगोमतिव्रजेभजातुवाऽ२न्नाः । हाउहाउहाउ । हाऽ३ । ओऽ२३४वाक् । ( द्वित्रिः ) ।
ओम् । (त्रिः) । ओम् । ( त्रिः ) । हाऽ३ । ओऽ२३४वाक् । ( द्वे त्रिः ) ।
एआयुः । (त्रिः) । आयुः । (द्विः) । आयूऽ३४ । आहावा ॥ ए ।
आयुर्द्धाअस्मभ्यंवर्चोधादेवेभ्याऽ२३४५: ॥ ( दी० ४७ । प० ५७ । मा० ५३ )१४ ( छि । १८० )

---

[साम-तन्त्र-सूत्राणि] [१७९]१३[१८०]१४ ( पृथक् सूत्राणि न सन्ति )

॥ वामदेवो गौतमः । अग्निः । त्रिष्टुप् । ( ऋ० ४।१।१६ )

ते मन्वत प्रथमं नाम धेनोस्त्रिः सप्त मातुः परमाणि विन्दन् ।
तज्जानतीरभ्यनूषत व्रा आविर्भुवदरुणीर्यशसा गोः ॥६०६॥

१०३  इमा उ वां दिविष्टये० । ( ऋ० ७।७४।१; सा. ३०४, ७५३; ग्रा. गे. ५१७ )

१०४ ते मन्वत प्रथमं नाम गोनां त्रिः सप्त परमं नाम जानन् ।
ता जानतिरभ्यनूषत क्षा आविर्भुवन्नरुणीर्यशसा गावः ॥ ६०६ ॥

( १०३।१ )  ॥ अश्विनो व्रते द्वे । अश्विनौ बृहत्यश्विनौ ॥

होइहाऽ३ । इहोइहाऽ३ । (द्वेत्रिः) । इमाउवांदिविष्टयाओहाउ ॥
उस्राहवन्तेअश्विनाओहाउ॥ अयंवामह्वेवसेशचीवसूओहाउ॥ विशंविशꣳहिगच्छथाओहाउ ।
होइहाऽ३ । इहोइहाऽ३ । (द्वेद्विः) । होइहाऽ३ । इहोइहाऽ३४ । ओहोवा ॥
ईऽ५हीहीहीहीहि ॥  ( दी० २८ । प० १८ । मा० २२ )१५ ( डा । १८१ )

( १०३।२ )
होइहा । इहोइहा । ( द्वेत्रिः ) । इमाउवांदिविष्टयाहोहाउ ॥ उस्राहवन्तेअश्विनाहोहाउ ॥
अयंवामह्वेवसशचीवसूहोहाउ॥ विशंविश हिगच्छथाहोहाउ । होइहा ।
इहोइहा । ( द्वेद्विः ) । होइहा । इहोइहाऽ३४ । ओहोवा ॥ ईऽ२ । (त्रिः) ॥
( दी० १४ । प० २० मा० १८ )१६( नै । १८२ )

( १०४।१ )  ॥ गवां व्रते द्वे । गावस्त्रिष्टुब्गावः ॥

हाउहाउहाउ । गावोहाउ । (त्रिः)। वृषभपत्नीहाउ । (त्रिः) । वैराजपत्नीहाउ । ( त्रिः )
विश्वरूपाहाउ । (त्रिः)। अस्मासुरमध्वꣳहाउ । (त्रिः) । तेमन्वतप्रथमन्नामगोऽ२नाम् ॥
त्रिःसप्तपरमन्नामजाऽ२नान्॥ ताजानतीरभ्यनूषताऽ२क्षाः॥ आविर्भुवन्नरुणीर्यशसागाऽ२वाः ।
हाउहाउहाउ । गावोहाउ । (त्रिः) । वृषभपत्नीहाउ । (त्रिः) । वैराजपत्नीहाउ । ( त्रिः ) ।
विश्वरूपाहाउ । ( त्रिः ) । अस्मासुरमध्वꣳहाउ । (द्विः) । अस्मासुरमध्वाऽ३ꣳहाउ ।
वा॥ ए । गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपाअस्मासुरमध्वम् । ( द्वे द्विः ) ।
ए । गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपाअस्मासुरमध्वाऽ२३४५म् ॥
( दी० १२९ । प० ४३ । मा० ४६ )१७( दू । १८३ )

[साम-तन्त्र-सूत्राणि,[१८१]१५ इ बिं योनि चु ४.११.१०; [१८२]१६[१८३]१७ (पृथक् सूत्राणि न सन्ति )

१०५ अग्निमीडे पुरोहितं० । ( ऋ० १।१।१; सा. ६०५; आ. गा. १७९ )

१०६ कश्यपस्य स्वर्विदः० । ( न ऋग्वेदीयः; सा. ३६१; ग्रा. गे. ६१६ )

---

( १०५।१ )

हाउहाउहाउवा । अग्निमीडपुरोहितम् । देवेषुनिधिमा२अहम् ॥ हाउ(३)वा । यज्ञस्यदेवमृत्विजम् । देवेषुनिधिमा२अहम् ॥ हाउ(३)वा । होतार२रत्नधातमम् । देवेषुनिधिमा२अहम् ॥ हाउ(३)वा ॥ ए । देवेषुनिधिमा२अहम् ॥ (द्वेत्रिः) ॥

( दी० २८ । प० १६ । मा० २७ )१८( टे । १८४ )

( १०६।१ )   ॥ कश्यपस्य (सु)व्रते द्वे । कश्यपोऽनुष्टुप्सोमः ॥

हाउहाउहाउ । प्सुवन्तरा । ( त्रिः )। कोज्योतिः । अर्कोज्योतिः । अर्कोज्योतिः । सुवर्द्धेनूः । (( त्रिः ) । कश्यपस्यसुऽ३वावाऽ१इदारऽ२ः ॥ यावाहुस्सयुऽ३जावाऽ१इतीऽ२ ॥ ययोर्विश्वमऽ३पाइव्राऽ१ताऽ२म् ॥ यज्ञन्धीरानिऽ३चाआऽ१याऽ२३ । हाउहाउहाउ । प्सुवन्तरा । ( त्रिः ) । कोज्योतिः । अर्कोज्योतिः । अर्कोज्यो तिः । सुवर्द्धेनूः । (द्विः) । सुवर्द्धेनुः । ओहोवाहाउ । वाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥

( दी० ३७ । प० २७ । मा० २६ )१९( छु । १८५ )

( १०६।२ )

हाउहाउहाउ । ऊऽ२ । ( त्रिः ) । कह्वाऽ२उ (त्रिः) । कश्यपस्यसुवाऽ२३र्विदाः ॥ यावाहुस्सयुऽ३जावाऽ१इतीऽ२ ॥ ययोर्विश्वमपाऽ२३इव्रताम् ॥ यज्ञंधीरानिऽ३चाआ१याऽ२३ । हाउहाउहाउ । ऊऽ२ । (त्रिः) । कह्वाऽ२उ । (द्विः) । कह्वाऽ२३उ । ह्वाउवाऽ३ ॥ ईऽ२३४५ ॥   ( दी० ११ । प० २० । मा० १८ )२०( डू । १८६ )

॥ दश द्वितीयः खण्डः ॥ २ ॥

इति (ग्रामे) आरण्यकगाने चतुर्थस्यार्द्धः प्रपाठकः ॥

---

[साम-तन्त्र-सूत्राणि][१८४]१८[१८५]१९[१८६]२० (पृथक् सूत्राणि न सन्ति )

१०७ **इन्द्रं नरो नेमधिता०** । ( ऋ० ७।२७।१; सा. ३१८; ग्रा. गे. ५४० )

१०८ **अभि त्वा शूर नोनुमः०** । ( ऋ० ७।३२।२२; सा. २३३, ६८०; ग्रा. गे. ३७७-३७८ )

---

( १०७।१ ) ॥ अङ्गिरसां व्रते द्वे ॥ अङ्गिरसस्त्रिष्टुबिन्द्रः ॥

हाउहाउहाउ । इन्द्राऽ३१२३म् । हाउहाउहाउ । नरोनेमधिताहवान्ताइ ।
हवान्ताइ । हवान्ताऽ३इ । ओइ । हवन्ताइ । वन्ता । औहोवा । एहिया ॥ हाउहाउहाउ ।
यत्पाऽ३१२३ । हाउहाउहाउ । यायुनजतेधियास्ताः । धियास्ताः ।
धियास्ताऽ३ः । ओइ । धियस्ताः । यस्ता । औहोवा । एहिया ॥ हाउहाउहाउ ।
शूरोऽ३१२३ । हाउहाउहाउ । नृषाताश्रवसश्चकामाइ । चकामाइ ।
चकामाऽ३इ । ओइ । चकामाइ । कामा । औहोवा । एहिया ॥ हाउहाउहाउ ।
आगोऽ३१२३ । हाउहाउहाउ । मतिव्रजेभजातुवान्नः । तुवान्नः । तुवान्नाऽ३ः ।
ओइ । तुवन्नाः । वन्ना । औहोवा । एहिया । हाउहाउहाउ । वाऽ३ ॥ ईऽ२३४५ ॥

( दी० ५३ । प० ४७ । मा० ४८ )१( द्रै । १८७ )

( १०८।१ )

हाउहाउहाउ । हाहाउ । (त्रिः) । इहाहाउ । (त्रिः) । इयाहाउ । ( द्विः) ।
इयाऽ३हाउ । वा । अभित्वाशूरनोनुमोहस् ॥ अदुग्धाइवधेनवोहस् ।
ईशानमस्यजगतःस्वर्दृशऽहस् । ईशानमिन्द्रतस्थुषोहस् ॥ सहस्वान्त्सहसस्पतिरादिद्यवद्धस् ॥
स्वर्जिद्वाजसातमोदिद्यवद्धस् । हाउहाउहाउ । हाहाउ । (त्रिः) । इहाहाउ । ( त्रिः ) ।
इयाहाउ । (द्विः) । इयाऽ३हाउ । वा ॥ इडाहम्स्थिहम्स्थिइडा ॥ (त्रिः) ॥

( दी० २८ । प० ३१ । मा० ३७ )१( टे । १८८ )

---

[साम-तन्त्र-सूत्राणि][१८७]१[१८८]१ (पृथक् सूत्राणि न सन्ति )

गृत्समदः शौनकः । अपांनपात् । त्रिष्टुप् । ( ऋ० २।३५।३ )

समन्या यन्त्युप यन्त्यन्याः समानमूर्वं नद्यः पृणन्ति ।
तमू शुचिं शुचयो दीदिवांसमपां नपातं परि तस्थुरापः ॥६०७॥

१०९ समन्या यन्त्युपयन्त्यन्याः समानमूर्वं नद्यस्पृणन्ति ।
तमू शुचिꣳ शुचयो दीदिवाꣳसमपान्नपातमुप यन्त्यापः ॥६०७॥

---

( १०९।१ ) ॥ अपां व्रते द्वे । आपो विराडिन्द्र आपस्त्रिष्टुबापः ॥

हाउहाउहाउ । एरयत् । (त्रिः) । अपःसमैरयत् ( त्रिः ) । भूतमैरयत् । (त्रिः) ।
अपाङ्गर्भोग्निरिडा । पांगर्भोग्निरिडा । पांगर्भोग्निरिडा ।
पृथिव्यागर्भोग्निरिडा । ( त्रिः ) । समन्यायन्त्युपयन्तियाऽ२३न्याः ॥
समानमूर्वंनद्यस्पृणाऽ२३०ती ॥ तमूशुचिꣳशुचयोदीदिवाऽ२३ꣳसाम् ॥
अपान्नपातमुपयन्तियाऽ२३पाऽ३ः । हाउहाउहाउ । एरयत् । (त्रिः) ।
अपःसमैरयत् । ( त्रिः ) । भूतमैरयत् । (त्रिः) । अपांगर्भोग्निरिडा ।
पांगर्भोग्निरिडा । (द्विः) । पृथिव्यागर्भोग्निरिडा । (द्विः) । पृथिव्यागर्भोग्निरिडाऽ३ ।
हाउवा ॥ ए । अग्निःशिशुक्रः । ए । शुक्रःशिशुक्रः । ए । तेजःशक्रस्यशक्रम् ।
ए । तेजःसम्राःसमीचीः । ए । तेजउषानजारः । ए । सुवर्ज्योतीऽ२३४५ः ॥

( दी० ८८ । प० ४९ । मा० ३५ )३( द्व । १८९ )

( १०९।२ )

हाउहाउहाउ । एरयन् । (त्रिः) । समैरयन् । ( त्रिः ) । समस्वरन् । (त्रिः) ।
समन्यायन्त्युपयन्तियाऽ२३न्याः ॥ समानमूर्वंनद्यस्पृणाऽ२३न्ती ॥
तमूशुचिꣳशुचयोदीदिवाऽ२३ꣳसाम् ॥ अपान्नपातमुपयन्तियाऽ२३पाऽ३ः ।
हाउहाउहाउ । एरयन् । (त्रिः) । समैरयन् । (त्रिः) । समस्वरन् । (द्विः) ।
समस्वराऽ३न् । हाउवाऽ३ ॥ ईऽ२३४५ ॥ ( दी० २६ । प० २६ । मा० २८)४( कै । १९० )

---

[ साम-तन्त्र-सूत्राणि ][१८९]३ एः पि ९.७.४। [१९०]४ ( पृथक् सूत्राणि न सन्ति )

॥ भरद्वाजो बार्हस्पत्यः । वैश्वानरोऽग्निः । जगती । ( ऋ० ६ । ८ । १ )

पृक्षस्य वृष्णो अरुषस्य नू सहः प्र नु वोचं विदथा जातवेदसः ।
वैश्वानराय मतिर्नव्यसी शुचिः सोम इव पवते चारुरग्नये ॥६०९॥

११०　उदु त्यं जातवेदसम् । ( ऋ० १ । ५० । १; सा. ३१; ग्रा.गे.५० )

वामदेवो गौतमः । रात्रिः । अनुष्टुप् । ( न ऋग्वेदीयः )

१११ आ प्रागाद्भद्रा युवतिरह्नः केतून्त्समीर्त्सति ।
अभूद्भद्रा निवेशनी विश्वस्य जगतो रात्री ॥ ६०८ ॥

११२ प्रक्षस्य वृष्णो अरुषस्य नू महः प्र नो वचो विदथा जातवेदसे ।
वैश्वानराय मतिर्नव्यसे शुचिः सोम इव पवते चारुरग्नये ॥६०९॥

---

( ११०।१ )　॥ अहोरात्रयोर्व्रते द्वे, (अहर्व्रतम्) । अहर्गायत्रीसूर्यः ॥

हाउ(३)वा । प्रागन्यदनुवर्ततेरजोपागन्यत्तमोपेषतिभ्यसा । हाउहाउहाउ ।
उदुत्यञ्जातऽ२वाइदाऽ१साऽ२३म् ॥ हाउहाउहाउवा ।
प्रागन्यदनुवर्ततेरजोपागन्यत्तमोपेषतिभ्यसा । हाउहाउहाउ । देवंवहन्तिऽ२काइताऽ१वाऽ२३ः ॥
हाउहाउहाउवा । प्रागन्यदनुवर्ततेरजोपागन्यत्तमोपेषतिभ्यसा । हाउहाउहाउ ।
दृशेविश्वायऽ२सूराऽ१याऽ२३म् ॥ हाउहाउहाउवा ॥ ए ।
अरूरुचद्धर्माअरूरुचदुषसादिविसूर्योविभातीऽ२३४५ ॥ ( दी० ४२ । प० १५ । मा० २७ )५(जे । १९१)

( १११।१ )　॥ रात्रेर्व्रतम् । रात्र्यनुष्टुप्रात्रिः ॥

होऽ२इ । (त्रिः) । आप्रागाद्भद्रायुवतिः ॥ होऽ२इ । (त्रिः) । अह्नःकेतून्त्समीर्त्सति ॥
होऽ२इ । (त्रिः) । अभूद्भद्रानिवेशनी ॥ होऽ२इ । (त्रिः) । विश्वस्यजगतोरात्री ।
होऽ२इ । ((द्विः) । होऽ१ । वाऽ२ । हाउवाऽ३ ॥ ईऽ२३४५ ॥

( दी० १४ । प० २२ । मा० १६ )६( थू । १९२)

( ११२।१ )　॥ विष्णोर्व्रतम् । विष्णुर्जगती वैश्वानरः ॥

हाउहाउहाउ । ऊऽ२ । (द्विः) । ऊऽ२ । वाऽ२ । हाउवाऽ३ । हस्स्थिहहस् ।
अर्चिःशोचिस्तपोहरः । प्रक्षस्यवृष्णोअरुषस्यनूमाऽ२३हाः ॥
प्रनोवचोविदथाजातवेदाऽ२३साइ ॥ वैश्वानरायमतिर्नव्यसशूऽ२३चीः ॥
सोमइवपवतेचारुरग्नाऽ२३याऽ३इ । हाउहाउहाउ । ऊऽ२ । ( द्विः ) ।
ऊऽ२ । वाऽ२ । हाउवाऽ३ ॥ ईऽ२३४५ ॥　( दी० २२ । प० १९ । मा० । १७)७( झे । १९३ )

---

[साम-तन्त्र-सूत्राणि ][१९१]५ दन्त्यपरे १३.३.१; स्येऽन्तस्थाग्राम् ९.८.८; [१९२]६( पृथक् सूत्राणि न सन्ति )
[१९३]७ हसः स्वे १३.४.५;

ऋजिश्वा भारद्वाजः । विश्वे देवाः । जगती । ( ऋ० ६ । ५२ । १४ )

विश्वे देवा मम शृण्वन्तु यज्ञिया उभे रोदसी अपां नपाच्च मन्म ।
मा वो वचांसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥६१०॥

११३ विश्वे देवा मम शृण्वन्तु यज्ञमुभे रोदसी अपां नपाच मन्म ।
मा वो वचाँसि परिचक्ष्याणि वोचं सुम्नेष्विद्वो अन्तमा मदेम ॥ ६१० ॥

११४ उदु ब्रह्माण्यैरत० । ( ऋ० ७ । २३ । १; सा० पू० ३३०; मा० गु० ६१ )

( ११३।१ ) ॥ विश्वेषां देवानां ( वैश्वदेव ) व्रतम् । विश्वेदेवाद्यावापृथिव्यौ(इन्द्र)बृहतीजगती विश्वेदेवाः ॥

हाउहाउहाउ । आइही । (त्रिः) । आइहीऽ२ । (त्रिः) । आइहिहाऽ२इ । (द्विः) ।
आइहिहाइ । विश्वेदेवाममशृण्वन्तुयाऽ२३ज्ञाम् ॥ उभेरोदसीअपान्नपाचमाऽ२३न्मा ॥
मावोवचाꣳसिपरिचक्ष्याणिवोऽ२३चाऽ२म् ॥ हाउहाउहाउ । आइही । (त्रिः) ।
आइहीऽ२ । (त्रिः) । आइहिहाऽ२इ । (द्विः) । आइहिहाइ ।
सुम्नेष्विद्वोअन्तमामदाऽ२इमाउवाऽ३ ॥ इऽ२३४५ ॥ ( दी० २१ । प० २५ । मा० ३६ )८( ठू । १९४ )

( ११४।१ ) ॥ वसिष्ठ व्रते द्वे ॥ द्वयोर्वसिष्ठस्त्रिष्टुबिन्द्रः ॥

हाउहाउहाउ । ऊऽ२ । (त्रिः) । षि । ( त्रिः ) । इयाहाउ । (त्रिः) ।
उदुब्रह्मा । णीऽ३ऐर । तश्रवस्या ॥ इन्द्रꣳसमा । र्येऽ३मह । यावसिष्ठा ॥
आयोविश्वा । नीऽ३श्रव । सातताना ॥ उपश्रोता । मईव । तोवचाꣳसी ।
हाउहाउहाउ । ऊऽ२ । ( त्रिः ) । षि । (त्रिः) । इयाहाउ । (द्विः) ।
इयाऽ२हाउ । वाऽ३ ॥ ईऽ२३४५ ॥ ( दी० १६ । प० ३४ । मा० १४ )९( ध्री । १९५ )

---

[ साम-तन्त्र-सूत्राणि ][१९४]८[१९५]९ ( पृथक् सूत्राणि न सन्ति )

आरण्यक-गानं ४७

११५ इन्द्रं नरो नेमधिता० ( ऋ० ७।२७।१; सा० ३१८; ग्रा० गे० ५४० )

---

( ११४।२ )

हाउहाउहाउ । ऊ ऽ२ । (त्रिः) । षि । (त्रिः) । इयो । (त्रिः) । इयोवा । (त्रिः) ।
इयोवाहाइ । (त्रिः) । उदुऽ२ । (द्विः) । उदु । उदोवा । (त्रिः) ।
उदोवाहाइ । (त्रिः) । ब्रह्मा । णीऽ३ऐर । तश्रवस्या । स्या । स्या । स्योवा । (त्रिः) ।
स्योवाहाइ । (त्रिः) ॥ इन्द्रऽ२म् । (द्विः) । इन्द्रम् । इन्द्रोवा । (त्रिः) ।
इन्द्रोवाहाइ । (त्रिः) । समा । येंऽ३मह । यावसिष्ठा । ष्ठा । ष्ठा । ष्ठोवा । (त्रिः)
ष्ठोवाहाइ । (त्रिः) ॥ आयोऽ२ । (द्विः) । आयः । आयोवा । (त्रिः) । आयोवाहाइ । (त्रिः) । विश्वा ।
नीऽ३श्रव । साततामा । ना । ना । नोवा । (त्रिः) । नोवाहाइ । (त्रिः) ॥
उपऽ२ । (द्विः) । उप । उपोवा । (त्रिः) । उपोवाहाइ । (त्रिः) । श्रोता ।
मईव । तावचा३सी । सी । सी । सोवा । (त्रिः) । सोवाहाइ । (त्रिः) ।
हाउहाउहाउ । ऊऽ२ । (त्रिः) । षि । (त्रिः) । इयो । (त्रिः) । इयोवा । (त्रिः) ।
इयोवाहाइ । (द्विः) । इयोवाऽ३हाउ । वाऽ३ ॥ ईऽ२३४५ ॥

( दी० १५६ । प० ११४ । मा० ४२ )१० ( घा । १९६ )

॥ दश तृतीयः खण्डः ॥ ३ ॥

( ११५।१ ) ॥ इन्द्रस्य सञ्जयम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

हाउहाउहाउ । विश्वाधनानिसंजित्यवृत्रहाभूयासुतिः । होइ । (द्वेत्रिः) ।
उरुंघोषंचक्रेलोकम् । होइ । (द्वे त्रिः) । वृत्रमेभ्योलोकेभ्योनुनुदानः ।
होइ । (द्वे त्रिः) । इन्द्रन्नरो । नेऽ३माधि । ताहवन्ताइ ॥ यत्पारियाः ।
युनज । ताइधियस्ताः ॥ शूरोनृषा । ताऽ३श्रव । सश्चकामाइ ॥
आगोमताइ । व्रजेभ । जातुवन्नाः । हाउ(३) । विश्वाधनानिसंजित्यवृत्रहाभूयासुतिः ।
होइ । (द्वे त्रिः) । उरुंघोषंचक्रेलोकम् । होइ । (द्वे त्रिः) । वृत्रमेभ्योलोकेभ्योनुनुदानः ।
होइ । (द्वे द्विः) । वृत्रमेभ्योलोकेभ्योनुनुदानः । होऽ२ । वाऽ२३४औहोवा ॥
ए । वृत्रंजघन्वा३अपतद्ववारयत्तमः । (द्वेद्विः) । ए । वृत्रंजघन्वा३अपतद्ववारयत्तमाऽ२३४५ः ॥

( दी ११० । प० ५७ । मा० ५५ )११( फु । १९७ )

---

[ साम-तन्त्र-सूत्राणि ][१९६]१०[१९७]११ (पृथक् सूत्राणि न सन्ति )

स्यांम

वामदेवो गौतमः । लिंगोक्ता । महापंक्तिः । ( न ऋग्वेदीयः ) 394

११६ यशो मा द्यावापृथिवी यशो मेन्द्रबृहस्पती ।
यशो भगस्य विन्दतु यशो मा प्रतिमुच्यताम् ॥ ६११ ॥

११७ प्र वो महे महे वृधे० । (ऋ० ७।३१।१०; सा. ३२८, १७३३; ग्रा. गे. ५५८-५५९ )

११८ इन्द्रं नरो नेमधिता० । ( ऋ० ७।२७।१; सा. ३१८; ग्रा. गे. ५४० )

( ११६।१ ) ॥ यशस्साम । अगस्त्ययशः ज्योतिष्मतीजगतीद्यावापृथिव्यौ ॥

हाउहाउहाउवा । यशोमाद्यावापृथिवी ॥ हाउ(३)वा । यशोमेन्द्रबृहस्पती ॥
हाउ(३)वा । यशोभगस्यविन्दतु ॥ हाउ(३)वा । यशोमाप्रतिमुच्यताम् ॥
हाउ(३)वा । यशःस्त्रियस्स्यास्स२संदः ॥ हाउ(३)वा । अहंप्रवदितास्याम् ।
हाउ(३)वा ॥ अश्वमिष्टयेऽ३हस् ॥ ( दी० १५ । प० १४ । मा० २५ )१२( सु । १९८ )

( ११७।१ ) ॥ प्रजापतेस्त्रयास्त्रिंशत् सम्मितम् । प्रजापतिर्विराडिन्द्रः ॥

एऽ३१(चतुः) । प्रवोमहाइ । महवृधाइभराऽ२३४ध्वाम् । क्षौं । (चतुः) ॥
एऽ३१ । (चतुः) । प्रचेतसाइ । प्रसुमताइकृणूऽ२३४ध्वाम् । क्षौं । (चतुः) ॥ एऽ३१ । (चतुः) ।
विशःपूर्वाइः । प्रचरचर्षणाऽ२३४इप्राः । क्षौं । (चतुः) ॥ एऽ३१ । (द्विः) । एऽ३१२ ।
आऽ२३४ । औहोवा ॥ ए । व्रतमेसुवरेशकुनः ॥ ( दी० ९ । प० ३७ । मा० ११ )१३( थ । १९९ )

( ११८।१ ) ॥ प्रजापतेश्चतुस्त्रिंशत् सम्मितम् । प्रजापतिस्त्रिष्टुबिन्द्रः ॥

एऽ२ । (पञ्चकृत्वः) । योवा । (पञ्चकृत्वः) । योवाहाइ । (पञ्चकृत्वः) । इन्द्रन्नरो ।
नेऽ३मधि । ताहवन्ताइ । एऽ२ । (पञ्चकृत्वः) । योवा । (पञ्चकृत्वः) । योवाहाइ । (चतुः) ।
योवाऽ३हाउ । वा । क्षौं । ( त्रिः ) ॥ एऽ२ । (पञ्चकृत्वः) । योवा । (पञ्चकृत्वः) ।
योवाहाइ (पञ्चकृत्वः) । यत्पारियाः । युनज । ताइधियस्ताः । एऽ२ । (पञ्चकृत्वः) ।
योवा । (पञ्चकृत्वः) । योवाहाइ । ( चतुः ) । योवाऽ३हाउ । वा । क्षौं । ( त्रिः ) ॥
एऽ२ । (पञ्चकृत्वः) । योवा । (पञ्चकृत्वः) । योवाहाइ । (पञ्चकृत्वः) । शूरोनृषा ।
ताऽ३श्रव । सश्वकामाइ । एऽ२ । (पञ्चकृत्वः) । योवा । (पञ्चकृत्वः) । योवाहाइ । (चतु) ।
योवाऽ३हाउ । वा । क्षौं । ( त्रिः ) ॥ एऽ२ । (पञ्चकृत्वः) । योवा । (पञ्चकृत्वः) ।
योवाहाइ । (पञ्चकृत्वः) । आगोमताइ । व्रजेभ । जातुवन्नाः । एऽ२ । (पञ्चकृत्वः) ।
योवा । (पञ्चकृत्वः) । योवाहाइ । (चतुः) । योवाऽ३हाउ । वा ॥ ए । व्रतमेसुवरेशकुनः ॥
( दी० २०४ । प० १४७ । मा० ४८ )१४( थै । २०० )

[साम-तन्त्र-सूत्राणि][१९८]१२[२००]१४ ( पृथक् सूत्राणि न सन्ति ) [१९९]१३ स्पर्शादिः ५.२.३;

११९ अभि त्वा शूर नोनुमः० । ( ऋ० ७।३२।२२; सा. २३३, ६८०; ग्रा. गे. ३७७-३७८ )
१२० इन्द्रं नरो नेमधिता० । ( ऋ० ७।२७।१; सा. ३१८; ग्रा. गे. ५४० )

( ११९।१ )    ॥ जमदग्नेर्व्रतम् । जमदग्निर्बृहतीन्द्रः ॥

हाउ(३) । हहाउ । ( त्रिः ) । हहहाउ । (त्रिः) । कपाऽ२३उ । ( त्रिः ) ।
हाऽ३ओऽ२३ । (द्विः) । हाऽ३१उवाऽ२ । अभित्वाशूरनोऽ३ । आउ । वाऽ२३ ।
नूऽ२३४माः । इडा । ( त्रिः ) । ज्योतिष्पतस्स्वःपतान्तरिक्षंपृथिवींपश्वप्रदिशऋषीन्देवान्वर्णम् ॥
अदुग्धाइवधाऽ३१उवाऽ२३इ । नाऽ२३४वाः । इडा । ( त्रिः ) ।
ज्योतिष्पतस्स्वःपतान्तरिक्षंपृथिवींपश्वप्रदिशऋषीन्देवान्वर्णम् ॥
ईशानमस्यजगतस्सुवाऽ३१उवाऽ२३ । दृऽ२३४शाम् । इडा । (त्रिः) ।
ज्योतिष्पतस्स्वःपतान्तरिक्षंपृथिवींपश्वप्रदिशऋषीन्देवान्वर्णम् ॥
ईशानमिन्द्रताऽ३१उवाऽ२३ । स्थूऽ२३४षाः । इडा । ( त्रिः ) ।
ज्योतिष्पतस्स्वःपतान्तरिक्षंपृथिवींपश्वप्रदिशऋषीन्देवान्वर्णम् । हाउ(३) ।
हहाउ । ( त्रिः) । हहहाउ । (त्रिः ) । कपाऽ२३उ । ( त्रिः ) । हाऽ३ओऽ२३ । ( द्विः ) ।
हाऽ३१उवाऽ२॥ ए । व्रतमेसुवरेशकुनः ॥    ( दी० ६४ । प० ५४ । मा० ४९ )१५(धो।२०१)

( १२०।१ )    ॥ युग्यश्च दशस्तोभम् । जमदग्निस्त्रिष्टुबिन्द्रः ॥

हाउ(३) । ओहा । ( त्रिः ) । हाओवा । ( त्रिः ) । ऊऽ२ । ( त्रिः ) । ओऽ२ । ( त्रिः ) ।
हाउवाक् । ( त्रिः ) । आयुर्यन् । ( त्रिः ) । एआयुः । (त्रिः) । आयुः । ( त्रिः ) ।
वयाः । (द्विः ) । वयः । इन्द्रन्नरोनेमधिताहवाऽरन्ताइ ॥ यत्पार्यायुनजतेधियाऽ२स्ताः॥
शूरोनृपाताश्रवसश्चकाऽ२माइ॥ आगोमतिव्रजेभजातुवाऽ२न्नाः । हाउ(३) ।
ओहा । ( त्रिः ) । हाओवा । ( त्रिः ) । ऊऽ२ । ( त्रिः ) । ओऽ२ । ( त्रिः ) ।
हाउवाक् । ( त्रिः ) । आयुर्यन् । ( त्रिः ) । एआयुः । ( त्रिः ) । आयुः । (त्रिः ) ।
वयाः । ( द्विः ) । वाऽ२ । याऽ२३४ । औहोवा ॥ ए । आयुर्द्धाअस्मभ्यंवर्चोधादेवेभ्याऽ२३४५ः॥
( दी० ९५ । प० ६४ । मा० ५९ )१६( मो । २०२ )

[साम-तन्त्र-सूत्राणि][२०१]१५ रे फिस्वरे १३.५.२;    [२०२]१६ न हाउवागथविर्दुधानाम् १३.६.२;

हिरण्यस्तूप आङ्गिरसः । इन्द्रः । त्रिष्टुप् । ( ऋ० १।३२।१ )

इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ ६१२ ॥

१२१ इन्द्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री ।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानाम् ॥ ६१२ ॥

---

( १२१।१ ) ॥ वार्त्रघ्नम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

वृत्रहत्यायहोइ । ( त्रिः ) । अधृष्णवेहोइ । (त्रिः) । अपूरवेहोइ । ( द्विः ) ।
अपूरावाऽ२इ । पृथिवीश्चाहोइ । (त्रिः) । विवर्त्तयाहोइ । (द्विः) । विवर्त्तायाऽ२ ।
अन्तरिक्षꣳहोइ । ( त्रिः) । सुधारयाहोइ । (द्विः) । सुधारायाऽ२ । दिवंवेपाहोइ । (त्रिः) ।
अवेपहोइ । (द्विः) । अवेपायाऽ२ः । होइ । ( द्विः ) । हुवेऽ२ । हाऽ३१उवाऽ२ ।
इन्द्रिऽ२ । (द्विः) । इन्द्र । स्यनू । (द्विः) । स्यनूऽ३ । आउ । वाऽ२ ।
वीर्याणि । प्रवा । ( द्विः) । प्रवाऽ३१उ । वाऽ२३ । चाऽ२३४५म् ॥ यानिऽ२ । ( द्विः ) ।
यानि । चका । ( द्विः ) । चकाऽ३१उ । वाऽ२ । रप्रथमा । निवा । ( द्विः ) ।
निवाऽ३१उ । वाऽ२३ । त्रीऽ२३४६ ॥ अहिऽ२न् । ( द्विः ) । अहन् ।
अहाइम् । ( द्विः) । अहाऽ३१उ । वाऽ२ । अन्वपः । तता । (द्विः) ।
तताऽ३१उ । वाऽ२३ । दाऽ२३४५ ॥ प्रवऽ२ । ( द्विः ) । प्रव । क्षणाः । ( द्विः ) ।
क्षणाऽ३१उ । वाऽ२ । अभिनत्पा । वेता । वेताऽ३१उ । वाऽ२३ ।
नाऽ२३४५म् । वृत्रहत्यायहोइ । ( त्रिः ) । अधृष्णवेहोइ । (त्रिः ) ।
अपूरवेहोइ । ( द्विः) । अपूरावाऽ२इ । पृथिवीश्चाहोइ । (त्रिः) । विवर्त्तयाहोइ । (द्विः) ।
विवर्त्तायाऽ२ । अन्तरिक्षꣳहोइ । ( त्रिः ) । सुधारयाहोइ । ( द्विः ) । सुधारायाऽ२ ।
दिवंवेपाहोइ । ( त्रिः ) । अवेपहोइ । ( द्विः ) । अवेपायाऽ२ः । होइ । ( द्वि ) ।
हुवेऽ२ । हाऽ३१उवाऽ२ ॥ ए । वृत्रहासपत्नहा । ( द्वे त्रिः ) ॥

( दी० ८५ । प० १२१ । मा० ७६ ) १७( पू । २०३

---

[साम-तन्त्र-सूत्राणि][२०३]१७ नन्दाया अभौ १३.७.१०; सौम हवि ८.६.४; नन्दायाः मन् १३.१०.१०;
१ इदं सामतं० भाष्यानुसारेण ।

## १२२ सत्यमित्था वृषेदसि० । ( ऋ० ८।३३।१०; सा. २६३; ग्रा. गे. ४५६ )

( १२२।१ )　　॥ प्रजापतेश्चाष्टानिधनम् । प्रजापतिर्बृहतीन्द्रः ॥

अभिप्रग्ना । तमोजसा । तमोजासाऽ२ । (त्रीणि त्रिः) । तमोजसा । सुवोजासाऽ२ ( द्वे द्विः ) ।
तमोजसा । सुवो । जाऽ२ । साऽ२३४ । औहोवा । असिप्राणएआसि । (त्रिः) ।
एआसि । (त्रिः) । सत्यमित्थावृषाऽ२इदाऽ२३४सी । एआसि । (द्विः) । ए ।
आऽ२ । साऽ२३४ । औहोवा । इडाङ्गच्छसूर्यङ्गच्छे । डाङ्गच्छसूर्यङ्गच्छे ।
डाङ्गच्छसूर्यङ्गच्छ ॥ अभिप्रग्ना । तमोजसा । तमोजासाऽ२ । ( त्रीणि त्रिः ) ।
तमोजसा । सुवोजासाऽ२ । (द्वेद्विः) । तमोजसा । सुवो । जाऽ२ । साऽ२३४ ।
औहोवा । असिचक्षुरेआसि । (त्रिः) । एआसि । ( त्रिः ) । वृषजूतिर्नोऽवाऽ२३४इता ।
एविता । (द्विः ) । ए । वाऽ२इ । ताऽ२३४ । औहोवा । अन्तरिक्षंगच्छनाकेविभाहि । (त्रिः) ॥
अभिप्रग्ना । तमोजसा । तमोजासाऽ२ । (त्रीणित्रिः) । तमोजसा । सुवोजासाऽ२ । (द्वे द्विः) ।
तमोजसा। सुवो । जाऽ२। साऽ२३४ । औहोवा । असिश्रोत्रमेआसि । (त्रिः) । एआसि । (त्रिः)।
वृषाह्युग्रशृण्विषेपराऽ२वाऽ२३४ती । एवाति । ( द्विः) । ए । वाऽ२ । ताऽ२३४ ।
औहोवा । स्वर्गच्छज्योतिर्गच्छ । (त्रिः )॥ अभिप्रग्ना । तमोजसा। तमोजासाऽ२। ( त्रीणि त्रिः )।
तमोजसा । सुवोजासाऽ२ । (द्वे द्विः ) । तमोजसा । सुवो । जाऽ२ ।
साऽ२३४ । औहोवा । असिज्योतिरेआसि । ( त्रिः ) । एआसि । (त्रिः)।
वृषोअर्वावताऽ२इश्रूऽ२३४ताः । एश्रुतः । ( द्विः) । ए । श्रूऽ२ ।
ताऽ२३४ । औहोवा॥ अतिज्योतिर्विभाह्यअति । ( द्विः) । अतिज्योतिर्विभाह्यअतीऽ२३४५ ॥
( दी० १४६ । प० १३६ । मा० ४० )१८( कौ । २०४ )

[साम-तन्त्र-सूत्राणि][२०४]१८ तदाद्यन्त एऽष्टानिधने १३.९.६; त्र्यद्यो विश्रमतः १३.९.७; उत्तु रसंधिः ९.७.२;
सि रेफिणि ९.७.३;

## १२३ इन्द्रं नरो नेमधिता० । ( ऋ० ७।२७।१; सा. ३१८; ग्रा.. गे. ५४० )

( १२३।१ ) ॥ इन्द्रस्य राजनम् रोहिणे द्वे, (राजनम्) । इन्द्रस्त्रिष्टुबिन्द्रः ॥

हिम् । (त्रिः) । हो । (त्रिः) । हु३ । ( त्रिः ) । ओहा । (त्रिः) । ओहाइ । ( त्रिः ) ।
इन्द्रन्नरो । नेऽ३मधि । ताहवन्ताइ । (त्रीणि त्रिः) । वयोवृहत् । ( त्रिः ) ।
विश्राष्टयेविधर्मणे । (त्रिः)॥ यत्पारियाः । युनज । ताइधियस्ताः । ( त्रीणि त्रिः ) ।
सत्यमोजः । ( त्रिः ) । रजस्सुवः । (त्रिः)॥ शूरोनृषा । ताऽ३श्रव । सश्चकामाइ । (त्रीणित्रिः) ।
भद्र३सुधा । (द्विः) । भद्र३सुधे । षमूर्जम् । इषमूर्जम् । (द्विः)॥ आगोमताइ । व्रजेभ ।
जातुवन्नाः । ( त्रीणि त्रिः ) । बृहद्यशः । (त्रिः) । दिविदधेऽ३हस् । ( द्विः ) ।
दिविदधेऽ३ । हाउवा ॥ वागीडासुवोवृहद्भाऽ२३४५ः ॥

( दी० ६६ । प० ७७ । मा० ४६ )१९( खू । २०५ )

( १२३।२ ) ॥ रौहिणम् । इन्द्रस्त्रिष्टुबिन्द्रः ॥

हाउ(३) । आइही । (त्रिः) । आइहिया । (त्रिः) । आसाउ । ( त्रिः ) ।
आयास् । ( त्रिः) । नामाः । ( त्रिः ) । किट् । ( द्विः ) । इन्द्रन्नरोनेमधिताहवाऽ२न्ताइ ॥
यत्पायायुनजतेधियाऽ२स्ताः॥ शूरोनृपाताश्रवसश्चकाऽ२माइ ॥ आगोमतिव्रजेभजातुवाऽ२न्नाः।
मनाऽ२३होइ । प्राणाऽ२३होइ । चक्षूऽ२३होइ । श्रोत्राऽ२३होइ ।
वाचाऽ२३होइ । व्रताऽ२३होइ । भूताऽ२३होइ । पानाऽ२३होइ । चित्ताऽ२३होइ ।
धीताऽ२३होइ । सुवाऽ२३होइ । ज्योताऽ२३इहोऽ२ । वाऽ२३४औहोवा ॥
ऊ२३४५ ॥

( दी० २६ । प० ३६ । मा० ३७ )२०( कें । २०६ )

॥ दश चतुर्थः खण्डः ॥ ४ ॥

॥ इति (ग्रामे) आरण्यकगाने चतुर्थः प्रपाठकः ॥ ४ ॥

[साम-तन्त्र-सूत्राणि][२०५]१९ जः सोः १३.५.४; वाग्लघु ८.५.८; [२०६]२० ( पृथक् सूत्राणि न सन्ति )

आत्मा (ब्रह्म) । आत्मा अग्निर्वा । त्रिष्टुप् । ( ऋ० ३।२६।७)

अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।

अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ ६१३ ॥

विश्वामित्रो गाथिनः । अग्निः । त्रिष्टुप् । ( ऋ० ३।५।५ )

पाति प्रियं रिपो अग्रं पदं वेः पाति यह्वश्चरणं सूर्यस्य ।

पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ ६१४ ॥

१२४ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म आसन् ।

त्रिधातुरर्को रजसो विमानोऽजस्रं ज्योतिर्हविरस्मि सर्वम् ॥ ६१३ ॥

१२५ पात्यग्निर्विपो अग्रं पदं वेः पाति यह्वश्चरणꣳसूर्यस्य ।

पाति नाभा सप्तशीर्षाणमग्निः पाति देवानामुपमादमृष्वः ॥ ६१४ ॥

---

( १ ) *अग्नेरिलांदं पश्चानुगानम्, इरान्नं वा । अग्न्यनुष्टुबात्मा ॥

हाउ(३) । ऊऽ२ । ( त्रिः ) ॥ हुऊऽ२ । (त्रिः) ॥ इयाहाउ । ( द्विः ) ।

इयाऽ३हाउ । वाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥ ( दी० ३ । प० १२ । मा० १० )१ ( ठौ । २०७)

( १२४।१ ) ॥ अग्नेरिलांदं पश्चानुगानम् । अग्निस्त्रिष्टुबात्मा (अग्निःवा) । ( तत्र द्वितीयमिदम् ) ॥

हाउ(३)वा । अग्निरस्मिजन्मनाजातवेदाः । इडा । सुवः । इडा ॥ हाउ(३)वा ।

घृतंमेचक्षुरमृतंमआसन् । इडा । सुवः । इडा ॥ हाउ(३)वा । त्रिधातुरर्कोरजसोविमानः ।

इडा । सुवः । इडा ॥ हाउ(३)वा । अजस्रंज्योतिर्हविरस्मिसर्वम् ।

इडा । सुवः । इडा ॥ ( दी० १९ । प० २० । मा० २१ )२ ( नं । २०८ )

( १२५।१ ) ॥ अग्नेरिलांदं पश्चानुगानम् । अग्निस्त्रिष्टुबग्निः (तत्र तृतीयमिदम्) ॥

हाउ(३) । पात्यग्निर्विपोअग्रंपदंवेः । हाऽ३१उवाऽ२३ । सूऽ२३४वाः ।

इह । हाऽ३१उवाऽ२३ । ज्योऽ२३४तीः ॥ हाउ(३) । पातियह्वश्चरणꣳसूरियास्या ।

हाऽ३१उवाऽ२३ । सूऽ२३४वाः । इह । हाऽ३१उवाऽ२३ । ज्योऽ२३४तीः ॥ हाउ(३) ।

पातिनाभासप्तशीर्षाणमाग्निः । हाऽ३१उवाऽ२३ । सूऽ२३४वाः । इह । हाऽ३१उवाऽ२३ ।

ज्योऽ२३४तीः ॥ हाउ(३) । पातिदेवानामुपमादमार्ष्वः । हाऽ३१उवाऽ२३ । सूऽ२३४वाः ।

इह । हाऽ३१उवाऽ२३ । ज्योऽ२३४तीः ॥ ( दी० २८ । प० २८ । मा० ३२ )३( डा । २०९ )

---

*॥ अस्य मूलं न ऋक् अपि तु स्तोभः स चैषः—

हु ॥

---

[ साम-तन्त्र-सूत्राणि ][२०७]१ ( पृथक् सूत्राणि न सन्ति ) [२०९]३ ( पृथक् सूत्राणि न सन्ति )

१२६ इन्द्रं नरो नेमधिता० । ( ऋ० ७।२७।१, स०, ३१८; ग्रा. गे. ५८० )

वामदेवो गौतमः । अग्निः । पंक्तिः । ( न ऋग्वेदीयः )

१२७ आजन्त्यग्ने समिधान दीदिवो जिह्वा चरत्यन्तरासनि ।
स त्वं नो अग्ने पयसा वसुविद्रयिं वर्चो दृशेदाः ॥ ६१५ ॥

---

( १२६।१ ) ॥ अग्नेरिलांदं पञ्चानुगानम् । ( तत्रचतुर्थमिदम् ) ॥

इयाऽ२ । ( त्रिः ) । इयाहाउ । (त्रिः ) । इन्द्रन्नरो । नेऽ३माधि । ताहवन्ताइ ।
हवन्तेऽ३ । हुँ२हुँ२हुँ२हुँ२हुँ२ । ( द्वेत्रिः ) ॥ हवन्ते । ( त्रिः )॥ यत्पारियाः ।
युनज । ताइधियस्ताः । धियस्ताऽ३ः । हुँ२हुँ२हुँ२हुँ२हुँ२ । (द्वे त्रिः ) । धियस्ताः । ( त्रिः)॥
शूरोनृषा । ताऽ३श्रव । सश्वकामाइ । चकामेऽ३ । हुँ२हुँ२हुँ२हुँ२हुँ२ । (द्वेत्रिः ) ।
चकाम । (त्रिः )॥ आगोमताइ । व्रजेभ । जातुवन्नाः । तुवन्नाऽ३ः ।
हुँ२हुँ२हुँ२हुँ२हुँ२ । (द्वेत्रिः ) । तुवन्नः । ( त्रिः ) । इयाऽ२ । ( त्रिः ) । इयाहाउ । (द्विः ) ।
इयाऽ३हाउ । वा ॥ ए । व्रतमेसुवरेशकुनः ॥ ( दी० ५१ । प० ६३ । मा० २६ )४ ( गू । २१० )

( १२७।१ ) ॥ अग्निः पंक्तिरिन्द्रः ॥

आजाओहोहोहाइ । त्यग्नेसमिधानादीऽ१दिवाऽ२ः ॥ जिह्वाओहोहोहाइ ।
चरत्यंताराऽ१सानीऽ२ ॥ सत्वाओहोहोहाइ । नोअग्नेपयसावसूऽ३वीत् ॥
रयिंवर्चोदृशोहोऽ३ । हिंमाऽ२ । दा । औऽ३होवा । होऽ५इ । डा ॥

( दी० १३ । प० १२ । मा० १० )५ ( ठौ । २११ )

( १ ) ×॥ देवव्रतानि त्रीणि ( रौद्रं पूर्वं, वैश्वदेवं तृतीयम्, वैश्वदेवे वा पूर्वं, रौद्रं तृतीयम् ) । द्वयो रुद्रोऽनुष्टुप् रुद्रः । तृतीयस्य विश्वेदेवा अनुष्टुविन्द्रः रुद्रः ॥

अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वःपताइ । धनपताऽ२इ ।
नाऽ२माः ॥ मन्युनावृत्रहासूर्येणस्वराड्यज्ञेनमघवादक्षिणास्यप्रियातनूराज्ञाविशंदाधार ।
वृषभस्त्वष्टावृत्रेणशचीपतिरन्नेनगयःपृथिव्यासृणिकोग्निनाविश्वभूतम ।
भ्यभवोवायुनाविश्वाःप्रजाअभ्यपवथावषट्कारणाद्धिभाक्सोमेनसोमपाःसमित्यापरमेष्ठी ।
येदेवादेवाः । दिविषदः । स्थतेभ्योवोदेवादेवेभ्योनमः । येदेवादेवाः ।

---

[साम-तन्त्र-सूत्राणि] [२१०]४[२११]५ ( पृथक् सूत्राणि न सन्ति )

अन्तरिक्षसदः । स्थतेभ्योवोदेवादेवेभ्योनमः । येदेवादेवाः । पृथिवीषदः ।
स्थतेभ्योवोदेवादेवेभ्योनमः । येदेवादेवाः । अप्सुषदः । स्थतेभ्योवोदेवादेवेभ्योनमः ।
येदेवादेवाः । दिक्षुसदः । स्थतेभ्योवोदेवादेवेभ्योनमः । येदेवादेवाः । आशासदः ।
स्थतेभ्योवोदेवादेवेभ्योनमः । अवज्यामिवधन्वनोवितेमन्युंनयामसिमृडतान्नइह ॥ अस्मभ्यम् ।
इडाऽ२३भा ॥ यइदंविश्वंभूतम् । युयोऽ३आउ । वाऽ२३ ॥ नाऽ२३४माः ॥

(दी० १२६ । प० ३७ । मा० ३२ )६( खा । २१२ )

( २ )

अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वःपताइ । धनपताऽ२इ ।
नाऽ२माः ॥ नमउत्ततिभ्यश्चोत्तन्वानेभ्यश्चनमोनीषंगिभ्यश्चोपवीतिभ्यश्चनमोस्यद्भ्यश्चप्र ।
तिदधानेभ्यश्चनमःप्रविध्यद्भ्यश्चप्रव्याधिभ्यश्चनमःत्सरद्भ्यश्चत्सारिभ्यश्चनमःश्रि ।
तेभ्यश्चश्राइभ्यश्चनमस्तिष्ठद्भ्यश्चोपतिष्ठद्भ्यश्चनमोयतेचवियतेचनमःपथेचविपथायच ।
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह ॥ अस्मभ्यम् । इडाऽ२३भा ॥
यइदंविश्वंभूतम् । युयोऽ३आउ । वाऽ२३ ॥ नाऽ२३४माः ॥

( दी० २६ । प० १९ । मा० १५ )७( घु । २१३ )

( ३ )

अधिप । ताइ । मित्रप । ताइ । क्षत्रप । ताइ । स्वःपताइ । धनपताऽ२इ ।
नाऽ२माः । नमोन्नायनमोन्नपतयएकाक्षायचावपन्नादायचनमोनमः ।
रुद्रायतीरसदेनमःस्थिरायस्थिरधन्वनेनमःप्रतिपदायचपटरिणेचनमस्त्रियंबकायचक ।
पर्दिनेचनमआश्रायेभ्यश्चप्रत्याश्रायेभ्यश्चनमःकन्येभ्यश्चविरिम्फेभ्यश्चनमःसंवृतेचविवृतेच ।
अवज्यामिवधन्वनोवितेमन्युन्नयामसिमृडतान्नइह ॥ अस्मभ्यम् । इडाऽ२३भा ॥
यइदंविश्वंभूतम् । युयोऽ३आउ । वाऽ२३ ॥ नाऽ२३४माः ॥

( दी० ३५ । प० १९ । मा० १६ )८( भू । २१४ )

× एतेषां षष्ठादि त्रयाणां मूलानि न ऋचः अपि तु स्तोभाः, ते चैते—

अधिपते । अधि । पते । मित्रपते । मित्र । पते । क्षत्रपते । क्षत्र ।
पते । स्वःपते । स्वाऽ३रिति । पते । धनपते । धन । पते । नमः ।
मन्युना । वृत्रहा । वृत्र । हा । सूर्येण । स्वराट् । स्व । राट् । यज्ञेन ।
मघवा । दक्षिणा । अस्य । प्रिया । तनूः । राज्ञा । विशम् । दाधार ।

[साम-तन्त्र-सूत्राणि][२१२]६ दे विवृ साम्यो वा ते साः १३.१.१०; भ्रि यु जाम्य ओष्ठ्यवति १३.५.५; यचु यि १३.८.९; [२१३]७[२१४]८ ( पृथक् सूत्राणि न सन्ति ).

वृषभः। त्वष्टा । वृत्रेण । शचीपतिः । शची । पतिः । अन्नेन । गयः ।
पृथिव्या । सुणिकः । अग्निना । विश्वम् । भूतम् । अभि । अभवः ।
वायुना । विश्वाः । प्रजाः । प्र । जाः । अभि । अपवथाः । वषट्कारेण ।
वषट् । कारेण । अर्द्धभाक् । अर्द्ध । भाक् । सोमेन । सोमपाः । सोम ।
पाः । समित्या । सम् । इत्या । परमेष्ठी । परमे । स्थी । ये । देवाः ।
देवाः । दिविषदः । दिवि । सदः । अन्तरिक्षसदः । अन्तरिक्ष । सदः ।
पृथिवीषदः । पृथिवी । सदः । अप्सुषदः । अप्सुषदः । अप्सु । सदः ।
दिक्षुसदः । दिक्षु । सदः । आशासदः । आशा । सदः । स्थ । तेभ्यः ।
वः । देवाः । देवेभ्यः । नमः । अव । ज्याम् । इव । धन्वनः । वि ।
ते । मन्युम् । नयामसि । मृडताम् । नः । इह । अस्मभ्यम् । यः । इदं ।
विश्वम् । भूतं । युयां । नमः॥६॥ नमः । उत्ततिभ्यः । उत् । ततिभ्यः ।
च । उत्तन्वानेभ्यः । उत् । तन्वानेभ्यः । च । नमः । नीषङ्गिभ्यः ।
नी । सङ्गिभ्यः । च । उपवीतिभ्यः । उप । वीतिभ्यः । च । नमः ।
अस्यद्भ्यः । च । प्रतिदधानेभ्यः । प्रति । दधानेभ्यः । च । नमः ।
प्रविध्यद्भ्यः । च । प्रव्याधिभ्यः । प्र । व्याधिभ्यः । च । नमः । त्सरभ्यः ।
च । त्सारिभ्यः । च । नमः । श्रितेभ्यः । च । श्रायिभ्यः । च । नमः ।
तिष्ठद्भ्यः । च । उपतिष्ठद्भ्यः । उप । तिष्ठद्भ्यः । च । नमः । यते । च ।
वियते । वि । यते । च । नमः । पथे । च । विपथाय । वि । पथाय । च ॥७॥
नमः । अन्नाय । नमः । अन्नपतये । अन्न । पतये । एकाक्षाय । एक । अक्षाय । च ।
अवपन्नादाय । अव । पन्नादाय । च । नमः । नमः । रुद्राय । तीरसदे ।
तीर । सदे । नमः । स्थिराय । स्थिरधन्वने । स्थिर । धन्वने ।
नमः । प्रतिपदाय । प्रति । पदाय । च । पटरिणे । च । नमः । त्र्यम्बकाय । त्रि । अम्बकाय ।
च । कपर्दिने । च । नमः । आश्रायेभ्यः । च । प्रत्याश्रायेभ्यः । प्रति ।
आश्रायेभ्यः । च । नमः । संवृते । सम् । वृते । च । विवृते । वि । वृते । च ॥(स्तोभपदपाठ २१५)

वामदेवो गौतमः । अग्निः । पंक्तिः । ( न ऋग्वेदीयः)

८ वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः ।
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः । ॥ ६१६ ॥

९ अभि त्वा शूर नोनुमः० । ( ऋ० ७ । ३२ । २२; सा. २३३;६८०; ग्रा. गे.३७७-३७८ )

० सं ते पयांसि । ( ऋ० १।९१।१८; सा. ६०३; आ. गा. १७५ )

---

२८।१ ) ॥ ऋतुष्ठायज्ञायज्ञीयम् । प्रजापतिर्बृहत्यृतवः ॥

ऽ५सन्तः । ईऽ३न्नूऽ३रन्तायाः ॥ ग्रीष्मइन्नुराऽ१न्तीऽ२याः । वर्षाण्यनुशाऽ२ ।
॥ राऽ३दाः ॥ हेमन्ताशिशिरइन्नुराऽ२न्तियाउ ॥ वाऽ२३४५ ॥

( दी० ३ । प० ८ । मा० ८ )९( डै । २१५ )

२९।१ ) ॥ अजितस्य जितिस्साम । अजितो बृहतीन्द्रः प्रजापतिर्बृहतीन्द्रेशानौ ॥

उ(३) । हुप् । (त्रिः) । बिबिबिबीऽ२ । ( त्रिः ) । हीऽ२ । ( त्रिः ) ।
उ(३)वा । अभित्वाशूरनोनुमोहस् ॥ अदुग्धाइवधेनवोहस् ॥
ानमस्यजगतःस्वर्दृशऽहस् ॥ ईशानमिन्द्रतस्थुषोहस् । हाउ(३) ।
प् । ( त्रिः ) । बिबिबिबीऽ३ । (त्रिः) । हीऽ२ । ( त्रिः ) ।
उ(३)वा ॥ एअस् । एफट् । एमृस् । एहस् । ईऽ२३४५ ॥

( दी० २२ । प० ३१ । मा० २८ )१०( ग्रै । २१६ )

३०।१ ) ॥ सोम व्रतम् । सोमस्त्रिष्टुप्सोमः ॥

ऽ२ । ( त्रिः ) । सन्तेपया । सीऽ३समू । यन्तुवाजाः ॥ संवृष्णिया ।
ीऽ३अभि । मातिषाहाः ॥ आप्यायमा । नोऽ३अमृ । तायसोमा ॥
देविश्रवा । सीऽ२उत्त । मानिधिष्वा । ईऽ२ । ( द्विः ) । ईऽ२ ।
ाऽ२३४औहोवा ॥ हऽ ॥

( दी० ११ । प० २० । मा० ६ )११( हू । २१७ )

---

[साम-तन्त्र-सूत्राणि][२१५]९[२१६]१०[२१७]११ ( पृथक् सूत्राणि न सन्ति )

नारायणः । पुरुषः । अनुष्टुप् । ( ऋ० १०।९०।१,४ )

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ६१७ ॥
त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
ततो विष्वङ् व्यक्रामत्साशनानशने अभि ॥ ६१८ ॥

१३१ अक्रान्त्समुद्रः प्रथमे० । ( ऋ० ९।९७।४०;सा. ५२९,१२५३; ग्रा. गे. १०३० )

१३२ सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिंꣳसर्वतो वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ६१७ ॥

१३३ त्रिपादूर्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः ।
तथा विष्वङ् व्यक्रामदशनानशने अभि ॥ ६१८ ॥

---

( १३१।१ ) ॥ दीर्घतमसोऽर्कः । दीर्घतमास्त्रिष्टुप्सोमः सूर्यो वा ॥

आयाउ । ( त्रिः ) । अक्रान्त्समूद्रःप्रथमाइविधर्मान् । विधर्मान् । (द्विः ) । जनयन्प्रजाभुवनास्यगोपाः । स्यगोपाः । (द्विः) । वृषापावित्रेअधिसानोअव्याइ । नोअव्याइ । ( द्विः ) । आयाउ । ( त्रिः ) । बृहत्सोमोवावृधेसुवानोअद्राइ । नोअद्राइ । नोअद्राऽ२१उवाऽ२३ ॥ एऽ३ । धस्वानोअद्रीऽ२३४५ः ॥

( दी० २० । प० २० । मा० २८ )१२( मै । २१८ )

द्वादश पञ्चमः खण्डः ॥ ५ ॥

(१३२।१ ) ॥ पुरुषव्रतानि पञ्च । पुरुषोऽनुष्टुप्पुरुषः ॥

उहुवाहाउ । ( त्रिः ) । सहस्रशीर्षाःपुरूऽ२३षाः ॥ सहस्राक्षःसहस्राऽ२३पात् ॥ सभूमिंꣳसर्वतोवाऽ२३त्वा ॥ अत्यतिष्ठद्दशांगूऽ२३लाम् । उहुवाहाउ । ( द्विः ) । उहुवाऽ३हाउ । वाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥ ( दी० ६ । प० १२ । मा० १० )१३( खौ । २१९ )

( १३३।१ )

उहुवौहोवाऽ२ । (त्रिः) । त्रिपादूर्ध्वउदैत्पुरूऽ२३षाः ॥ पादोस्येहाभवत्पूऽ२३नाः ॥ तथाविष्वाङ्व्यक्राऽ२३मात् ॥ अशनानशनेआऽ२३भी । उहुवौहोवाऽ२ । ( द्विः ) । उहुवौ । होऽ२ । वाऽ२३४ । औहोवा । ईऽ२३४डा । उहुवौहोवाऽ२ । ( द्विः ) । उहुवौ । होऽ२ । वाऽ२३४ । औहोवा । सूऽ२३४वाः । उहुवौहोवाऽ२ । ( द्विः ) । उहुवौ । होऽ२ । वाऽ२३४ । औहोवा ॥ ऊऽ२३४५ ॥ ( दी० ३७ । प० २८ । मा० ६)१४( जू । २२० )

---

[साम-तन्त्र-सूत्राणि ][२१८]१२[२२०]१४ (पृथक् सूत्राणि न सन्ति) [२१९]१३ वात् ११.१०.२;

नारायणः । पुरुषः । अनुष्टुप् । ( ऋ० १०।९०।२-३ )

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६१९ ॥

एतावानस्य महिमातो ज्यायाँश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥६२०॥

१३४ पुरुष एवेदꣳसर्वं यद्भूतं यच्च भाव्यम् ।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ६१९ ॥

१३५ तावानस्य महिमा ततो ज्यायाँश्च पूरुषः ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ ६२० ॥

---

( १३४।१ )

इयौहोवाऽ२ । (त्रिः) । पुरुषएवेदꣳसाऽ२३र्वाम् ॥ यद्भूतंयच्चभावाऽ२३याम् ॥
पादोस्यसर्वाभूताऽ२३नी ॥ त्रिपादस्यामृतंदाऽ२३इवी । इयौहोवाऽ२ । (द्विः) ।
इयौ । होऽ२ । वाऽ२३४ । औहोवा । ईऽ२३४डा । इयौहोवाऽ२ । ( द्विः ) ।
इयौ । होऽ२ । वाऽ२३४ । औहोवा । ज्योऽ२३४तीः । इयौहोवाऽ२ । (द्विः) ।
यौ । होऽ२ । वाऽ२३४ । औहोवा ॥ ईऽ२३४५ ॥ ( दी० ३७ । प० २८ । मा० ५ )१५( ञु । २२१)

( १३५।१ )

हाउ(३) । तावानस्य । महाऽ२३इमाऽ३ ॥ हाउ(३) । ततोज्यायाꣳश्चपूरुऽ२३षाऽ३ः ॥
हाउ(३) । उतामृतत्वस्येशाऽ२३नाऽ३ः ॥ हाउ(३) । यदन्नेनातिरोहाऽ२३तीऽ३ ।
हाउ(३)।वाऽ३ ॥ इट्स्थिइडाऽ२३४५ ॥ ( दी० २३ । प० १२ । मा० १९ )१६( ठो । २२२ )

---

[साम-तन्त्र-सूत्राणि][२२१]१५[२२२]१६ ( पृथक् सूत्राणि न सन्ति )

नारायणः । पुरुषः । अनुष्टुप । ( ऋ० १०।९०।५ )

तस्माद्विराळजायत विराजो अधि पूरुषः ।

स जातो अत्यरिच्यत पश्चाद्भूमिमथो पुरः ॥ ६२१ ॥

१३६ ततो विराडजायत विराजो अधि पूरुषः ।

स जातो अत्यारेच्यत पश्चाद्भूमिमथो पुरः ॥ ६२१ ॥

१३७ कया नश्चित्रः० । ( ऋ० ४।३१।१; सा. १६९, ६८२; ग्रा. गे. ३०८-३०९ )

वामदेवो गौतमः । द्यावापृथिवी । त्रिष्टुप् । ( न ऋग्वेदीयः )

१३८ मन्ये वां द्यावापृथिवी सुभोजसौ ये अप्रथेथाममितमभि योजनम् ।

द्यावापृथिवी भवतꣳस्योने ते नो मुञ्चतमꣳहसः ॥ ६२२ ॥

---

( १३६।१ )

हाउ(३)वा । ततोविराडजायत॥ हा(३)वा । विराजोअधिपूरुषः॥ हाउ(३)वा ।
सजातोअत्यरिच्यत॥ हाउ(३)वा । पश्चाद्भूमिमथोपुरः । हाउहाउहाउवाऽ३॥ ई२३४५ ॥

( दी० ११ । प० १० । मा० १९ )१७( क्रो । २२३ )

(१३७।१) ॥ पुरुषव्रते द्वे, पश्चानुगानश्चैकानुगानञ्च । पुरुषोगायत्रीश्वरपुरुषः, विश्वेदेवा वा। (तत्रेदं द्वितीयमेकानुगानम् )॥

हाउ(३) । अस्मीनस्मिन् । (त्रिः) । नृम्णाइनृम्णम् । (त्रिः) । निधाइमाहे । (त्रिः) ।
कयानश्चित्रऽ३आभूऽ१वाऽ२त्॥ ऊतीसदावृऽ३धाःसाऽ१खाऽ२॥ कयाशचिष्ठऽ३यावाऽ१र्त्ताऽ२३॥
हाउ(३) । अस्मीनस्मिन् । (त्रिः) । नृम्णाइनृम्णम् । (त्रिः) । निधाइमाहे । (द्विः)। निधाऽ२३इ।
माऽ२ । हाऽ२३४ । औहोवा॥ सुवर्ज्योतीऽ२३४५ः॥ (दी० १४ । प० २७ । मा० ३३ )१८(थि।२२४)

( १३८।१ ) ॥ द्यावापृथिव्योः ( द्यौर्व्रतम् ) । द्योःज्योतिष्मती जगती द्यावापृथिव्यौ ॥

हुवाइ । (त्रिः) । रूपम् । मन्येवांद्यावापृथिवीसुऽ३भोजाऽ१साऽ२उ ॥
येअप्रथेथाममितमाभिऽ३योजाऽ१नाऽ२म् ॥ द्यावापृथिवीभवऽ३ताꣳस्योऽ१नाऽ२इ ॥
तेनोमुञ्चतऽ३माꣳहाऽ१साऽ२ः । हुवाइ । ( त्रिः ) । रूपाऽ२ । वाऽ२३४औहोवा ॥
ए । रूपम् । ( द्वेत्रिः) ॥

( दी० २३ । प० १९ । मा० १६ )१९( हु । २२५ )

---

[ साम-तन्त्र-सूत्राणि][२२३]१७[२२४]१८[२२५]१९ ( पृथक् सूत्राणि न सन्ति )

वामदेवो गौतमः । इन्द्रः । अनुष्टुप् । ( न ऋग्वेदीयः )

१३९ हरी त इन्द्र श्मश्रूण्युतो ते हरितौ हरी ।
तं त्वा स्तुवन्ति कवयः परुषासो वनर्गवः ॥ ६२३ ॥

॥ वामदेवो गौतमः । इन्द्रः । अनुष्टुप् । ( न ऋग्वेदीयः )

१४० यद्वर्चो हिरण्यस्य यद्वा वर्चो गवामुत ।
सत्यस्य ब्रह्मणो वर्चस्तेन मा सꣳसृजामसि ॥ ६२४ ॥

( १३७।१ ) ॥ त्रीणि लोकानां व्रतानि दिवोऽन्तरिक्षस्य पृथिव्याः । अन्तरिक्षं गायत्रीन्द्रः ।
( तत्रेदं द्वितीयमन्तरिक्षस्य व्रतमिति ) ॥

वाक् । ( द्विः ) । वागीयम् । कयानश्चित्रऽ३आभूऽ१वाऽ२त् ॥ ऊतीसदावृऽ३धाःसाऽ१खाऽ२ ॥
कयाशचिष्ठऽ३यावाऽ१र्त्ताऽ२ ॥ वाक् । (द्विः) । वागीयाऽ२ । वाऽ२३४औहोवा ॥
ए । अन्तरिक्षेसलिलꣳलालायाऽ२३४५ ॥ (दी० १३ । प० १२ । मा० ८ )२०( ठै । २२६ )

( १३८।१ )॥ विपरीते द्वे, तत्र द्वितीयमिदं पृथिवीव्रतम् । पृथिवीज्योतिष्मतीजगतीद्यावापृथिव्यौ ॥
प्रतिष्ठासिप्रति । ष्ठा । ( द्वेत्रिः ) । वर्चोसिमनोसिएहीं । मन्येवांद्यावापृथिवीसुभोजसावैहीं ॥
येअप्रथेथाममितमभियोजनामैहीं ॥ द्यावापृथिवीभवतꣳस्योनाएहीं ॥
तेनोमुञ्चतमꣳहसाएहीं । प्रतिष्ठासिप्रति । ष्ठा । (द्वेत्रिः) । वर्चोसिमनोसिएहीऽ३ ।
हाउवा ॥ ए । भूतम् । ( द्वेत्रिः ) ॥ ( दी० ४७ । प० २५ । मा० ९ )२१( ओ।२२७ )

( १३९।१ ) ॥ ऋष्यस्यसाम व्रतम् । कश्यपोऽनुष्टुबिन्द्रः ॥
हरीतइन्द्रश्मश्रूणी ॥ उतोतेहरिताऽ१उहाऽ३री ॥ तन्त्वास्तुवन्तिकाऽ३ ।
वायाः ॥ परुषासोवनाऽ३ । गावाः ॥ ऋश्यासइन्द्रशुङ्ङितिमघवन्निन्द्रशुङ्ङितिशुङ्ङितिप्रशु-
ङ्ङितीन्द्रस्तसरपूताऽ२३४५ः ॥ ( दी० ९ । प० ७ । मा० ६ )२२( धू । २२८ )

॥ दश षष्ठः खण्डः ॥ ६ ॥

इति (ग्रामे) आरण्यकगाने पञ्चमस्यार्द्धः प्रपाठकः ॥

( १४०।१ ) ॥ दिशां व्रतम् दृशानुगानम् । दिशोऽनुष्टुप् आत्मा । ( कश्यपगायत्रीन्द्रः )॥
हाउ(३) । अहमन्नम् । ( त्रिः ) । अहमन्नादो । हमन्नादो । हमन्नादो ।
हंविधारयो । (द्विः) । हंविधारयः । हाउ(३) । यद्वर्चोहिरण्य । स्या ॥ यद्वावर्चोगवामु ।
ता ॥ सत्यस्यब्रह्मणोव । चाः ॥ तेनमासꣳसृजाम । साइ । हाउ(३) ।
अहमन्नम् । (त्रिः) । अहमन्नादो । हमन्नादो । (द्विः) । हंविधारयो । (द्विः) । हंविधारयः ।
हाउ(३) । वा ॥ ए । अहमन्नमहमन्नादोहंविधारयः । (द्वेत्रिः) । ए ।
अहꣳसुवर्ज्योतीऽ२३४५ः ॥ ( दी० ५३ । प० ३९ । मा० २६ )१( द्व । २२९ )

[ साम-तन्त्र-सूत्राणि][२२६]२०[२२७]२१ [२२८]२२ [२२९]१( पृथक् सूत्राणि न सन्ति )

